# व्युत्पत्तिवादः





टीकाकार

**शिवदत्त मिश्र**

શ્રી:

વીરશૈવમહાચાર્ય શ્રી જગદ્ગુરુ
૧૦૦૮ શ્રી વિશ્વેશ્વર શિવાચાર્ય
મહાસ્વામિ જંગમવાડી પૂજ્યપાદા-
નાં કરકમલયોઃ આદરં સમર્પિ-
તોઽયં ગ્રન્થઃ

જ્વાલાપ્રસાદ ગૌડેન
૩૦।૫।૭૫

श्रीः

श्रीमन्महामहोपाध्याय तर्कशास्त्रसाम्राज्यधुरन्धरविद्वद्वर
श्रीमद्गदाधरभट्टाचार्यप्रणीतः
प्रत्ययार्थनिरूपणपरः

# व्युत्पत्तिवादः

( शब्दखण्डग्रन्थः )

वाराणसेय राजकीयसंस्कृतमहाविद्यालय न्यायशास्त्रप्रधानाध्यापक
पं० "शिवदत्तमिश्र" विरचित "दीपिका" टीकासमलङ्कृतः

श्री संन्यासिसंस्कृतमहाविद्यालयप्रधानाचार्य
पं० श्री ज्वालाप्रसादगौड़ विरचितटिप्पण्या-भूमिकया च सहितः
तेनैव संशोधितश्च ।

भारतीय विद्या प्रकाशन
वाराणसी

# श्री गुरुवर्याणां संक्षिप्तं जीवनवृत्तम्



सकलशास्त्रपारङ्गतत्वेऽपि विशेषतस्तर्कशवृन्दवरवारणवारणभुवः ईश्वरप्रणिधानात् समाहितमनस्काः सन्तः प्रतिदिनं गंगास्नानेन आत्मानं सफलयन्तः श्रीमदन्नपूर्णाविश्वनाथयोः प्रदक्षिणापरिक्रमाक्रमेण च जगज्जननीं भगवतीं भवानीं भवानीपतिञ्च बाबाविश्वनाथं समाराधयन्तो महामहोपाध्यायकल्पा अविकल्पाः श्रीमत्पूज्यपादाः प्रातः स्मरणीयाः १००८ पं० श्रीशिवदत्तमिश्रमहोदया अस्माकं गुरुवराः पूज्यपादानां प्रातःस्मरेण्यानां महामहोपाध्यायानां श्री पं० प्रभुदत्तमिश्रमहाभागानां साक्षात् साकारवेदमूर्त्तीनां गृहे प्रातः स्मरणीयायाः श्री "नान्ही" देव्या दक्षिणकुक्षितो द्वितीयपुत्रत्वेन जन्म लेभिरे।

एतेषामग्रजा महामहोपाध्यायाः पं० श्री विद्याधरशास्त्रिणो गौड़-पादा आसन्। इमेऽपि साक्षात् साकारवेदमूर्त्तयः सन्तः काशीहिन्दू-विश्वविद्यालये वेद-धर्मशास्त्रविभागाध्यक्षपदमलङ्कुर्वाणा एव दृष्टि-गोचरतां गच्छन्ति स्म। एतेषामनुजाश्च पं० देवदत्तशर्मगौड़महोदया आयुर्वेदशास्त्रविचारविलक्षणा विद्वांस आसन्।

महानुभावाः श्रीगुरुवरा भूतपूर्ववाराणसेयराजकीय-संस्कृतमहा-विद्यालये न्यायशास्त्रप्रधानाध्यापकाः सन्तोऽनेकान् पं० रामजी शास्त्रि, केशवद्विवेदि, श्री दुर्गाधर झा प्रभृतिछात्रान् स्वकीयाऽध्यापनकौशलेन सन्तोषयन्तः, स्वाश्रमे विद्याभवनेऽपि अहर्निशमनिशमविच्छिन्ना-ऽध्यापनकार्यभारं तथा तथाविधञ्च प्रयासायासभारञ्चोद्वहन्तः १९७१ ईशवीये फरवरीमासस्याऽन्तिमे दिवसे गंगाधरस्याऽङ्गभूषणतां गताः।

अस्या भारतभूमेः स्वातन्त्र्यप्रदानप्रयोजकत्वेन परमसाहाय्यकारी, विदेशतः समागतानां म्लेच्छभाषाभाषिणां तथा म्लेच्छपदाभिधेयानामंग्रेजानां दुर्दर्पखर्वजनवर्गविदारणोत्कत्वेन तेषां हृदयविदारी, प्रायः १९३२ ईशवीये वर्षे धीर-वीर-गम्भीर भगतसिंह, सुखदेव, निरूपितेन साहित्येन स्वर्गप्रस्थानकारी, महान् क्रान्तिकारी "राजगुरु" रपि श्री गुरुवराणामन्यतमोऽयं प्रधानशिष्य आसीत्।

एतेषां पूज्यतमानां विषये किमधिकं वयं ब्रूमहे एतेषां साधारणं सफलञ्च जीवनम्, जीवननिरूपिता च सरसा सरलता अद्यापि आस्माकीनम् अन्येषाञ्च सर्वेषां तत्स्वभावविदुषां विदुषाञ्च मानसं दुनोति।

अस्माकं भ्रातृपादाः श्रीदीनानाथमिश्रगौड़महाभागास्तेषां गुरुवर्याणां जीवनकथां श्रावणप्रत्यक्षविषयीकुर्वाणाः सन्तः साश्रुनेत्रा भवन्ति इत्यहं पौनः पुन्येन प्रत्यक्षीकरोमि। एतान् प्रति गुरुवर्याणां महदेव वात्सल्यमासीत्। एतद्वात्सल्यकारणबन्धनग्रस्ता गुरुवरा एतेभ्य एव "वसीयत" पत्रमपि लिखितवन्त इति न तिरोहितमस्ति केषामपि विदुषाम्। एतेषामेव महताऽनुग्रहेण महता परिश्रमेण चाऽयं ग्रन्थो गुरुवर्याणां स्वर्गगमनानन्तरं समाप्तिमगात् प्राकाश्यञ्च गतः विशेषश्चाऽचिरेणैव कालेन प्राकाश्यं नीयमाने "गुरुस्मृति" ग्रन्थेऽवलोकनोयः।

—ज्वालाप्रसादगौड़ः

श्रीः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
ज्वालाप्रसादस्तनुते किञ्चिद्द्वै विदुषां मुदे ॥

पदार्थद्वयसंसर्गस्तु आकाङ्क्षाभास्य एवेति स्थितम् । आकाङ्क्षा च "यत्पदेन यस्याननुभावकता भवेत् , आकाङ्क्षा" इत्युक्तम् । तथा च यत्पदे यत्पदविरहप्रयुक्ताऽन्वयबोधजनकत्वाभावस्तत्पदे तत्पदवत्त्वमाकाङ्क्षा इत्यर्थः । यत्पदविरहश्च स्वाव्यवहितपूर्वत्व-स्वाव्यवहितोत्तरत्वाऽन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकः । तत्पदवत्ता चोक्तान्यतरसम्बन्धेन ।

अस्ति घटमित्यादौ घटपदेऽम्पदविरहप्रयुक्ताऽऽधेयतासम्बन्धेन घटवत्कर्मत्वमिति बोधजनकत्वाभाव इति अव्यवहितपूर्वत्वसम्बन्धेन घटपदेऽम्पदवत्त्वम्, अव्यवहितोत्तरत्वसम्बन्धेनाऽम्पदे घटपदवत्त्वं वाऽऽकाङ्क्षा । प्रयुक्तत्वं च कारणाभावात् कार्याभाव इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः । स्वप्रतियोगिजन्यप्रतियोगिकत्वं वा तत् । स्वं-कारणाभावः । भवति चाऽन्यतरघटकाऽव्यवहितपूर्वत्वसम्बन्धेन घटपदनिष्ठस्याऽम्पदविरहप्रयुक्तो घटवत्कर्मत्वमितिबोधाभाव इति तादृशान्वयबोधे घटपदेऽम्पदवत्त्वम् । विनिगमनाविरहेणाऽव्यवहितोत्तरत्वसम्बन्धेनाऽम्पदनिष्ठस्य घटपदविरहप्रयुक्तो घटवत्कर्मत्वमितिबोधाभाव इति अम्पदे घटपदवत्त्वमपि आकाङ्क्षा ।

नचैवमपि यत्र कर्मत्वपदेऽम्पदत्वभ्रमः, तत्र घटः कर्मत्वमित्यादौ अव्यवहितपूर्वत्वसम्बन्धेन घटपदे कर्मत्वपदवत्त्वस्य, अव्यवहितोत्तरत्वसम्बन्धेन कर्मत्वपदे घटपदवत्त्वस्य च घटवत्कर्मत्वमितिभेदान्वयबोधे आकाङ्क्षापत्तिः । तादृशबोधाभावस्य घटपदे कर्मत्वपदवत्त्वव्यतिरेकप्रयुक्तत्वादिति वाच्यम् । यादृशसंसर्गकयादृशपदत्वावच्छिन्नविशेष्यतानिरूपितयादृशपदत्वावच्छिन्नप्रकारताकनिश्चयत्वावच्छिन्नविरहप्रयुक्तो यादृशबोधाभावस्तत्पदे तत्पदवत्त्वमाकाङ्क्षात्वमिति भ्रम-प्रमासाधारणनिश्चयत्वस्य विवक्षितत्वान्नापत्तिः । तादृशबोधाभावस्य घटपदे कर्मतापदत्वावच्छिन्नप्रकारताकनिश्चयत्वावच्छिन्नविरहप्रयुक्तत्वाभावात् । निश्चयत्वावच्छिन्नत्वनिवेशाद् 'घटः कर्मत्वं घटम्' इति समूहालम्बनजन्यघटवत्कर्मत्व-

मितिबोधमादाय घटः कर्मत्वमित्यस्य नाकांक्षात्वापत्तिः। एवं स्वप्रतियोगिजन्यस्वमित्यत्रापि स्वप्रतियोगिनिश्चयत्वावच्छिन्नजन्यत्वं निवेशनीयम्।

नचाऽऽकाङ्क्षाज्ञानस्य कारणत्वे मानाभावः। कर्मत्वादिविशेष्यकाऽऽधेयतासंसर्गकघटादिप्रकारकशाब्दबोधे विभक्तिजन्यकर्मत्वाद्युपस्थितेर्हेतुत्वाभ्युपगमादेव "घटः कर्मत्वम् आनयनं कृति"रित्यादौ शाब्दबोधवारणात्। एवं कृत्यादिविशेष्यकाऽनुकूलत्वसंसर्गकाऽऽनयनादिप्रकारकशाब्दबोधे"ति" इत्यादिप्रत्ययजन्यकृत्युपस्थितेर्हेतुत्वोपगमादिति वाच्यम्। अम् घट-अयं घट-घट टा-घटाम् इत्यादौ तथान्वयबोधापत्तेः। विभक्तिजन्यकर्मत्वाद्युपस्थितेः सत्त्वात्। नचैवं घटवत्कर्मत्वमितिबोधे घटमित्यानुपूर्वीविशेष आकाङ्क्षा-एवमानयनानुकूलकृतिमानितिबोधे चाऽऽनयतीत्यानुपूर्वीविशेष आकाङ्क्षेति फलितम्। तथा च घटमानयेत्यादौ धारावाहिकशाब्दबोधापत्तिः। तादृशानुपूर्वीविशेषज्ञानस्य स्वप्रयोज्यतत्तत्पदार्थोपस्थितिद्वारैव हेतुतया शाब्दबोधे जातेऽपि तदात्मकोपस्थितेः सत्वादिति वाच्यम्। असति विषयान्तरसञ्चारादौ धारावाहिकप्रत्यक्षवद् धारावाहिकशाब्दबोधस्यापीष्टत्वात्। अस्तु वाऽनुमितौ समानाकारकसिद्धिरिव समानाकारकशाब्दधीर्विरोधिनीति संक्षेपः।

पदार्थद्वयसंसर्ग आकाङ्क्षया भासते इत्युक्तम्। एतेन पदार्थद्वयसंसर्गे शक्त्यस्वीकारे तस्य शाब्दबोधे भानानुपपत्तिः। वृत्त्युपस्थिता एव पदार्थाः शाब्दबोधे भासन्ते इति नियमात्, इत्यपि निरस्तम्। तत्र वृत्तिपदमाकाङ्क्षाया अप्युपलक्षकम्। प्रातिपदिकपदप्रातिपदिकपदान्तरयोस्तु समभिव्याहाररूपाऽऽकाङ्क्षा। समभिव्याहारश्च पदविशिष्टत्वम्। वै० स्वपूर्वत्वस्वोत्तरत्वाऽन्यतरसम्बन्धेन। अव्यवहितोत्तरत्वनिवेशे तु स्वाव्यावहितपूर्वपदत्व-स्वाव्यवहितपदोत्तरपदत्वाद्यन्यतमसम्बन्धेन। तेन घट-पट-कुड्यान्यानयतीत्यादौ घटपदाव्यवहितोत्तरवर्त्ति-पटपदाव्यवहितोत्तरवर्त्तिकुड्यपदोत्तरत्वसम्बन्धेन। त्याद्यन्ताऽऽनयनादिपदे घटपदवत्त्वमेवाकाङ्क्षेत्यादिक्रमेणेति मथुरानाथः। यथा नीलो घट इत्यादौ स्वन्तनीलपद-स्वन्तघटपदयोः समानविभक्तिकयोः समभिव्याहारः। अत्र विशेषणवाचकपदे विशेष्यवाचकपदसमानविभक्तिकत्वमपेक्षणीयम्। तदुक्तम्—

या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।
प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे॥

तथा च विशेष्यवाचकपदविशिष्टोऽभेद आकाङ्क्षाप्रयोज्यसांसर्गिकविषयतावानिति फलितम्। वै० स्वप्रयोज्यविशेष्यतानिरूपकत्व-स्वविशिष्टपदप्रयोज्यप्रकारतानिरूपकत्वोभयसम्बन्धेन। स्ववैशिष्ट्यञ्च स्वप्रकृतिकविभक्तिसजातीयविभक्तिप्रकृतित्व-स्वाव्यवहितपूर्ववर्त्तित्वान्यतरसं०। एवमावन्तनीलपदाऽऽवन्तघटपदयोः समभिव्याहारः। एवं जसन्तनीलपदजसन्तघटपदयोः समभिव्याहारः। इत्येवं क्रमेण एकविंशति आकाङ्क्षाः संपन्नाः। एवं स्वन्तघटपद-स्वन्तनीलपदयोः समभिव्याहारः। आवन्तघटपदाऽऽवन्तनीलपदयोः समभिव्याहारः। इत्येवंक्रमेण एकविंशति आकाङ्क्षा अपराअपीति बोध्यम्। नीलघट इत्यादि समासस्थले तु नीलपदाव्यवहितोत्तरवर्तिसुबन्तघटपदत्वम्। सुबन्तघटपदाव्यवहितपूर्ववर्तिनीलपदत्वं वेति आकाङ्क्षाद्वयम्। तथा च चतुश्चत्वारिंशदाकाङ्क्षाः संपन्नाः।

ननु वेदाः प्रमाणमित्यादावाकाङ्क्षात्वानुपपत्तिः। जसन्तवेदपदजसन्तप्रमाणपदयोः समभिव्याहारात्। विशेष्य-विशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमादिति चेन्न। विशेषणवाचकपदोत्तरविभक्त्या यत्र संख्याया अविवक्षा तत्रैव तयोः समानवचनकत्वनियमात्। अत्र तु प्रमाणपदोत्तरस्वर्थैकत्वसंख्याया विवक्षिताया प्रमाणपदार्थैकदेशे प्रमाणत्वेऽन्वयः। प्रमाणत्वञ्च प्रमितिकरणत्वम्।

नच पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति व्युत्पत्तिविरोधः। पदजन्यबोधविषयत्वनिष्ठाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावान् पदार्थः। पदार्थैकदेशश्च पदजन्यबोधविषयत्वनिष्ठाऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावान् इति वाच्यम्। पदार्थ इत्यत्र पदार्थे विभक्त्यर्थेतरत्वनिवेशेन विभक्त्यप्रयोज्यप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतासम्बन्धेन पदजन्यपदार्थोपस्थितिः कारणमिति तदर्थात्। स्वाश्रयप्रमितिकरणत्ववत्तासम्बन्धेन प्रमाणे एवैकत्वान्वयाद्वा न कश्चिद् विरोध इत्यपि वक्तुं शक्यते।

अभेदस्य संसर्गविधया भाने विशेषणवाचकपदोत्तरविभक्तिः आकाङ्क्षासम्पत्त्यर्थम्। संपत्तिश्च समानविभक्तिकयोरेव समभिव्याहारः, न तु विरुद्धविभक्तिरहितयोः समभिव्याहारः। यतस्तावद् विरुद्धविभक्तिराहित्यस्य दुर्वचत्वात्। तच्च विरुद्धविभक्तिराहित्यं ग्रन्थे टीकायाञ्च स्फुटीभविष्यति।

अभेदस्तादात्म्यम् । तच्च स्ववृत्त्यसाधारणो धर्मः । भेदविशिष्टान्यत्वमिति यावत् । वै० स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसं० । स्वं भेदः ।

स्तोकं पचतीत्यादौ द्वितीयान्तस्तोकपदपचतिपदयोः समभिव्याहारं आकाङ्क्षा । धात्वर्थविशेषणवाचकपदोत्तरं द्वितीयैव तन्नियामिका । सार्थकप्रत्ययान्तक्रियाविशेषणानां कर्मत्वमित्यनुशासनात् स्तोकः पाक इत्यत्र भावार्थकघञ्प्रत्ययस्य सार्थकत्वाभावेन भावप्रत्ययान्तधात्वर्थविशेषणस्य न कर्मत्वम् । प्रत्यये सार्थकत्वञ्च स्वार्थनिष्ठविषयतानिरूपितप्रकृत्यर्थनिष्ठविषयताप्रयोजकाऽऽकाङ्क्षाशालित्वम् । स्वं सार्थकप्रत्ययः ।

अयं भावः, यः शब्दः शब्दान्तरसहकारेणैव स्व-घटकान्यतरविषयकवृत्तिज्ञानजन्योपस्थितिविषयीभूतयादृशार्थबोधजनकः स शब्दः सार्थकः । पटपाचकाद्याः प्रकृतयः नियमतः शब्दान्तरं प्रत्ययं सहकृत्यैव बोधजनका भवन्ति । एवं सुप्तिङादिप्रत्ययाः अपि नियमत एव प्रकृतिं सहकृत्यैव बोधजनका भवन्ति । तथैव निपाता अपि स्वोपस्थाप्यार्थस्य बोधं नियमतः शब्दान्तरं सहकृत्यैव जनयन्ति इति ते सर्वेऽपि सार्थका भवन्ति । घटमित्यादिवाक्यानि आनयेत्यादिशब्दं सहकृत्य क्वचिदसहकृत्यापि स्वोपस्थाप्यघटीयकर्मत्वादिबोधं जनयन्ति इति घटमित्यादिवाक्ये नातिव्याप्तिः । तथा च शब्दान्तरसहकारेण स्वजन्योपस्थितिजन्यतावच्छेदकयद्रूपावच्छिन्नविषयताकबोधजनकतावच्छेदकानुपूर्वीमत्त्वं सार्थकशब्दत्वमिति भावः । स त्रिविधः प्रकृतिः, प्रत्ययः, निपातश्चेति । शप्-श्यन्-श्नम्-श्नादिविकरणाः—नुमाद्यागमाश्च प्रकृत्यादीनां सहाया अपि न स्वार्थोपस्थितिद्वारा इति न तत्रातिव्याप्तिः । ननु चन्द्रनिभोऽयमित्यादौ निभादिशब्देऽतिव्याप्तिः, निभादिशब्दानामपि शब्दान्तरं सहकृत्यैव स्वोपस्थाप्यसदृशार्थबोधजनकत्वात् । नचेष्टापत्तिः । प्रकृत्याद्यन्यतमस्यैव लक्ष्यत्वादिति चेन्न । समासान्तर्गतस्वार्थबोधकताकान्यत्वेन विशेषणीयत्वात् । नच चन्द्रस्यापि सार्थकशब्दत्वानुपपत्तिः । समासान्तर्गतस्वार्थबोधकत्वादिति वाच्यम् । समासान्तर्गतत्वे सति स्वघटितसमासान्तर्गतत्वनियतस्वार्थबोधकताकं यद्यत् स्वं तदन्यत्वस्य विशेषणीयत्वात् । तदुक्तम्—

शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत् ।
प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा ॥

प्रकृतिलक्षणन्तु—

स्वेतरार्थानवच्छिन्ने यत्स्वार्थस्यावबोधने ।
यच्छब्दनिश्चयो हेतुः प्रकृतिः सा तदर्थिका ॥

अव्यवहितोत्तरत्वसम्बन्धेन यादृशशब्दवत्तानिश्चयः स्वेतरशब्दार्थाविशेषितस्यार्थविषयकशाब्दधीजनकः स तादृशार्थे प्रकृतिः। यथाऽव्यवहितोत्तरत्वसंसर्गेण घटवदम्पदमिति निश्चयः घटपदभिन्नपदार्थाविशेषितघटपदार्थविषयकशाब्दधीजनक इति घटशब्दः प्रकृतिः। अमादिप्रत्ययास्तु स्वेतरप्रकृत्यर्थावच्छिन्नस्यैव स्वार्थकर्मत्वादेर्बोधजनकत्वात्तत्र तत्र नातिप्रसङ्गः। चैत्रः पचति-यजेत इत्यादौ स्वेतरप्रकृत्यर्थानवच्छिन्नस्वार्थसंख्या-वर्तमानकाल - इष्टसाधनत्वादेर्बोधकत्वेऽपि अव्यवहितोत्तरसंसर्गेण सुपदवद्घटपदमित्यादि अव्यवहितोत्तरत्वसंसर्गेण सुप्तिङ्पदवत्तानिश्चयविरहात् नातिप्रसङ्गः। बहुगुड़ो द्राक्षा इत्यादौ अव्यवहितोत्तरत्वसंसर्गेण बहुत्ववद्गुड़पदमितिनिश्चयसत्त्वेपि बहुजर्थस्याऽल्पन्यूनत्वादेः स्वभिन्नगुड़पदार्थावच्छिन्नत्वाद् बहुचि नातिप्रसङ्गः। प्रकृत्यर्थावच्छिन्नस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेः।

लक्षणान्तरमप्युक्तं तत्रैव।

स्वोपस्थाप्ययदर्थस्य बोधने यस्य निश्चयः तत्वेन हेतुरथवा प्रकृतिः सा तदर्थिका। स्वोपस्थाप्ययादृशार्थान्वयबोधं प्रति अव्यवहितोतरत्वसम्बन्धेन यादृशशब्दवत्तानिश्चयत्वेन हेतुता यादृशः शब्दस्तथाविधार्थे प्रकृतिः। कर्मत्वं घटीयमित्यन्वयबोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन अमादिधर्मिकघटपदवत्तानिश्चयत्वेन हेतुतेति घटशब्दः प्रकृतिः।

बहुगुड़ो द्राक्षा इत्यादौ गुड़ाल्पन्यूना द्राक्षा इत्यन्वयबोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन सुबादिधर्मिकबहुगुड़ादिपदवत्तानिश्चयत्वेन हेतुतया बहुगुड़शब्दः प्रकृतिः। गुड़धर्मिकबहुचप्रत्ययवत्तानिश्चयत्वेन हेतुत्वे तु सुबाद्यसमभिव्याहृतादपि बहुगुड़ादिशब्दाद् द्राक्षादौ बहुजाद्यर्थस्य गुड़ाल्पन्यूनत्वस्याऽन्वयबोधापत्तेः इति बहुचि प्रत्यये नातिप्रसङ्गः।

निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः ।
यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते ॥

प्रोक्तमिति। पाणिन्यादिभिरिति शेषः। तत्। प्रातिपदिकम्। नामलक्षणम्

येन स्वीययदर्थस्य मुख्यतः प्रतिपद्यते ।
स्वोत्तरप्रथमापेक्ष्या तन्नाम स्यात्तदर्थकम् ॥

मुख्यतः। मुख्यविशेष्यतया। प्रतिपादने। बोधे। तथा च प्रथमाविभक्तिधर्मिकाऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चयत्वं यादृशार्थनिष्ठमुख्यविशेष्यताशालिबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्वं नामत्वम्। प्रथमाविभक्तेरर्थः संख्यैव। सा च प्रकृत्यर्थे प्रकारतया भासते। संख्यातिरिक्तसुबर्थानां तु विशेष्यतया भानात्। प्रथमार्थसंख्यायां प्रकृत्यर्थो विशेष्य एव। अत एव प्रथमान्तार्थमुख्यविशेष्यको बोधोऽङ्गीकरणीय इति ध्येयम्।

केचित्तु घञन्तसमुदायस्यैव पाकादौ शक्तिः। तथा च घञन्तविशेषणवाचकपदानां घञन्तसमानविभक्तिकत्वम्। यत्र च धातुमात्रस्य पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीयैवेति वदन्ति।

कार्यकारणभावो द्विविधः। आत्मनिष्ठप्रत्यासत्त्या, विषयनिष्ठप्रत्यासत्त्या च। आद्यो यथा द्रव्यं घट इत्यत्र समवायेन द्रव्यधर्मिकतादात्म्यसंसर्गकघटप्रकारकशाब्दबोधं प्रति द्रव्यं घट इत्यानुपूर्वीज्ञानं समवायेन हेतुः। एवं योग्यताज्ञानादिकमपि। एवमन्यत्रापि इयमेव सरणिरनुसरणीया।

द्वितीये धर्मिविशेष्यकत्वानिवेशप्रयुक्तं लाघवं बोध्यम्। द्वितीयस्तावत्धर्मितावच्छेदकतासम्बन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दबोधं प्रति धर्मितावच्छेदकतासम्बन्धेन तादात्म्यसंसर्गकघटप्रकारकयोग्यताज्ञानं कारणम्।

स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टस्वीयप्रकारताविशिष्टप्रकारतासम्बन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यताविशिष्टप्रकारतासम्बन्धेनोपस्थितिः कारणम्।

आकाङ्क्षाज्ञानस्य शाब्दबोधं प्रति न साक्षात् कारणत्वम्, अपि तु पदार्थोपस्थितिनिष्ठकारणतायां जन्यतासम्बन्धेन-अव्यवहितोत्तरत्वसम्बन्धेन वाऽवच्छेदकत्वमेवेति "नव्यास्तु" इत्यादिना मणिकृताऽभिधानात्।

एवं तात्पर्यज्ञानमपि न समवायेन हेतुः, किन्तु विशेष्यतावच्छेदकतासम्बन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दबोधं प्रति द्रव्यं घट इत्यानुपूर्व्यवच्छिन्नविशेष्यतानिरूपितोच्चरितत्वनिष्ठप्रकारतानिरूपितेच्छानिष्ठप्रकारतानिरूपितबोधनिष्ठा या निरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यता तन्निरूपकनिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिष्ठप्रकारतानिरूपकाऽभेदसम्बन्धावच्छिन्नत्वनिष्ठप्रकारतानिरूपकनिरूपितत्वसम्बन्धावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपकाऽव-

च्छिन्नत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वसम्बन्धेन । तथा च घटो घट इति वाक्यं घटत्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिनिरूपकशाब्दबोधेच्छयोच्चरितमिति तात्पर्यज्ञानमपि निरुक्तपरम्परासम्बन्धेन घटत्वे वर्तते इति घटत्वे शाब्दबोधापत्तिवारणाय तद्धर्मावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणम् अतो नास्ति कापि आपत्तिरनुपपत्तिर्वेति ।

वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदः कारणम् । ज्ञानमात्रं घटत्वान्यवृत्तिविषयतासम्बन्धेन घटत्वभिन्ने एव वर्तते । तथा च यत्र यत्र अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधः तत्र तत्र घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानम्, यथा द्रव्यत्वे, प्रमेयत्वे च । एवञ्चोक्तसम्बन्धेन ज्ञानस्य तादृशशाब्दबोधव्यापकत्वाद् व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नस्योत्पादकसामग्रया अपेक्षितत्वात् । व्यापकीभूतज्ञानत्वावच्छिन्नोत्पादकसामग्री च घटत्वभेदघटिता, प्रकृते घटत्वभेदविरहान्न घटत्वे तदापत्तिः ।

प्रातिपदिकार्थस्य प्रत्ययार्थनिपातार्थाभ्यां सहैव भेदान्वयो भवति । यथा तण्डुलमित्यत्र तण्डुलस्य द्वितीयार्थकर्मत्वे आधेयतासम्बन्धेनाऽन्वयादाधेयतासम्बन्धेन तण्डुलवती कर्मता इति बोधः । तथैव चन्द्र इव मुखमित्यत्र इवार्थसादृश्ये चन्द्रस्य स्वप्रतियोगिकत्वसम्बन्धेनाऽन्वयाच्चन्द्रप्रतियोगिकसादृश्यानुयोगिमुखमिति बोधः ।

एवं धात्वर्थस्य प्रत्ययार्थनिपातार्थाभ्यां सह भेदेनैवाऽन्वयबोधः । यथा पचतीत्यत्र धात्वर्थपाकस्याऽनुकूलत्वसम्बन्धेनाऽऽख्यातार्थकृतौ अन्वयात् पाकानुकूलकृतिमानिति बोधः । एवं च "न कलञ्जं भक्षयेदि"त्यत्र नञर्थेष्टसाधनत्वाभावस्य धात्वर्थभक्षणेऽनुयोगितयाऽन्वयात् कलञ्जभक्षणं मदिष्टसाधनत्वाभाववदिति बोधः ।

तत्सिद्धं शाब्दबोधीयाऽभेदान्यसम्बन्धावच्छिन्नप्रतिपादिकार्थधात्वर्थान्यतरविषयता प्रत्ययार्थनिपातार्थान्यतरविषयतानिरूपितैव प्रत्ययार्थप्रातिपदिकार्थयोः, निपातार्थप्रातिपदिकार्थयोः, धात्वर्थनिपातार्थयोश्च साक्षाद् भेदेनैव अन्वयबोध इति यावत् ।

तुल्ययुक्त्या निपातातिरिक्तप्रातिपदिकार्थस्य निपातातिरिक्तप्रातिपदिकार्थेन,

निपातातिरिक्तप्रातिपदिकार्थस्य धात्वर्थेन च सममभेदान्वयबोध एवेत्यपि सिद्धम्। उक्तञ्च—निपातातिरिक्तप्रातिपदिकार्थयोः क्रियाताद‍ृशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वादिति।

भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वादित्यनेन ताद‍ृशनामार्थयोस्ताद‍ृशनामार्थधात्वर्थयोश्चाऽभेदेन साक्षादन्वयबोधो भवतीति सूचितम्।

तथाचाऽभेदसम्बन्धेन नामार्थप्रकारकाऽन्वयबोधं प्रति नामपदजन्यनामार्थोपस्थितिः समानविशेष्यतासम्बन्धेन कारणमिति कार्यकारणभावः पर्यवसितः।

ननूक्तकार्यकारणभावे मानाभावाद् राजा पुरुष इत्यादावपि स्वत्वरूपभेदसम्बन्धेन राजप्रकारकपुरुषविशेष्यकशाब्दबोधोऽस्तु इति चेन्न। याद‍ृशं फलं क्वचित् प्रसिद्ध्यति ताद‍ृशस्यैवाऽऽपत्तिः संभवति, क्लृप्तसामग्रीबलात्। याद‍ृशञ्च फलं सर्वथैवाऽप्रसिद्धं ताद‍ृशस्य चाऽऽपादकाप्रसिद्धेरापत्तिरशक्यैवेति न राजा पुरुष इत्यत्र भेदान्वयबोधः। नच राज्ञः इत्यत्र लक्षणया शक्तिभ्रमेण वा ङस्पदात् पुरुषाद्युपस्थितिस्तत्र स्वत्वसम्बन्धेन राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधः प्रसिद्ध इति वाच्यम्। पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधे "राज्ञः" इत्याकारकराजपदाव्यवहितोत्तर'ङस्पदत्वरूपाऽऽनुपूर्वीज्ञानस्य, ङस्पदजन्यपुरुषाद्युपस्थितेश्च सामग्रीघटकतया तदभावादेव राजा पुरुष इत्यादौ पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधापत्तिविरहात्।

अथ राजपदाव्यवहितोत्तरङस्पदत्वरूपाऽऽकाङ्क्षाज्ञानविरहात् राजा पुरुष इत्यादौ भेदान्वयबोधवारणे राज्ञः पुरुष इत्यादौ ङसादिविभक्तीनां सम्बन्धादिवाचकत्वं निर्युक्तिकम्। तत्र स्वत्वसम्बन्धेन राजप्रकारकपुरुषविशेष्यकबोध संभवात्। राजा पुरुष इत्यादौ षष्ठ्यन्तराजपदसमभिव्याहाराभावेन भेदान्वयापत्तिविरहात्। एवं राजपुरुष इत्यादिसमासस्थले राजसम्बन्धिनि लक्षणास्वीकारोऽपि व्यर्थः। स्वत्वसम्बन्धेनैव राजप्रकारकपुरुषविशेष्यकबोधसंभवात्। राज्ञः पुरुष इत्यादौ षष्ठ्यन्तराजपदसमभिव्याहाराभावेन भेदान्वयापत्तिविरहात्। एवं राजपुरुष इत्यादिसमासस्थले राजसम्बन्धिनि लक्षणास्वीकारो व्यर्थः। स्वत्वसम्बन्धेनैव राजप्रकारकपुरुषविशेष्यकबोधसंभवात्। राजा पुरुष इत्यत्र राजपदाव्यवहितोत्तरपुरुषपदत्वरूपाऽऽनुपूर्वीविशेषज्ञानाभावान्न तदापत्तिः, विभक्त्या व्यवधानात्। एवं तण्डुलं पचतीत्यादौ द्वितीयादेः कर्मत्वादिवाचकत्वम्, आख्यातस्य कृतिवाचकत्वं च निर्युक्तिम्। धात्वर्थपाकादौ

कर्मकत्वादिसम्बन्धेन तण्डुलादेः, चैत्रादौ कृतिसम्बन्धेन धात्वर्थपाकादेरन्वय-बोधसंभवात् ।

द्वितीयान्ततण्डुलपदपचतिपदयोः समभिव्याहारज्ञानस्य, एवं प्रथमान्त-चैत्रपदपचतिपदयोः समभिव्याहारज्ञानस्य कारणत्वात्तण्डुलं पचति, पच्यते चैत्र इत्यादौ तादृशबोधापत्तिविरहात् । सर्वविभक्तीनां साधुत्वमात्रार्थकत्वोपगमात् । एवं च निपातातिरिक्तनामार्थयोः साक्षाद् भेदेन नान्वय इति नियमोऽप्रामाणिक इति चेन्न । राज्ञः पुरुष इत्यादौ षष्ठ्यादेः स्वत्वाद्यवाचकत्वेऽपि नञ्समभि-व्याहारे स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावः प्रतीयेत, स च न संभवति, स्वत्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताका-भावाप्रसिद्धेः । नञ्समभिव्याहारे स्वत्वाभावविषयकत्वे स्वत्वसम्बन्धेन राज-वानितिनिर्णयस्य विरोधित्वानुपपत्तेः । स्वत्वाभावबुद्धौ स्वत्वसंसर्गकनिर्णयस्य विरोधित्वे मानाभावात् । प्रतिबध्यप्रतिबन्धकभावलाघवगौरवविचारे निरूपित-स्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत् स्वत्ववानिति प्रत्यक्षं प्रति प्रति-बन्धकताधिक्यं संसर्गतावादिमते इति महद् गौरवं स्यादित्यपि विचारणीयम् ।

अथ राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्री भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धिका । तत्र भिन्नविषयकप्रत्यक्षत्वस्याऽननुगततया लाघवाद् राजत्वा-वच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतियोगिताकभेद-प्रतियोगितानवच्छेदकं यद्विषयत्वं तद्विशिष्टप्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकम् । तथा च संसर्गतावादिमतेऽपि न प्रतिबन्धकताधिक्यम् । तथाहि—तादृशभेद-प्रतियोगितानवच्छेदकविषयताकत्वस्य घटपटादिप्रत्यक्षे इव राजस्वत्वाभाववान् पुरुषः सुन्दरः इति प्रत्यक्षे निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाव-वत्स्वत्ववानितिप्रत्यक्षेऽपि च सत्त्वात्तस्यापि उक्तप्रतिबध्यतावच्छेदकाक्रान्तदिति चेन्न । उक्तानुगतरूपेण प्रतिबध्यत्वे यत्र राज्ञः पुरुष इति वाक्यजन्यशाब्द-सामग्री घटप्रत्यक्षेच्छा घटप्रत्यक्षसामग्री च तत्र घटप्रत्यक्षत्वस्य प्रतिबध्यता-वच्छेदकाक्रान्ततया घटप्रत्यक्षोपपत्तये भिन्नविषयकप्रत्यक्षं प्रति घटप्रत्यक्षेच्छा-विरहविशिष्ट राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्री प्रतिबन्धिका वाच्या । एवमपि यत्र राज्ञः पुरुष इतिवाक्यजन्यशाब्दसामग्री-राजस्वत्वाभाववान् पुरुषः सुन्दरः इति प्रत्यक्षेच्छा-तादृशप्रत्यक्षसामग्री च तत्र तादृशप्रत्यक्षानुपपत्तिः । तादृशप्रत्यक्षत्वस्यापि प्रतिबध्यतावच्छेदकाक्रान्तत्वादतो घटप्रत्यक्षं प्रत्येव घट-

प्रत्यक्षेच्छाविरहविशिष्टतत्तदृशशाब्दसामग्र्याः प्रतिबन्धकत्वं वाच्यम्। तथा च नोक्तप्रत्यक्षानुपपत्तिः। एवमपि राजस्वत्वाभाववान् पुरुषः इति प्रत्यक्षेच्छाविरहकाले तादृशप्रत्यक्षसामग्रीसत्त्वे तादृशप्रत्यक्षापत्तिः, घटप्रत्यक्षत्वस्यैव प्रतिबध्यतावच्छेदकत्वात्। अतः राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षं प्रति तादृशप्रत्यक्षेच्छाविरहविशिष्ट राज्ञः पुरुष इति शाब्दसामग्री प्रतिबन्धिका इति रीत्याऽननुगत एव प्रतिबध्यप्रतिबन्धकभावो वाच्यः। तथा च संसर्गतावादिमते प्रतिबन्धकताधिक्यमिति ध्येयम्।

संसर्गतावादिमते राजस्वत्वाभाववान् पुरुषः सुन्दरः—निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववानितिप्रत्यक्षद्वये राज्ञः पुरुषः इति वाक्यजन्यशाब्दबोधसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम्। तयोर्भिन्नविषयकत्वात्। प्रकारतावादिमते न कल्पनीयम् प्रतिबन्धकताद्वयम्। तयोर्बाधरूपतया बाधाभावस्य सामग्रीघटकत्वेन विशेष्यतावच्छेदकप्रकारकनिश्चयाभावादेव तादृशप्रत्यक्षानुपपत्तेः। एवं संसर्गतावादिमते स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान् पुरुष इति निश्चयस्य स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यनिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववानिति निश्चयस्य च तदभावव्याप्यवत्तासुद्रया शाब्दधीप्रतिबन्धकतया तत्सामग्र्यां तदभावोऽपि निवेश्य इति स्पष्टार्थः।

अथ समानविषयकानुमितिं प्रति शाब्दसामग्र्याः प्रतिबन्धकतया स्वत्वं राजकीयम्—पुरुषः स्वत्ववान् इत्यनुमित्योः राजस्वत्ववान् पुरुष इति शाब्दबोधसमानविषयकत्वेन तादृशानुमितिद्वयं प्रति प्रतिबन्धकताद्वयं कल्पनीयम्। संसर्गतावादिमते तु तत्राऽनुमितिरेवोत्पद्यते भिन्नविषयकत्वात्। भिन्नविषयकशाब्दं प्रति अनुमितिसामग्र्या बलवत्वात् इति चेत्, अत्र प्रकारतावादिनः—उक्तस्थले भवद्भिरनुमितिः स्वीक्रियते, अस्माभिरपि स्वीक्रियतां कुतः प्रतिबन्धकताद्वयम्। ननु प्रकारतावादिनामुक्तानुमितिद्वयस्वीकारो न संभवति, समानविषयकसामग्र्या बलवत्वादिति चेन्न। इच्छाया उत्तेजकत्वानुरोधेन विशिष्यैव प्रतिबध्यप्रतिबन्धकभावः फलबलेन कल्पनीयः। एवं चोक्तानमितिद्वयस्य प्रामाणिकत्वे तत्रोक्तशाब्दसामग्र्याः प्रतिबन्धकत्वमस्माभिरपि न स्वीक्रियते इति नानुपपत्तिः। संसर्गतावादिनापि स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रति उक्तानुमितिद्वयसामग्र्याः प्रतिबन्धकताद्वयकल्पनीयतया साम्याच्च भिन्नविषयकशाब्दबोधं प्रति अनुमितिसामग्र्या बलवत्वात् इति ध्येयम्।

अथ राजपुरुष इत्यादौ लुप्तषष्ठीविभक्तिस्मरणेन स्वत्वोपस्थितौ राजस्वत्ववानितिभेदान्वबोधोपगमे राजसम्बन्धिनि निरूढलक्षणा न युक्ता। नापि निपातातिरिक्तनामार्थयोः साक्षाद् भेदेन नान्वयबोध इति नियमविरोधः, प्रत्ययार्थमन्तराकृत्य राजपुरुषयोरन्वयबोधात्। समासविग्रहवाक्ययोस्तुल्यार्थकत्वोपपत्तिश्च। प्रकारतावादिमतेऽपि दधि पश्येत्यादौ दधिपदोत्तरं लुप्तद्वितीयाविभक्तिस्मरणमावश्यकम्। अन्यथा दधिपदार्थस्य धात्वर्थदर्शनेऽन्वयानुपपत्तेः। नच षष्ठीतत्पुरुषस्थले लुप्तषष्ठीविभक्तेः स्मरणस्याऽऽवश्यकत्वे ऋद्धस्य राजमातङ्गा इति प्रयोगापत्तिः। समानविभक्तिकत्वेन ऋद्धराजपदार्थयोरन्वयबोधसंभवात्। मातङ्गेऽन्वयबोधार्थं राजपदोत्तरलुप्तषष्ठीविभक्तेः स्मरणस्याऽऽवश्यकत्वात् इति वाच्यम्। सापेक्षमसमर्थवद् भवतीतिन्यायेनोक्तप्रयोगापत्तेर्वारणात्। सापेक्षत्वञ्च समासाघटकपदार्थान्वितस्वार्थकत्वम्। समासाघटकपदार्थान्वितेत्यत्र पदार्थान्वयस्तादात्म्येन वा विवक्षणीय इति चेन्न। यत्र राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहः "तद्धर्मावच्छिन्नविषयकबोधजनिका लक्षणा स्वारसिकी—सैवाऽऽधुनिकीत्युच्यते। तस्यामनादितात्पर्यमूलकत्वं निरूढत्वम्"। तत्र राजसम्बन्ध्यभिन्नः पुरुष इति बोधस्य "विभक्त्यनुसन्धानेन भेदान्वयबोधाभ्युपगन्तुः—अभेदान्वयबोधाभ्युपगन्तुश्चो" भयमतसिद्धतया राजपुरुष इति समभिव्याहारज्ञानस्य कारणतयैव निर्वाहे लुप्तविभक्तिस्मरणकल्पने मानाभावात्।

दधि पश्यतीत्यादौ लुप्तद्वितीयाविभक्तिस्मरणमावश्यकम्। राजपुरुष इत्यत्रेव दधिकर्मके लक्षणास्वीकारे दध्यादिपदस्य तृतीयान्तत्वादिभ्रमदशायामपि तथाविधबोधापत्तेः। समभिव्याहाररूपाऽऽकाङ्क्षायाः सत्त्वात्। दधिपदाव्यवहितोत्तरपश्यतिपदत्वरूपाऽऽकाङ्क्षाज्ञानस्य कारणत्वे पश्यति दधि, पश्यति चैत्रो दधीत्यादौ शाब्दबोधानुपपत्तेः। राजपुरुष इत्यादावपि राजपदस्य राजसम्बन्धिनि लक्षणाग्रहे राजपदस्य तृतीयान्तत्वभ्रमदशायां राजसम्बन्ध्यभिन्नः पुरुष इति बोधापत्तिस्तु न संभवति, तादृशबोधे राजपदाव्यवहितोत्तरपुरुषपदत्वरूपाऽऽकाङ्क्षाज्ञानस्य हेतुतया तृतीयया व्यवधानात्।

विभक्तीनां सम्बन्धादिवाचकत्वमावश्यकम्। अन्यथा राजमात्रस्य राजपदार्थत्वे राजसम्बन्धी पुरुष इति बोधस्य, राजसम्बन्धिनो राजपदार्थत्वे राजसम्बन्धिसंबन्धी पुरुष इति बोधस्य च सर्वानुभवविरुद्धस्यापलापापत्तेः, अतो विभक्तिशक्तिरवश्यमङ्गीकार्येति ध्येयम्।

इदमत्रावधेयम्। विभक्तेरवाचकत्वे तण्डुलं पचतीति वाक्यस्य तण्डुल-परत्वे मुख्यप्रयोगत्वम्, माषादिपरत्वे गौणप्रयोगत्वम् इति सर्वानुभवसिद्धाया मुख्यामुख्यत्वव्यवस्थाया अनुपपत्तिरपि बोध्या।

पचति चैत्र इत्यादौ चैत्राद्यंशे कृतिसम्बन्धेन पाकादेरन्वयबोधस्वीकारे चैत्रो न पचतीत्यादावन्वयबोधानुपपत्तिः, कृतिसम्बन्धस्य वृत्त्यनियामकतया कृतिसम्बन्धावच्छिन्नप्रतियोगिताकपाकाभावबोधनासंभवात्।

अथ वृत्त्यनियामकसम्बन्धस्याऽभावप्रयोगितानवच्छेदकत्वेन पचतीत्यादौ आख्यातस्य कृत्यर्थकत्वेऽपि जानातीत्यादौ आख्यातस्याश्रयार्थकत्वं निर्युक्तिकम्।

चैत्रो जानातीत्यादौ आश्रयतासम्बन्धेन ज्ञानवांश्चैत्र इति बोधसंभवात्। आश्रयतासम्बन्धस्य वृत्तिनियामकतया न जानातीत्यत्र आश्रयत्वसम्बन्धा-वच्छिन्नप्रतियोगिताकज्ञानाभावबोधसंभवाच्च। आश्रयतासंसर्गकधात्वर्थज्ञान-प्रकारकबोधे आख्यातान्तधातुसमभिव्याहारस्य कारणतया ज्ञानं चैत्र इत्यादौ न तथान्वयबोधः। ज्ञानम्—आश्रयत्वम्, चैत्र इत्यादौ ज्ञानाश्रयत्ववांश्चैत्र इति बोधवारणाय तादृशसमभिव्याहारज्ञानस्य कारणत्वं प्रकारतावादिनोऽप्या-वश्यकम्।

यत्तु लाघवाद् विशेष्यतासम्बन्धेन धात्वर्थप्रकारकबोधं प्रति विशेष्यता-सम्बन्धेन प्रत्ययजन्योपस्थितिः कारणम्। तथा च चैत्रे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरभावेन न धात्वर्थप्रकारकशाब्दबोधसंभवः।

एवं यत्र 'ज्ञाधा'तोः पाके शक्तिभ्रमो लक्षणाग्रहो वा तत्र विशेष्यता-सम्बन्धेन 'ज्ञा'धात्वर्थप्रकारकबोधे विशेष्यतासम्बन्धेन तिप्प्रत्ययजन्योपस्थितिः कारणम्। तथा च विशेष्यतासम्बन्धेन तिप्प्रत्ययजन्योपस्थितिरूपकारणा-भावान्न चैत्रे 'ज्ञा'धात्वर्थज्ञानप्रकारकशाब्दबोधसंभवः। अत आख्यातार्थाऽऽ-श्रयत्वे धात्वर्थज्ञानस्य निरूपितत्वसम्बन्धेनाऽन्वयार्थमाख्यातस्याऽऽश्रयत्वे वृत्तिकल्पनमावश्यकमिति। तदसत्। 'ज्ञा'धात्वर्थप्रकारकशाब्दबोधे ज्ञाधात्व-व्यवहितोत्तरतिप्प्रत्ययजन्योपस्थितेः कारणत्वे "जानीते" इत्यत्र 'ते'प्रत्ययार्थ-विशेष्यकशाब्दबोधे व्यभिचारः, तत्र विशेष्यतासम्बन्धेन तिप्प्रत्ययजन्यो-पस्थितेरभावात्। अतस्तद्वारणाय "ज्ञा"धात्वव्यवहितोत्तरतिपपदज्ञानजन्यो-पस्थित्यव्यवहितोत्तरत्वविशिष्ट"ज्ञा"धात्वर्थप्रकारकशाब्दबोधं प्रति "ज्ञा"-

धात्वंव्यवहितोत्तर'तिप्'प्रत्ययजन्योपस्थितिः समानविशेष्यतासम्बन्धेन कारणम् । एवञ्च "चैत्रो जानीते" इत्यादौ आश्रयतासंसर्गेण ज्ञानप्रकारकचैत्रविशेष्यकबोधस्य 'तिप्'पदज्ञानजन्योपस्थित्यव्यवहितोत्तरत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया व्यभिचारविरहेण आश्रयतयाः संसर्गतया भानसंभवे आख्यातस्य वृत्तिकल्पने गौरवात् । जानातीत्यादौ आख्यातस्याऽऽश्रयत्वार्थकत्वं निर्युक्तिकम् । मूलकारस्यापि अस्मिन्नेवार्थे सम्मतिरिति ध्येयम् ।

यत्र च जानातीत्यादौ "ज्ञा"धातोर्ज्ञानाश्रयत्वे शक्तिभ्रमो लक्षणाग्रहो वा तत्र ज्ञानाश्रयत्वप्रकारकबोध एव भवति न तु चैत्राद्यंशे ज्ञानप्रकारकः, आश्रयत्वे, विशेषणीभूतज्ञानस्य तु चैत्रे प्रकारत्वायोगात् । स्वरूपसम्बन्धेन ज्ञानाश्रयत्वप्रकारकचैत्रादिविशेष्यकशाब्दबोध एव मणिकृता स्वीकरणीयः । तथा चाऽऽश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानादीनां कारणत्वकल्पनमधिकमेव मणिकृन्मते स्यादिति । भिन्नविषयकप्रत्यक्षे प्रतिबध्यप्रतिबन्धकभावलाघवगौरवविचारे निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववदाश्रयत्ववांश्चैत्र इति प्रत्यक्षे संसर्गतावादिमते शाब्दसामग्र्याः प्रतिबन्धकत्वाधिक्यं बोध्यम् ।

अथ प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवेन प्रकारतास्वीकारे "निपातातिरिक्तनामार्थयोर्भेदेन नान्वय इति नियमे निपातातिरिक्तत्वविशेषणं व्यर्थम् । भूतले न घट इत्यादौ घटपदस्य घटप्रतियोगिके लक्षणा, तस्य च नञर्थाभावेऽभेदेनैवाऽन्वयाद् घटप्रतियोगिकाऽभावो भूतलवृत्तिरित्येव बोधः । अथवा सुविभक्तेः प्रतियोगित्वे लक्षणा, तत्र घटस्याऽऽधेयतयाऽन्वयः । प्रतियोगितायाश्च निरूपकत्वसम्बन्धेन नञर्थाऽभावेऽन्वयः । तथाच घटनिष्ठप्रतियोगितानिरूपकाऽभावो भूतलवृत्तिरिति प्रतियोगिताप्रकारको बोधः । एवञ्चोक्तशाब्दसामग्र्याः घटप्रतियोगिकत्वाभाववानभावः प्रमेयः, एवं घटनिष्ठप्रतियोगितानिरूपकत्वाभाववान् प्रमेय इति प्रत्यक्षं प्रति प्रतिबन्धकत्वाकल्पनेन लाघवात् । उक्तप्रत्यक्षस्य बाधनिश्चयरूपतयोक्तप्रत्यक्षसामग्र्याः, भूतले न घट इति शाब्दसामग्र्याश्च युगपदवस्थानासंभवात् इति चेन्न । सति तात्पर्ये भूतले न घट इति वाक्याद् भूतलवृत्तित्वाभाववान् घट इत्यपि बोधो भवति, स एव च भूतलनिरूपितवृत्तितावान् घट इति बुद्धेर्विरोधी । इदं च समानप्रकारकज्ञानस्य विरोधित्वमभ्युपेत्य । एवञ्च नञसत्त्वे येन सम्बन्धेन यद्धर्मिणि यद्वत्ता प्रतीयते इति नियमोऽप्युपपद्यते । तथा च नञर्थाऽभावस्य स्वरूपसम्बन्धेन

घटेऽन्वयबोधार्थं निपातातिरिक्तत्वविशेषणमावश्यकम् इति ध्येयम्। एवं न पचतीत्यत्र पाककृत्यभावस्य, नेदं चैत्रस्य धनमित्यत्र चैत्रस्वत्वाभावस्य च स्वरूपसम्बन्धेन चैत्रधनादावन्वयार्थं तदावश्यकम्। नच नञोऽभाववति लक्षणां स्वीकृत्य भूतलवृत्तित्वाभाववदभिन्नो घटः, पाककृत्यभाववदभिन्नश्चैत्रः, चैत्रस्वत्वाभाववदभिन्नं धनमित्यभेदान्वयबोधसंभवे व्यर्थमेव निपातातिरिक्तत्वविशेषणमिति वाच्यम्। अभेदान्वयबोधोपगमे नञो मुख्यार्थपरत्वं कुत्रापि न स्यात्, मुख्यार्थाभावे लक्षणापि न स्यात्, शक्यसम्बन्धस्यैव लक्षणात्वात्। तद्वत्ताबुद्धिं प्रति अभेदसंसर्गकतदभाववत्प्रकारकनिश्चयस्याऽविरोधित्वाच्च। इदन्तु बोध्यम्। संसर्गतावादिमते नीलतादात्म्याभाववान् घटः सुन्दर इति प्रत्यक्षस्य भिन्नविषयकतया तत्रोक्तशाब्दसामग्र्याः प्रतिबन्धकत्वमधिकम्। प्रकारतावादिमते तु उक्तप्रत्यक्षसामग्र्याः शाब्दसामग्र्याश्च युगपदवस्थानासंभवेन प्रतिबन्धकत्वाकल्पनादिति प्रकारतावादिमतमेव ज्यायः।

प्रत्ययलक्षणं तु—

याद्दशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान्।
स ताद्दशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः॥

एकत्वार्थे प्रकृतिनिपाताभ्यां भिन्न एकत्वार्थे वृत्तिमानपि सुशब्द एकत्वार्थे प्रत्यय इत्यर्थः।

इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः।
तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते॥

स्वेतरार्थाविशेषितस्वार्थे तिङर्थविषयकबोधजनकतावच्छेदकाऽऽनुपूर्व्यभाववान् निपातभिन्नः शब्दः प्रत्यय इत्यर्थः। इतरार्थावच्छिन्ने एव स्वार्थे तिङर्थान्वयबोधक्षमो यः शब्दः स प्रत्यय इति यावत्। घटान्विते एव कर्मत्वे तिङर्थान्वयाद् द्वितीयादेः प्रत्ययत्वम्।

विभक्तिश्चैव धात्वंशस्तद्धितं कृदिति क्रमात्।
चतुर्धा प्रत्ययः प्रोक्तः कादिभिः पञ्चधाऽथवा॥

धात्वंशः—सन् क्यजादिः। स्त्रीत्वार्थकटाबादेस्तद्धितत्वोगमे चातुर्विध्यं प्रत्ययस्य। तदनुपगमे तु पञ्चविध एव।

विभक्तिलक्षणन्तु—

संख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु यः।
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङ्चेति विभेदतः॥

तथा च संख्यात्वाऽवान्तरएकत्वत्व-द्वित्वत्व त्रित्वत्वजातिविशिष्टे शक्तिमान् यः प्रत्ययः सा विभक्तिः। सा द्विविधा, सुप्तिङ्भेदात्। आख्यातैकवचनस्य संख्यावाचकत्वे विवादे तु—

प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने।
समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते॥

प्रत्ययार्थधर्मिकप्रकृत्यर्थविधेयकान्वयबोधसमर्थः शब्दो वा विभक्तिः। घटमित्यादौ सुपा कर्मत्वं घटीयमिति धीः। पचतीत्यादौ तिङा कृतिः पाकीया इति धीर्जन्यते। प्रथमाऽपि अभेदादौ स्वार्थे प्रकृत्यर्थविधेयकबोधं जनयत्येव। तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वार्थधर्मिकस्वाश्रयप्रकृत्यर्थविधेयकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वम् विभक्तित्वम्। सुपां लक्षणम्—

प्रकृत्यर्थे स्वार्थसंख्यान्वयधीहेतवः सुपः।
प्रथमादिप्रभेदेन ताश्च सप्तविधाः मताः॥

प्रकृत्यर्थधर्मिकस्वार्थसंख्याप्रकारकाऽन्वयबोधजनकत्वं सुब्विभक्तित्वम्। तिङस्तु स्वार्थभावनान्वयिन्येव संख्यां बोधयन्ति न तु स्वप्रकृत्यर्थेति तद्व्युदासः।

प्रथमालक्षणम्—

तादात्म्यभिन्ने स्वार्थे या प्रकृत्यर्थस्य बोधने।
न समर्था विभक्तिः सा प्रथमा परिकीर्त्यते॥

तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं तादात्म्यभिन्नस्वार्थधर्मिकप्रकृत्यर्थप्रकारकान्वयबोधजनकतानवच्छेदकं विभक्तित्वे सति तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वमित्यर्थः। नहि कर्मत्वमिव एकत्वादिर्विशेष्यतया भासते, संख्यातिरिक्तसुबर्थानां प्रातिपदिकार्थविशेष्यत्वनियमादिति। तादात्म्यविशेष्यकप्रकृत्यर्थप्रकारकबोधजनिका विभक्तिः प्रथमेति यावत्।

ननु स्वर्गकामो यजेतेत्यत्र प्रथमायामव्याप्तिः, प्रथमायास्तादात्म्यभिन्नस्वार्थनियोज्यत्वविशेष्यकप्रकृत्यर्थप्रकारकबोधजनकत्वात्। अथवा तादृशाधेयत्वविशेष्यकप्रकृत्यर्थप्रकारकबोधजनकत्वात्, अतो लक्षणान्तरमाह—

धात्वर्थेन विशिष्टस्य तिङर्थस्यान्वयं प्रति ।
यदन्तनामबोध्यत्वं तन्त्रं सुप् साऽथवा तथा ॥

अव्यवहितपूर्वत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्यवच्छिन्नविषयतानिरूपितविषयता धात्वर्थावच्छिन्नतिङर्थप्रकारकबोधजनकतावच्छेदिका तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वम् । विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्नतिङर्थप्रकारकान्वयबोधं प्रति विशेष्यतासम्बन्धेन यदन्त—"स्वन्त-आबन्त-जसन्त-नामपदजन्योपस्थितेः कारणत्वं सा सुप् प्रथमेति यावत् । अत्र विशिष्टान्तानुक्तौ यजेतेत्यादौ तिङर्थस्येष्टसाधनत्वस्य यागेऽन्वयबोधे यदनामोपस्थाप्यत्वाभावाद् व्यभिचारः स्यात् । तदुपादाने तु प्रकृत्यर्थावच्छिन्नस्य तिङर्थस्य न यागेऽन्वयः, किन्तु केवलस्यैवेति न व्यतिरेकव्यभिचारः ।

सुब्विभक्तिर्द्विधा—कारकविभक्तिः, उपपदविभक्तिश्च । यादृशधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयीभूतार्थबोधजनकं सुप् तादृशधात्वर्थक्रियायां कारकम् । यथा ग्रामं गच्छतीत्यत्र धात्वर्थक्रिया व्यापारविशेषणीभूतसंयोगविषयकबोधजनकत्वाद् द्वितीयायाः कारकत्वम् एवमन्यविभक्तीनामपि बोध्यम् । तत्क्रियानिष्ठविशेष्यतानिरूपितप्रकारत्वाभिन्ना या सुबर्थनिष्ठविशेष्यता तन्निरूपितप्रकारतावति नामार्थे कारकव्यवहारो गौणः । अत एव क्रियान्वितविभक्त्यर्थान्वितत्वं कारकत्वमिति जयरामभट्टाचार्यः । षष्ठ्यर्थसम्बन्धो न धात्वर्थे प्रकारः, यतस्तण्डुलस्य पचतीत्याद्यप्रयोगात् । रजकस्य वस्त्रं ददातीत्यादौ च परिष्कार्यत्वरूपसम्बन्धो न वस्त्रादावन्वेति अतः षष्ठ्यर्थसम्बन्धो न कारकम् । तदुक्तम्—

कारकार्थेतरार्था च सुप् द्विधा च विभज्यते ।
धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम् ॥
क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम् ।
कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते ॥

शेषः=कारकादवशिष्टः । सम्बन्ध इति यावत् । तथा च षष्ठ्यर्थसम्बन्धस्य धात्वर्थेऽप्रकारतया तदर्थका षष्ठी न कारकम् । तण्डुलस्य पाचकः । मैत्रस्य भोक्तव्यमित्यादौ कर्मत्वकर्तृत्वादिकं कारकमेव । षष्ठी तु कर्तृकर्मणोः कृतीत्यनुशासनात् । चौरस्य हिनस्ति–जलस्योपस्कुरुते–मातुः स्मरतीत्यादौ कारकार्थैव षष्ठी ।

नामार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयीभूतार्थबोधजनकं सुप् उपपद-विभक्तिः। यथा 'दण्डेन घटः' 'भूतले घटः' इत्यादौ तु तृतीयाद्यर्थकरणत्वादिकं न कारकम्, धात्वर्थानन्वितत्वात्। अत एव तत्र दण्डघटः—भूतलघटः—इत्यादिर्न समासः कारकविभक्त्यन्तभावेनैव विशेषविधिं विना तत्पुरुषस्य व्युत्पन्नत्वात्। तदुक्तम्—

यत्सुपो यादृशार्थो न प्रकारीभूय भासते।
धात्वर्थे, तादृगर्थे सा कारकान्यार्थसुब्भवेदिति॥

ननु शब्दो न प्रमाणं प्रमाजनकत्वात् दोषसहकृतेन्द्रियवत्, नापि स्वरूपा-सिद्धिः। साकाङ्क्षादिशब्दश्रवणोत्तरं वृत्त्या शब्दोपस्थाप्यार्थोपस्थितिमात्रम्। विशिष्टानुभवे मानाभावात्। न च गौरस्तीतिवाक्यश्रवणानन्तरमस्तित्वप्रकारक-गोविशेष्यकज्ञानवानहमित्याकारकाऽनुव्यवसायापत्तिरिति वाच्यम्। तत्रैव विवादात्। अस्तु वा गोविशेष्यकाऽस्तित्वप्रकारकानुभवः प्रत्यक्षम्। तावतापि अनुव्यवसायोपपत्तिरिति तु न विचारसहम्। लौकिकप्रत्यक्षे शब्दस्याऽनुपयोगात्, अतीन्द्रियस्थले तदसंभवाच्च। न च ज्ञानलक्षणासन्निकर्षात्मकोपनयसन्नि-कर्षजन्याऽलौकिकप्रत्यक्षमेवाऽस्तु इति वाच्यम्। शाब्दबोधात् पूर्वमपि पदज्ञान-जन्यपदार्थोपस्थितेरावश्यकतया तस्या एवोपनयसन्निकर्षरूपत्वात्। तत उपनीत-भानस्वीकारे बाधकाभावात्।

ननु गोविशेष्यकाऽस्तित्वप्रकारकज्ञानस्याऽलौकिकप्रत्यक्षत्वेऽनुव्यवसायो-पपत्तावपि गौरस्तितावान् इतिवत् अस्तित्वं गवीयमित्यपि प्रत्यक्षं स्यात्, प्रत्यक्षे विशेष्यविशेषणभावस्य कामचारात्। शाब्दबोधस्तु प्रथमान्तार्थमुख्यविशेष्यक एवेति न अस्तित्वं गवीयमिति शाब्दबोधापत्तिः। प्रकारान्तरेणाप्युपस्थितार्थस्यो-पनयमर्यादयाऽनुव्यवसायमानोपपत्तेश्च। नचेष्टापत्तिः। अनुभवविरोधात्। पदोपस्थाप्यार्थावगाहित्वस्यैवाऽनुभवसिद्धत्वात्। प्रत्यक्षे तु सुरभि चन्दनम्, ज्ञातो घट इत्यादौ सौरभादेरपि भानात्। ननु प्रकारान्तरेणोपस्थितस्याऽर्थस्य शाब्दधीविषयत्वेऽपि न तदर्थविषयकशाब्दबोधस्याऽनुव्यवसायः। विषयतया तदर्थविषयकशाब्दबोधस्याऽनुव्यवसायं प्रति तदर्थकपदजन्यतदर्थविषयकशाब्द-त्वेन कारणताकल्पनादिति चेन्न। गौरवात्। सच्छिद्रो घटो जलाहरणाऽयोग्य इति बाधनिश्चयसत्त्वे घटेन जलमाहरेतिवाक्यात् सच्छिद्रान्यघटकरणकजला-हरणबोधो भवति, तादृशबोधानुव्यवसाये व्यभिचारापत्तेः। अनुव्यवसाये छिद्रे-

तरत्वज्ञानस्य विवादग्रस्तत्वे वस्तुगत्या छिद्रेतरघटस्यैव भानोपगमान्न व्यभिचार इत्युच्यते, तदापि अस्तित्वादौ गवादेर्भानप्रसंगो दुर्वार इति ध्येयम् ।

ननु गौरस्तितावान् इति बोधो विशिष्टबुद्धिरूपो भवत्येव, परन्तु सा स्मृतिर्नत्वनुभवः, अतोऽनुभवकारणत्वं शब्दस्य बाधितमेवेति चेन्न । समानाकारसंस्काराजन्यत्वात् न स्मृतिः । तद्धर्मिकतद्वत्तास्मरणं प्रति तद्धर्मिकतद्वत्तासंस्कारस्य हेतुत्वात्, तस्य च पूर्वं नियमतोऽसत्त्वात् । तथा च तादृशसंस्काररूपकारणाभावेन स्मृतित्वासंभवात् । अतश्च स विशिष्टबुद्धिरूपो बोधो नियन्त्रितविषयत्वाद् भवद्भिः शाब्दबोध एव स्वीकार्यो नत्वनुमितिरपि । तथा सति पूर्वपरामर्शविषयीभूतस्य सर्वस्य शाब्दधीविषयतापत्तेः । न च तदर्थविषयकबोधं प्रति वृत्त्या साकाङ्क्षपदजन्यपदार्थोपस्थितिः कारणमतो न दोषः इति चेन्न । शाब्दत्वस्य प्रत्यक्षत्वादिव्याप्यत्वे पदजन्योपस्थितिविषयार्थावगाहि "शाब्दात्मक" प्रत्यक्षादाविष्टापत्तिसंभवेऽपि पदजन्योपस्थित्यविषयस्यापि "अपदार्थस्यापि" प्रत्यक्षानुमितिसामग्रीबलेन स्वोपनय-परामर्शसत्त्वेन प्रत्यक्षानुमित्योरन्यतरप्रसंगस्य दुर्वारतापत्तेः । प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासंभवात्, शाब्दस्यापि प्रत्यक्षत्वेन स्वं प्रति स्वसामग्र्याः प्रतिबन्धकत्वासंभवात् । शाब्दान्यप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापेक्षया शाब्दबोधस्य प्रत्यक्षादिभिन्नत्वस्य कल्पनायां लाघवात् । शाब्दबुद्धेः प्रत्यक्षादिरूपत्वे मानाभावाच्च । तदुक्तम्—

साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः ।
सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं नचानुमा ॥

आकाङ्क्षायोग्यताऽऽसत्तिमत्पदैस्तत्तदर्थसंसर्गावगाही बोधः नियन्त्रितार्थत्वात् "पदोपस्थाप्यस्यैवाऽर्थस्याऽवगाहित्वात्" न प्रत्यक्षं न चाऽनुमितिरित्यर्थः ।

अथ गौरस्तितावान् अस्तित्वयोग्यतावत्त्वादित्यनुमानादेव गोविशेष्यकाऽस्तित्वप्रकारकनिश्चयः । एवञ्च शाब्दान्याऽनुमितिं प्रति शाब्दसामाग्र्याः प्रतिबन्धकत्वात् स्वसामग्रीबलेनाऽपदार्थानामनुमित्यापत्तिरिति वाच्यम् ।

योग्यता यदि एकपदार्थेऽपरपदार्थवत्त्वं तदा हेतोः साध्याविशेषे सिद्धसाधनम् । यदि बाधाभावो योग्यता प्रकृते अस्तित्वाभावाभाव एव तत्र हेतुः ।

योग्यता निश्चयहेतुत्ववादिनामयमाशयः बाधनिश्चयदशायां शाब्दबोधवारणाय योग्यतानिश्चयस्य हेतुता स्वीकरणीया, तथा च शाब्दसामग्रीकाले

बाधनिश्चयस्य न संभवः योग्यतानिश्चयस्य प्रतिबन्धकत्वादिति। स च न युक्तः, विशिष्टबुद्धिसामान्यं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वात्तदभावरूप कारणविरहादेव तदानीं शाब्दापत्त्यसंभवात्। बाधनिश्चयाभावेन योग्यता-निश्चयस्यान्यथासिद्धत्वात्।

अथास्तु योग्यतानिश्चयस्यान्यथासिद्धत्वम्, आचार्यमते ज्ञायमानलिङ्गस्या-नुमितिकरणत्वाद् योग्यतामात्रं लिङ्गमस्त्विति चेन्न। योग्यतामात्रलिङ्गकानुमा-नस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि तदनुमानस्यान्वयबुद्धि-त्वापातात्। योग्यतायाः संशयसत्वेपि शाब्दबुद्धेरनुभवसिद्धतया तस्याश्चा-नुमितौ निश्चयत्वेनैव कारणत्वस्य योग्यताया वाच्यतया लिङ्गत्वासंभवाच्च।

ननु आकाङ्क्षाहेतुनैव तदन्वयबुद्धिः साधनीयेति चेन्न। गौरस्तितावान् आकाङ्क्षावत्वादित्यनुमाने तत्तदानुपूर्वीपर्यवसितस्य आकाङ्क्षावत्त्वहेतोः पदार्थपक्षे स्वरूपासिद्धत्वात्। अत एव योग्यताविशिष्टाकाङ्क्षावत्वं न हेतुः। सामानाधिकरण्यरूपवैशिष्ट्याभावाच्च। नापि आकाङ्क्षाविशिष्टयोग्यतावत्वं हेतुः, विशेषणाभावप्रयुक्तविशिष्टाभावादिति ध्येयम्। तदुक्तम्—

योग्यतार्थगताऽऽकांक्षा शब्दनिष्ठानुभाविका।
'प्रत्येकं मिलित्वा वा नैते लिङ्गमसिद्धितः'॥

बाधाभावरूपा योग्यता अर्थनिष्ठा, आनुपूर्वीपर्यवसिता आकाङ्क्षा शब्दनिष्ठा शाब्दबोधजनिका, प्रत्येकम् = एकैकशः। मिलित्वा। एते = योग्यताऽऽकाङ्क्षे। असिद्धितः = स्वरूपासिद्धेर्न लिङ्गमिति पद्यार्थः।

अथ गौरस्तितावान्-स्वधर्मिकाऽस्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मा-रितत्वाद् घटवद् इत्यनुमानादेवास्तु शाब्दबोधस्याऽन्यथासिद्धिः। गमनानुकूल-कृतिमति गवादौ व्यभिचारवारणायाऽनुकूलान्तम्। स्मारितत्वमात्रस्य हेतुत्वेऽपि व्यभिचारो बोध्यः।

स्वपदस्य पक्षपरतया दृष्टान्तासिद्धिरिति चेत् अस्तिपदसमभिव्याहृतगो-पदस्मारितत्वात् चक्षुर्वदिति गृहाण। चक्षुषोपि गोपदस्मारितत्वम्। गौर्गच्छतीत्यादौ व्यभिचारवारणायाऽत्रापि अस्तिपदसमभिव्याहृतेति वैशेषिकाः। तन्न। पदस्मारितत्वाभावग्रहकालेऽपि गौरस्तीतिशब्दजन्यगौरस्तितावान् इति शाब्दबोधस्याऽनुभवसिद्धत्वेन तदानीञ्चाऽस्तित्वव्याप्यगोपदस्मारितत्ववानिति परामर्शसंभवेनाऽनुमानान्तर्भावासंभवात्।

वस्तुतः पदजन्योपस्थित्यसत्वेऽपि पदैः स्मारितोऽयमर्थ इति भ्रमज्ञानविषयस्याप्यर्थस्य शाब्दबोधप्रसंगाच्च ।

पदजन्योपस्थितिविषयत्वरूपस्य पदस्मारितत्वस्याग्रहकाले शाब्दबोधो न जायते इति न वक्तुं शक्यते। पदजन्या हि पदार्थोपस्थितिः स्वरूपसती 'अज्ञायमाना' एव हेतुर्न तु ज्ञाता। अनुमितौ च पदस्मारितत्वनिश्चयस्यैव हेतुत्वं प्रतिपादितम् । तथा च पदस्मारितत्वहेतोः पक्षधर्मत्वस्याऽग्रहकाले परामर्शानुत्पादेन तदानीमुत्पन्नबोधस्याऽनुमितित्वासंभवादिति नु परमार्थः ।

एवं गोपदं गोविशेष्यकाऽस्तित्वप्रकारकज्ञानपूर्वकं अस्तिपदसाकाङ्क्षगोपदत्वात् । इत्यत्र पदपक्षकमप्यनुमानं वैशेषिकाणां निरस्तम् । गोपदे गोविशेष्यकाऽस्तित्वप्रकारकज्ञानपूर्वकत्वबाधनिश्चयसत्वे उक्तानुमित्यनुत्पादेन पदार्थोपस्थित्या गौरस्तितावानितिशाब्दबोधस्य सर्वानुभवसिद्धत्वात् । प्रत्येकं पदार्थोपस्थितिसत्वेपि वाक्यार्थस्यानुपस्थिते, वाक्यार्थस्यापूर्वत्वादिति संक्षेपः ।

वस्तुतस्तु पर्वते वन्हिमनुमिनोमीत्यनुव्यवसायवद् गौरस्तीतिश्रवणानन्तर मस्तित्वेन गौःश्रुतो नत्वनुमित इति अनुव्यवरसायवलेन शब्दस्यापि प्रामाण्यम् । तादृशानुव्यवसायस्यापलापे अनुमितिमात्रस्य वन्ह्याद्यनुमितिः वन्ह्यादिपदजन्या वन्ह्याद्यनुमिमित्वादित्यनुमानेन पदजन्यत्वं प्रकल्प्य पदजन्यत्वहेतुना शाब्दबोधत्वानुमानसंभवादित्यन्यत्र विस्तरः ।

किं च घटादन्य इत्यादिवाक्यात् घटत्वावच्छिन्नप्रतियोगिताकभेदवानिति निर्धर्मिकःशाब्दबोधो भवति, निर्धर्मिकानुमितिस्तु न भवति । वैशेषिकाणां तु भेदो घटप्रतियोगिताकः घटसाकाङ्क्षाऽन्यपदस्मारितत्वादिति रीत्याऽनुमित्या न तन्निर्वाहः पक्षविधयाऽन्यत्वस्य भानेऽन्यत्वप्रकारेणाऽन्यस्याविषयीकरणात्, अन्यत्वस्यैव विशेष्यतया भानात् । निर्धर्मितावच्छेदकानुमितेरनभ्युपगमात्, अन्यपक्षकानुमितेरसंभवात् ।

आकाङ्क्षादिज्ञानमिव आसोक्तत्वस्य निश्चयोऽपि शाब्दबोधे कारणम् । आसोक्तत्वं च प्रकृतवाक्यार्थयथार्थज्ञानवदुक्तत्वम् । एवं चैकपदार्थनिष्ठविशेष्यतानिरूपिताऽपरपदार्थनिष्ठप्रकारताशालिअन्वयबोधो नानुमितिः, सिषाधयिषाविरहविशिष्टसिद्धेः प्रतिबन्धकतया बिना सिषाधयिषामनुमित्यसंभवात् । तथा चासौ अन्वयबोधोऽनुमितेर्भिन्न एव, परन्तु गृहीतग्राहित्वान्न प्रमा, एवं च प्रमाकरणत्वाभानान्न लौकिकशब्दः प्रमाणमिति मीमांसकाः ।

गृहीतग्राहित्वं च यज्जातीययथार्थज्ञानत्वावच्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयत्वम्। यथा स्मृतित्वावच्छेदेन समानाकारानुभवोत्तरत्वमतः स्मृतेर्गृहीतग्राहित्वम्।

प्रमात्वं चाऽगृहीतग्राहित्वम्, यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयान्ययथार्थज्ञानत्वं तत्। धारावाहिकद्वितीयादिप्रत्यक्षाणां गृहीतग्राहित्वेनाऽप्रमात्वापत्तिरतो यद् ज्ञानत्वमपहाय यज्जातीयेत्युक्तम्। यद्विशेष्यकयत्प्रकारकज्ञानत्वेत्यर्थः। तथा च प्राथमिकप्रत्यक्षे समानाकारनिश्चयोत्तरत्वाभावात्प्रमात्वसंगतिः।

भ्रमात्मकप्रत्यक्षस्यापि यत्पदाग्राह्यत्वेन तज्जातीयान्यज्ञानत्वात्प्रमात्वापत्तिरतो विशिष्टेति। तद्वति तत्प्रकारकेत्यर्थः। अग्रे यथार्थपदं स्पष्टार्थम्। यज्जातीयविशिष्ट ज्ञानत्वसमानाधिकरणं समानाकारनिश्चयोत्तरत्वमित्युक्तौ धारावाहिकद्वितीयादिप्रत्यक्षाणां अप्रत्यक्षत्वापत्तिरतो ज्ञानत्वावच्छेदेनेति। तथा च तादृशविशिष्टज्ञानत्वव्यापकमित्यर्थः। तथा च प्राथमिकप्रत्यक्षे व्यापकत्वविरहान्नायं घट इत्यादिप्रत्यक्षस्याऽप्रमात्वापतिः। निर्विकल्पकप्रत्यक्षोत्तरत्वमादाय प्रत्यक्षेऽप्रमात्वानुपपत्तिवारणाय समानाकारेति। समानाकारत्वं च स्वविषयताव्यापकविषयताकत्वम्। निश्चयोत्तरत्वमित्यत्र ज्ञानोत्तरत्वं कथं नोक्तमिति विभावनीयम्। तद्वति तत्प्रकारकत्वरूपप्रमात्वोपेक्षणं स्मृतीनां प्रमात्ववारणार्थम्। एतावता शाब्दबोधस्य प्रत्यक्षानुमित्यतिरिक्तत्वेन वैशेषिकमतनिरासेपि शाब्दबोधस्य प्रमात्वाभावेन लौकिकशब्दो न प्रमाणं प्रमाजनकत्वाभावादिति मीमांसकमतं न श्रद्धास्पदम्। आप्तोक्तत्वनिश्चयस्याकारणत्वात्। आप्तोक्तस्य संशये अर्थज्ञानशून्यबाल-शुकाद्युच्चरितस्यापि सामग्रीबलेन शाब्दबोधात्।

नाप्तोक्तता तु वाक्यार्थगर्भा ज्ञातोपयुज्यते।
वाक्यार्थानामपूर्वत्वात्संशयेप्यन्वयोदयादिति॥

वाक्यार्थानां शाब्दबोधात्पूर्वमज्ञायमानत्वात्-वाक्यार्थघटिता आप्तोक्तता तु ज्ञाता (निश्चिता) सती शाब्दबोधे नोपयुज्यते, तथाऽऽप्तोक्तत्वस्य संशये शाब्दबुद्धेरुत्पादादपि तस्याः शाब्दबोधे नोपयोगः इति पद्यार्थः। अपि च च बाल-शुकादेः समुच्चयः।

ननु शाब्दसामग्रीसत्त्वेपि घटमिति वाक्यं कर्मताधर्मिकआधेयतासंसर्गकघटप्रकारकबोधेच्छया नोच्चरितम्, प्रमेयधर्मिकाधेयतासंसर्गकप्रमेयप्रकारकबोधेच्छ-

योच्चरितमिति वा तात्पर्यनिश्चयसत्वे घटमिति वाक्याद् कर्मत्वं घटीयमिति- शाब्दापत्तिवारणाय कर्मताधर्मिकाधेयतासंसर्गकघटप्रकारकशाब्दबोधे तादृश- बोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानमवश्यं कारणं वाच्यम्। तथा च शाब्दबोधस्य गृहीतग्राहित्वेनाऽप्रमात्वमिति प्रभाकरमतमपि न सम्यक्।

प्रमेयत्वेन कर्मत्वागाहि प्रमेयत्वेन घटावगाहि प्रमेयं घटीयम्, कर्मत्वं प्रमेयीयम् इति बोधेच्छयोच्चरितमितितात्पर्यनिश्चयसत्वेपि घटमित्यादिवाक्या- त्कर्मत्वं घटीयमितिवारणाय कर्मतात्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्न- प्रकारताशालिबोधेच्छयोच्चरितत्वनिश्चयत्वेनैव तात्पर्यनिश्चयस्य कारणत्वेन कर्मत्वं घटीयमितिवाक्यार्थस्य तात्पर्येऽनिवेशात्, निरूप्यनिरूपकभावापन्नविषयताया एव तात्पर्ये प्रवेशात्।

वस्तुतस्तु परस्परजन्ये व्यभिचारवारणाय कार्यतावच्छेदककोटौ अव्यव- हितोत्तरत्वनिवेश आवश्यकः, एवं कालान्तर्भावेणापि। विशिष्यकार्यकारणभावे च तात्पर्यहेतुभूतानां प्रकरणज्ञानानामेव कारणत्वमुचितम्, तद्धेतोरेव तदस्तु किं तेनेति न्यायात्। कार्यकारणभावस्योभयत्रैव तुल्यत्वाच्च। अनन्यथासिद्ध- त्वस्योभयत्र कल्प्यत्वेऽपि नियतपूर्ववर्तितायाः प्रकरणज्ञाने क्लृप्तत्वेन कल्पना- लाघवाच्च। यथा च तत्तत्प्रकरणज्ञानोत्तरं जायमानायां शाब्दबुद्धौ तत्प्रकरण- ज्ञानत्वेन हेतुत्वमिति न्यायसिद्धान्तः। एतेन तात्पर्यस्य संशये व्यतिरेकनिश्चये च शाब्दानुत्पादात्तात्पर्यनिश्चयो हेतुः, तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्। युगपदनेकार्थोपस्थितौ च एकार्थमात्रान्वये तात्पर्यनिश्चयस्यैव विनिगमकत्वात् च। तथा च तात्पर्यघटकतया शाब्दात् पूर्वं वाक्यार्थसिद्धेः प्रत्यक्षानुमितिभ्यां भिन्नमनुभवं जनयन्नपि शब्दो न प्रमाणं ग्रहीतग्राहित्वादिति वदन्तः प्रभाकराः परास्ताः प्रकरणज्ञानस्यैव हेतुत्वमित्यास्तां विस्तरः।

आचार्यास्तु एते पदार्थाः परस्परं संसर्गवन्तः-आकाङ्क्षायोग्यताऽऽसत्तिमत्- पदस्मारितत्वादिति वैशेषिकानुमाने व्यभिचारः। येन पयसा कदापि कस्यापि सेचनं न जातं तत्र पयःपदार्थस्य सेचनपदार्थस्य च संसर्गरूपसाध्याभावेन हेतोश्च सत्त्वात्। यदि च संसर्गवत्त्वं न संसर्गनिर्णयः किन्तु संसर्गस्वरूपयोग्यत्वम् तदा साध्यनिश्चयाभावात् व्यर्थमेव स्यात् अनुमानम्। तथा च स्वरूपयोग्यता- निश्चयेऽपि संसर्गानिर्णयाद् वाक्यस्य संसर्गनिश्चयात्मकफलकत्वाऽसंभव इति भावः।

हेतुश्च योग्यताघटितः, योग्यता चैकपदार्थेऽपरपदार्थवत्त्वम्, एवञ्च परामर्शकाले एव साध्यनिश्चयेन सिद्धसाधनाच्च। अनुमितेः पूर्वं हेतुज्ञानस्य नियमेनाऽपेक्षणात्। एवमेतानि पदानि स्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् इत्यादिपदपक्षकानुमाने व्यर्थविशेषणत्वं हेतोः, आकाङ्क्षाज्ञानस्याऽकारणत्वात्। आकाङ्क्षा च समभिव्याहृतपदस्मारितपदार्थजिज्ञासारूपा, सा च स्वरूपसती हेतुः। अनुमितौ च हेतुनिश्चयस्याऽपेक्षणीयत्वात्, आकाङ्क्षाया लिङ्गविधया हेतुत्वासंभवेन शब्दस्य प्रमाणान्तरत्वमवश्यं स्वीकार्यम् इति भावः।

नच योग्यताविशिष्टाऽऽसत्तिरेव हेतुरस्तु, अलमाकाङ्क्षाया हेतुघटकत्वेनेति वाच्यम्। तथा सति अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम् इत्यत्र निराकाङ्क्षयो राजपदपुरुषपदयोर्व्यभिचारापत्तेः। राजपुरुषान्वये तात्पर्यविरहादेव राजपुरुषपदार्थसंसर्गज्ञानपूर्वकत्वरूपसाध्याभाववति हेतोः सत्त्वात्। तात्पर्यसहितयोग्यासत्तिमत्त्वहेतुना पदार्थसंसर्गज्ञानपूर्वकत्वसाधने तु हेतोर्व्यर्थविशेषणघटितत्वापत्तेः। तत्र हि योग्यताविशेषणस्य निष्फलत्वात्। तात्पर्यं हि तत्पदार्थवत्तत्पदार्थबोधेच्छयोच्चरितत्वम्। तच्च तत्पदार्थवत्तत्पदार्थज्ञानपूर्वकत्वनियतमिति तत्तदर्थतात्पर्यकत्वस्यैव हेतुत्वे शेषवैयर्थ्यात्, इति वदन्ति। तदुक्तम् —

अनैकान्तः परिच्छेदे संभवे च न निर्णयः।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना॥

गदाधरभट्टाचार्यपादानां महती प्रसिद्धेयं रचना वर्तते, दीधितेर्बृहत्कायभूता याख्या या च 'गादाधरी' नाम्ना प्रसिद्धि गताऽस्तीति श्रूयते। उदयनाचार्यविनिर्मितस्याऽऽत्मतत्त्वविवेकग्रन्थस्याप्युपरि गदाधरभट्टाचार्यमहोदयानां गादाधरी नाम्नी टीका समुपलभ्यते। एवं 'तत्त्वचिन्तामणि' नामकग्रन्थस्य कतिपयभागानामुपरि अपि एभिर्महानुभावैर्गादाधरीतिपदाभियेधा टीका लिखितेति श्रूयते। टीकातिरिक्ता अपि एतेषामनेका मूलभूता ग्रन्थाः सम्मिलन्ति, येषां ग्रन्थानां प्रायो द्विपञ्चाशत् ५२ संख्याऽबाधिता दृश्यते। येषु च व्युत्पत्तिवाद-शक्तिवादप्रभृतयश्च मौलिकग्रन्था विदुषां समाजे विशेषतः प्रसिद्धिं गताः सन्तः प्रचलन्ति। तैर्ग्रन्थैरेते महानुभावा महतीं प्रतिष्ठां प्राप्ताः सन्तो गौरवञ्चानुभवन्तो दृष्टिगोचरतां गच्छन्तीत्यत्र नास्ति लेशतोऽपि सन्देहानध्यवसायावसरः।

अयं महानुभावो गदाधरभट्टाचार्यनामा सुधीरत्यन्तं लोकप्रियो विद्वान् वारेन्द्रश्रेणिकुलोत्पन्नः 'पवना' मण्डलान्तर्गत 'पद्मीपाश' ग्रामनिवासी आसीत्। "हरिराम" तर्कवागीश्च स्वनामधन्योऽस्य गदाधरभट्टाचार्यस्य गुरुरासीदिति श्रूयते। दिवंगते गुरौ चतुष्पाठ्यामेवाऽयं महानुभावः स्वीयमध्यापनं कृतवा-नित्यपि श्रुतिगोचरीक्रियते। स्वनामधन्यः श्रीजीवाचार्यमहाशयोऽस्य जन्मदाता पिताऽऽसीत्। सप्तदशशताब्द्यामस्य महानुभावस्य जन्म जातमिति श्रूयते।

निधाय हृदि विश्वेशं स्मृत्वा गुरुपदाम्बुजम्।
ज्वालाप्रसादगौड़ेन भूमिका लिख्यते मया॥

विद्याव्यसनिनां कश्चिदुपकारोऽनया भवेत्।
मन्येऽहं सफलां चैनां गुरुत्वरश्रमवेदनाम्॥

अज्ञानाद् भ्रान्तिदोषाद्वा जाताऽशुद्धिर्विशेषतः।
मनुष्यसुलभां मत्वा क्षन्तव्या सा क्षमापरैः॥

त्रयोविंशत्यधिके सहस्रद्वयवर्षके।
भाद्रशुक्लचतुर्थ्यां वै समाप्तिमगमदियम्॥

—ज्वालाप्रसादगौड़ः

# विषयानुक्रमणिका

श्रीः

श्रीगणेशाय नमः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
तत्त्वालोकप्रकाशाय दीपिकेयं प्रकाश्यते ॥

---

शाब्दबोधाऽऽकाङ्क्षाज्ञानयोः कार्यकारणभावज्ञानं व्युत्पत्तिः, तदनुकूलव्यापारो वादपदार्थः । यद्यपि ज्ञानानुकूलव्यापारो वादपदार्थः, तत्त्वबुभुत्सोः कथाया वादपदार्थत्वात्, तथापि विशिष्टवाचकपदानामितिन्यायेनाऽनुकूलव्यापार एव तदर्थ इति ।

ननु ग्रन्थनामनिर्देशेन व्युत्पत्तिवादो मया निरूप्यते इति प्रतिज्ञा लभ्यते, व्युत्पत्तिवादपदार्थश्चोक्तव्यापारः, तादृशव्यापारश्च "अभेदश्च प्रातिपदिकार्थे" इत्यादि ग्रन्थेनैव तदुपयोगितयैव "स च क्वचिदभेदः क्वचिच्च तदतिरिक्त एवे" त्यादिग्रन्थसन्दर्भेण संबन्धद्वैविध्यमपि वक्तुमुचितम् । परन्तु शाब्दबोधे चेत्यादिग्रन्थस्तु अर्थान्तरग्रस्त एवाऽप्रतिज्ञातत्त्वादिति चेन्न । अवान्तरधर्मप्रकारकजिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानस्य कारणत्त्वात्तदर्थं शाब्दबोधे चेत्यादिग्रन्थः । सामान्यधर्मश्च एकपदार्थानुयोगिकाऽपरपदार्थप्रतियोगिकाऽऽकाङ्क्षाप्रयोज्यत्वरूपः ।

वस्तुतस्तु वृत्त्युपस्थिता एव पदार्थाः शाब्दबोधे भासन्ते इति नियमेन संबन्धांशेपि शक्तिस्वीकर्तॄणामन्विताभिधानवादिनां भट्टानां मतं दूषितं भट्टाचार्येण । तत्रेदमाशङ्कितम् । ननु वृत्त्यनुपस्थापितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे द्रव्यं घट इत्यादौ द्रव्यघटाद्योरभेदबोधस्येव संयोगसमवायकालिकानामबाधितयावत्संसर्गाणां भानापत्तिः, एवं चैत्रः पचतीत्यादौ कालिकादेरपि भानसंभवेन पाकानुकूलकृत्यादिशून्येपि चैत्रादौ तादृशप्रयोगापत्तिरित्याशङ्कासमाधानपरोयं ग्रन्थः, शाब्दबोधे चेति । चस्त्वर्थे संसर्गपदोत्तरं योजनीयः । तथाचैकपदार्थेऽपरपदार्थस्य संसर्गस्तु इत्यर्थः । नच शाब्दबोधे च संसर्गः संसर्गमर्यादया भासते इत्येव कथं नोक्तमिति वाच्यम् । वृत्त्युपस्थाप्यसमवायादिसंसर्गस्यापि संग्रहापत्तेः, तथासति तदन्वय-

श्रीः

ॐ नमो गणेशाय

# अथव्युत्पत्तिवादः

**शाब्दबोधेचैकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते ।**

बुद्धेराकाङ्क्षाज्ञानव्यभिचारितयाऽऽकाङ्क्षाज्ञानविशेषकार्यकारणभावबोधकस्याऽभेदान्वयबोधश्चेत्यादेरसंगतिः स्यात् । अतोवृत्तिविषयसकलसंसर्गाऽसंग्राहकं आकाङ्क्षाभास्यसकलसंसर्गसंग्राहकं परिचायकमाह । **शाब्दबोधेचेत्यादिना** । **शाब्दबोधे** इत्यत्र निरूपितत्वं सप्तम्यर्थः । **तस्य** भासधात्वर्थविषयतायामन्वयः । शाब्दबोधत्वं च एकपदार्थेऽपरपदार्थसंसर्गावगाहिबुद्धित्वम् । **एकपदार्थे** इत्यत्र सप्तम्यर्थोऽनुयोगित्वम्, तत्र प्रकृत्यर्थस्याऽऽधेयतयाऽन्वयः । अनुयोगित्वस्य च प्रथमान्तार्थे संसर्गे निरूपकतयाऽन्वयः । **एवमपरपदार्थस्ये**तिषष्ठ्यर्थः प्रतियोगित्वम्, अन्वयः पूर्ववत् । **संसर्गमर्यादा नाम**-आकाङ्क्षा, संसर्गस्य मर्यादा "भानं" यत इति व्युत्पत्तेः । प्रयोज्यत्वं तृतीयार्थः । तस्य भासधात्वर्थविषयतायामन्वयः । तस्याश्चाऽऽख्यातार्थाऽऽश्रयत्वे । तस्य प्रथमान्तार्थे संसर्गेऽन्वयः ।

तथा च एकपदार्थनिष्ठानुयोगितानिरूपकः अपरपदार्थनिष्ठप्रतियोगितानिरूपकः संसर्गः आकाङ्क्षाप्रयोज्यसंसर्गत्वाऽभिन्नशाब्दबोधनिरूपितविषयतावानिति बोधः । एवंच एकपदार्थानुयोगिकाऽपरपदार्थप्रतियोगिकसंसर्गत्वव्यापकत्वं "**असतिबाधके** इति न्यायेन" यथा आकाङ्क्षाप्रयोज्यसांसर्गिकविषयतायां लभ्यते तथा विनिगमनाविरहेण एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गत्वे आकाङ्क्षाप्रयोज्यसांसर्गिकविषयताव्याप्यत्वलाभात् एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गो न वृत्तिभास्य इति फलितम् ।

**अत्रेदं बोध्यम्** । यत्र एकत्वाविवक्षायां **घटः इति** प्रथमान्तघटपदाद् घटोपस्थितिः प्रमाणान्तरादस्तित्वोपस्थितिः विनैवाऽऽकाङ्क्षाज्ञानं अस्ति तावान् घट इति शाब्दबोधोभट्टसम्मतः ।

पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोश्वोधावतीतिधीः ।

इति भट्टोक्तेः । श्वैत्यादिज्ञानस्य प्रत्यक्षजन्यत्वेपि विशिष्टज्ञानस्य शाब्दबोधेऽन्तर्भावनीयतयाऽऽकाङ्क्षाज्ञानस्य व्यतिरेकव्यभिचारात्तन्न कारणमिति मीमांसकमतसमाधानाय शाब्दबोधत्वावच्छेदेन एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गस्य आकाङ्क्षाप्रयोज्यविषयत्वबोधनाय शाब्दबोधे चेत्यादिग्रन्थः । उक्तज्ञानद्वये चाऽलौकिकप्रत्यक्षत्वस्वीकारान्न व्यभिचारः ।

**एतेन** प्रत्यक्षविषयीभूतसंसर्गस्यापि उद्देश्यतावच्छेदकाक्रान्ततया तत्र विधेयाभावेन व्याप्यव्यापकभावविरहेपि न क्षतिः । उक्तग्रन्थस्य मीमांसकमतनिरासप्रयोजनकत्वात् ।

**अथवा** सप्तम्यन्तार्थशाब्दबोधनिरूपितत्वस्योद्देश्यतावच्छेदकीभूततादृशसंसर्गत्वेऽन्वयः । तथा च शाब्दबोधनिरूपिता या एकपदार्थानुयोगिकाऽपरपदार्थप्रतियोगिकसंसर्गनिष्ठसंसर्गता तदाश्रयस्तादृशविषयतावानित्यर्थे तात्पर्यान्न व्यापकत्वहानिरिति ध्येयम् ।

शक्तिभास्यसंसर्गाऽसंग्रहार्थं एकत्वमपरत्वं चेत्युक्तम्, तथा च शक्तिभास्य संसर्गस्य न संग्रहः, एकपदार्थप्रतियोगिकत्व-एकभिन्नपदार्थानुयोगिकत्वयोरभावात् ।

अथैकत्वापरत्वयोर्यदि पदेऽन्वयस्तदा एकं यत्पदं तदर्थानुयोगिकः एकभिन्नं यत्पदं तदर्थप्रतियोगिक इत्यर्थः । नचैकत्वस्य केवलान्वयितया एकभेदाऽप्रसिद्धिः, द्वित्वादिना तद्भेदस्य प्रसिद्धावपि स्वस्मिन्नपि तद्भेदसत्वेन शक्तिभास्यसंसर्गसंग्रहापत्तिः । प्रातिस्विकरूपेण निवेशे तु अननुगम इति वाच्यम् । पदविशिष्टसंसर्गतानिवेशे दोषाभावात् । वै० स्वप्रयोज्यविशेष्यताकत्व, स्वभिन्नपदप्रयोज्यप्रकारताकत्वोभयसं० । संसर्गतायां पदवैशिष्ट्यनिवेशेन एकस्यैव समवायस्य शक्तिभास्यतयाऽऽकाङ्क्षाभास्यतया च न वृत्तिभास्ये आकाङ्क्षाप्रयोज्यत्वापत्तिः, एकत्वप्रकारतानिरूपितघटविशेष्यताकसमवायनिष्ठसंसर्गतायाः पदविशिष्टत्वेपि घटत्वप्रकारतानिरूपितघटविशेष्यताकसमवायनिष्ठसंसर्गतायाः स्वभिन्नपदप्रयोज्यप्रकारताकत्वाभावेन पदविशिष्टत्वाभावादितिचेन्न ।

आख्यातार्थकालकृत्योराकाङ्क्षाभास्यस्याऽवच्छिन्नत्वसंसर्गस्य संग्रहो न स्यात् आख्यातस्यैक्यात् । नचाऽऽख्यातेन कालकृत्युभयबोधने सकृदुच्चरित इति व्युत्पत्तिविरोध इति वाच्यम् । सकृदुच्चरितपदस्याऽनेकशक्तिविषयार्थाऽबोधकत्वे तात्पर्यात् । **वस्तुतस्तादृशव्युत्पत्तौ** मानाभावः । सकृदुच्चरितादपि उभयबोधस्य

मणिकारादिसम्मतत्वात् । अत एव तात्पर्यसत्वे सकृदुच्चरितादपि शब्दादुभय-बोधस्येष्टत्वादिति मणिकारेणोक्तमित्यन्यत्र विस्तरः ।

नचैकत्वाऽपरत्वयोः पदार्थ एवान्वयोस्तु । तथाचैकपदार्थानुयोगिकः एकभिन्नोयः पदार्थस्तत्प्रतियोगिक इत्यर्थः । पदार्थविशिष्टः संसर्गः इत्यनुगमः । वै०स्वनिष्ठविशेष्यताकत्व-स्वभिन्नपदार्थनिष्ठप्रकारताकत्वोभयसं० । आख्यातस्थले च पदार्थद्वैविध्यात्तत्संगर्गस्य नाऽसंग्रह इति वाच्यम् । नीलो घट इत्यादौ आकाङ्क्षाभास्यस्य तादात्म्यस्याऽसंग्रहप्रसंगात्, तत्र पदार्थयोरैक्येन संसर्गानुयोगिप्रतियोगिनोरभेदात् ।

नचैकत्वापरत्वयोः पदार्थतावच्छेदके एवान्वयोस्तु । तथासति एकं यत्पदार्थतावच्छेदकं तदवच्छिन्नानुयोगिकः एकभिन्नं यत्पदार्थतावच्छेदकं तदवच्छिन्नप्रतियोगिक इत्यर्थः । उक्तस्थले च घटत्वनीलत्वयोर्भेदेन तादात्म्यस्य संग्रहः । अनुगमस्तुपदार्थतावच्छेदकविशिष्टः संसर्गइति । वै० स्वाच्छिन्नविशेष्यताकत्व-स्वभिन्नधर्मावच्छिन्नप्रकारताकत्वोभयसंबन्धेनेति वाच्यम् । एवमपि संपन्नो व्रीहिरित्यादौ व्रीहित्वानुयोगिकैकत्वप्रतियोगिकससर्गस्य स्वरूपसंबन्धविशेषस्य संग्रहो न स्यात् । व्रीहित्वस्य स्वरूतो भानेन पदार्थतावच्छेदकानवच्छिन्नत्वात् । न च व्रीहित्वेऽन्वयपक्षो न सिद्धान्तः, अन्वयितावच्छेदकरूपेणान्वयिनो "व्रीहित्वस्या" नुपस्थितेरित्यग्रेव्यक्तीभविष्यतीति वाच्यम् । चैत्रस्य गुरुकुलमित्यत्र पदार्थतावच्छेदके गुरुत्वे षष्ठ्यर्थनिरूपितत्वस्याऽन्वयः सर्वसम्मतस्तस्याऽसंग्रहप्रसंगात् । चैत्रनिरूपितगुरुत्ववत्कुलमिति बोधे गुरुत्वस्य गुरुत्वत्वेन भानेपि गुरुत्वत्वं न पदार्थतावच्छेदकं अपितु पदार्थतावच्छेदकतावच्छेदकमिति गुरुत्वत्वावच्छिन्नविशेष्यतायाः पदार्थतावच्छेदकानवच्छिन्नत्वादिति । नच साक्षात्परंपरासाधारणावच्छेदकतानिवेशे नोक्तदोषः । तथाच धर्मविशिष्टःसंसर्ग इत्यर्थे तात्पर्यमितिवाच्यम् । तथापि लोमत्व-लाङ्गूलत्वयोरपि पशुपदार्थतावच्छेदकतया तदवच्छिन्नयोः संसर्गस्य संयोगस्य वृत्तिभास्यस्य संग्रहप्रसंगात् ।

**अयं भावः** । चैत्रस्य गुरुकुलमित्यत्र निरूपितत्वं षष्ठ्यर्थः, तस्याऽऽश्रयतासंबन्धेन गुरुत्वेऽन्वयः । पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधस्तुसंपन्नो व्रीहिरित्यादाविव यत्पदार्थस्य पदार्थतावच्छेदकेन सहान्वयः प्रामाणिकस्तत्पदार्थभिन्नत्वं निवेश्य परिहरणीयः । यदि च षष्ठ्यर्थनिरूपितत्वस्य स्वाश्रयगुरुत्वसंबन्धेन गुरावेवाऽन्वयः स्वीक्रियते तदा घटो नास्तीत्यादौ स्वरूपतो भासमानघटत्वस्याऽवच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयाभ्युपगमात्तत्संसर्गताया असंग्रहापत्तेः ।

उपस्थितीयविशेष्यताविशिष्टः संसर्ग इत्यर्थे तात्पर्यात्। वै० स्वप्रयोज्य-विशेष्यतानिरूपकत्व-स्वनिरूपितत्वाभाववदुपस्थितीयविशेष्यताप्रयोज्यप्रकार-तानिरूपकत्वोभयसं०। यथा नीलो घट इत्यादौ उपस्थितीयघटनिष्ठविशेष्य-ताप्रयोज्या या शाब्दबोधीयघटनिष्ठविशेष्यता तन्निरूपकत्वस्य स्वपदग्राह्यो-पस्थितीयघटविशेष्यतानिरूपितत्वाभाववती या उपस्थितीयनीलनिष्ठविशेष्यता तत्प्रयोज्यशाब्दबोधीयनीलनिष्ठप्रकारतानिरूपकत्वस्य च तादात्म्यनिष्ठसंसर्ग-तायां सत्वात्तादात्म्यसंग्रहः। वृत्तिभास्यसंसर्गस्य च न संग्रहः। उपस्थितीय-घटनिष्ठविशेष्यताप्रयोज्यशाब्दबोधीयघटनिष्ठविशेष्यतानिरूपकत्वस्य समवाय-निष्ठसंसर्गतायां सत्वेपि उपस्थितीयघटत्वनिष्ठप्रकारतयां उपस्थितीयघटनिष्ठ-विशेष्यतानिरूपितत्वाभावविरहेण द्वितीयसंबन्धाभावात्।

ननु संयोगेनाऽभावोनास्तीति वाक्यजन्यबोधे नञर्थाभावेऽभावत्वप्रति-योगिकस्याऽवच्छिन्नप्रतियोगिताकत्वसंसर्गस्याऽऽकाङ्क्षाभास्यस्य संग्रहानुप-पत्तिः। उपस्थितीयनञर्थाऽभावनिष्ठविशेष्यताप्रयोज्यशाब्दबोधीयाऽभावनिष्ठ-विशेष्यतानिरूपकत्वस्योक्तसंसर्गतायां सत्वेपि अभावपदजन्योपस्थितीयाऽभाव-त्वनिष्ठप्रकारतायां स्वपदग्राह्योपस्थितीयाऽभावनिष्ठविशेष्यतानिरूपितत्वाभाव-विरहात्, नञ्पदाऽभावपदजन्योपस्थित्योः समानाकारत्वेन तदीयविषयतयो-र्निरूप्यनिरूपकभावादितिचेन्न। स्वप्रयोजकवृत्तिज्ञानीयविषयत्वाऽनिरू-पितवृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपकत्वस्य द्वितीयसंबन्धत्वात्। अभावपदवृत्तिज्ञानं चाऽभावपदजन्यबोधवि षयत्वप्रका-रतानिरूपितविशेष्यतावानभाव इत्याकारकम्। नञ्पदवृत्तिज्ञानं च नञ्पद-जन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतावानभाव इत्याकारकम्। तथाच नञ्पदाऽभावपदवृत्तिज्ञानयोरसमानाकारत्वात्तदीयविषयतयोर्न निरूप्यनिरूप-कभावः। एवं च संयोगेनाऽभावो नास्तीत्यादौ अवच्छिन्नप्रतियोगिताकत्व-संसर्गे स्वपदग्राह्योपस्थितीयविशेष्यताप्रयोज्यविशेष्यतानिरूपकत्वस्य स्वपद-ग्राह्योपस्थितीयविशेष्यताप्रयोजकनञ्पदवृत्तिज्ञानीयविषयतानिरूपित्वाभाववती अभावपदवृत्तिज्ञानीयविषयता "तस्याः शाब्दबोधीयाभावत्वनिष्ठप्रकारता-प्रयोजकत्वात्" तत्प्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपकत्वस्य च सत्वात्तत्संग्रहः। परन्तु अभावद्वयगर्भवाक्यस्थले संयोगेनाऽभावाभाव इत्यादौ वृत्तिज्ञानयोः समानाकारकत्वात्तद्विषयतयोर्निरूप्यनिरूपकभावादवच्छिन्नप्रति-योगिताकत्वसंसर्गस्याऽसंग्रहादुक्तानुगम उपेक्षणीयः। एवं वृत्तिज्ञानीयविषय-

त्वानिरूपितविषयताप्रयोज्यस्य संसर्गत्वे लाघवाद् वृत्त्यविषयः संसर्ग आकाङ्क्षाभास्य इत्येव वक्तुमुचितम्[1]।

अत्रोच्यते। पदार्थान्तरत्वव्यवहारो हि पदभेदप्रयुक्तः—वृत्तिभेदप्रयुक्तश्च। तदुभयसाधारणमेवापरपदार्थत्वमिह विवक्षितम्। एवंच संसर्गताविशिष्टसंसर्गत्वमर्थः। वै०स्वतादात्म्य-स्वनिरूपितप्रकारताविशिष्टविशेष्यताकत्वोभयसं०। विशेष्यतायां प्रकारतावै०स्वप्रयोजकपदभिन्नपदप्रयोज्यत्व-स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यत्वान्यतरसं०[2]।

---

नत्वा सदाशिवं साम्बं प्रणियत्य गुरुं तथा
ज्वालाप्रसादगौड़ेन टिप्पण्यारभ्यते मुदा

१ एतेन पदार्थत्वं पदवृत्तिज्ञानीयविषयताप्रयोज्यविषयत्वम्, तद्घटकवृत्तिज्ञानीयविषयत्वे एकत्वाऽपरत्वयोरन्वयः। तथाच संसर्गताविशिष्टसंसर्गत्वमर्थः।

वै० स्वतादात्म्य—स्वनिरूपकप्रकारताप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितविषयताप्रयोज्यविशेष्यताकत्वोभयसंबन्धेन। अवच्छिन्नप्रतियोगिताकत्वनिष्ठसंसर्गतानिरूपकाऽभावत्वनिष्ठप्रकारताप्रयोजिकाऽभावपदवृत्तिज्ञानीयाऽभावत्वविषयतैव न तु नञ्पदवृत्तिज्ञानीयविषयता तयोरसमानाकारकत्वात्" तादृशविषयतानिरूपितानञ्पदवृत्तिज्ञानीयाभावविषयता तत्प्रयोज्यविशेष्यताकत्वस्य च तादृशसंसर्गत्वे सत्वात्तत्संग्रहः। समवायनिष्ठसंसर्गतानिरूपकघटत्वप्रकारताप्रयोजकवृत्तिज्ञानीयघटत्वविषयतानिरूपितत्वस्यैव घटनिष्ठविशेष्यतायां सत्वा"न्निरूपितत्वाभावविरहेण" न वृत्तिभास्यसंसर्गसंग्रह इति निरस्तम्। विशेष्यतायां तादृशविषयताप्रयोज्यत्वं च तादृशविषयताप्रयोज्योपस्थितिविषयताप्रयोज्यत्वम्, तथाचोपस्थितिविषयतयोः समानाकारकत्वादुक्तानुपपत्तितादवस्थ्याच्चेति ध्येयम्।

२ संयोगेनाऽभावो नास्तीत्यादौ स्वावच्छिन्नप्रतियोगिताकत्वरूपसंसर्गताया मस्त्येव, स्वतादात्म्यस्य, स्वनिरूपिताऽभावत्वनिष्ठप्रकारतावैशिष्ट्यमपि प्रकारताप्रयोजकाऽभावपदभिन्ननञ्पदप्रयोज्यत्वसंम्बन्धेनाभावनिष्ठविशेष्यतायां सत्वात्।

द्रव्यं घट इत्यादौ द्रव्यत्वद्रव्ययोः समवायस्य वारणाय स्वतादात्म्यनिवेशः। अन्यथा अभेदनिष्ठसंसर्गतावैशिष्ट्यस्य स्वपदग्राह्याभेदनिष्ठसंसर्गतानिरूपितप्रकारताप्रयोजकघटपदभिन्नद्रव्यपदप्रयोज्यत्वसम्बन्धेन तादृशप्रकारतावैशिष्ट्यस्य द्रव्यत्वनिष्ठप्रकारतानिरूपितद्रव्यनिष्ठनिरवच्छिन्नविशेष्यतायां सत्वेन तादृशविशेष्यताकत्वस्य समवायनिष्ठसंसर्गतायां सत्वात्तत्समवायस्य संग्रहापत्तेः। शक्तिभास्यसंसर्गवारणाय

निरूप्यनिरूपकभावस्तु प्रकारताप्रयोजकपदविषयत्व-अव्यवहितोतरत्वाव-च्छिन्नविषयत्व-विशेष्यताप्रयोजकपदविषयत्वानामेव। अस्तिपदविषयत्वस्य तत्वेपि तत्प्रयोज्यत्वस्य घटनिष्ठविशेष्यतायामसत्वान्न संग्रहः।

नन्वेवमपि घटोस्तीत्यादौ घटघटत्वयोः समवायस्य संग्रहापत्तिः, घट-पदाव्यवहितोत्तराऽस्तित्वज्ञानमिव, अस्तिपदाव्यवहितपूर्ववर्त्तिघटपदत्वज्ञानस्य कारणतया साक्षात्परंपरासाधारणकारणतावच्छेदत्वस्य वाऽस्तिविषयतायां सत्वाद् घटप्रकारताप्रयोजिका याऽऽकाङ्क्षाज्ञानीयाऽस्तिविषयता, तन्निरूपिता "व्यवहितपूर्वत्व" सांसर्गिकविषयतानिरूपिताघटपदविषयताप्रयोज्यत्वस्य घटविशेष्यतायां सत्वादिति चेन्न। स्वप्रयोजकविषयत्वे स्वप्रयोजकवृत्तिज्ञानीय-षयतासामानाधिकरण्यनिवेशेनोक्तदोषाभावात् तथाहि—उक्ताऽऽकाङ्क्षाज्ञा-नीयाऽस्ति "तिवन्ताऽसधातु" विषयतायाः कारणतावच्छेदकतया घटत्वप्रका-रताप्रयोजकत्वेपि घटत्वप्रकारताप्रयोजकीभूतवृत्तिज्ञानीयघटविषयतासामाना धिकरण्यविरहादिति ध्येयम्। नचैवमपि घटत्वप्रकारताप्रयोजिका याऽऽकाङ्क्षा-ज्ञानीया घटपदविषयता तन्निरूपित "अव्यवहितोत्तरत्व" सांसर्गिकविषयता-

---

द्वितीयसंबन्धनिवेशः। प्रकारतावैशिष्ट्यघट रूप्रथनसंबन्धनिवेश। नञ्द्वयगर्भवाक्यस्थले विशेष्यताप्रकारताप्रयोजकपदयोर्भिन्नत्वादेकनञर्थीभूताऽभावत्वनिष्ठप्रकारतावैशिष्ट्य-स्यापरनञर्थीभूताऽभावनिष्ठविशेष्यतायां सत्त्वात्तन्निरूपितसंसर्गतायाः संग्रहः।

द्वितीयसंबन्धनिवेशस्तु पचतीत्यादौ प्राग्गतार्थकालकृत्योः संसर्गसंग्रहार्थम्। अन्यथा पदभेदाभावात्तत्संग्रहो न स्यात्।

नच यत्र घटोस्ति कलशोस्तीतिसमूहालम्बनाकाङ्क्षाज्ञानं तत उभयपदवृत्तिज्ञानं-ततो घटोपस्थितिः तदुत्तरघटविषयकशाब्दबोधे घटत्वप्रकारत्वघटविशेष्यत्वयोर्विनि-गमनाविरहेण पदद्वयस्यैव प्रयोजकतया विशेष्यतायां प्रकारताप्रयोजकपद-भिन्नपदप्रयोज्यत्वसत्वात्तादृशविशेष्यतानिरूपितसंसर्गतायाः संग्रहापत्तिः। पदे स्वप्रयोजकपदसामान्यभिन्नत्वनिवेशे-विशेष्यतायां स्वप्रयोजकपदाऽप्रयोज्यत्वस्य वा निवेशे उक्तापत्ति ारणेपि नञ्द्वयगर्भवाक्यस्थलीयसंसर्गाऽसंग्रह इति वाच्यम्। स्वप्रयोजकपदनिष्ठाकाङ्क्षाज्ञानीयविषयतानिरूपितसांसर्गिकविषयतानिरूपितपदनिष्ठ-विषयताप्रयोज्यत्वसंसर्गस्य स्वप्रयोजकपदभिन्नपदप्रयोज्यत्वस्याने विवक्षणात्। स्वं-प्रकारता घटपदकलशपदविषयतयोर्निरूप्यनिरूपकभावविरहात् समूहालंबनाऽऽकाङ्क्षा-स्थले घटघटत्वयोः संसर्गताऽसंग्रहान्नोक्तापत्तिः। नञ्द्वयगर्भवाक्यस्थले नञ्द्वय-विषयतयोर्निरूप्यनिरूपकभावात्संसर्गतासंग्रहः।

**स च क्वचिभेदः क्वचिच्च तदतिरिक्त एवाऽऽधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः ।**

---

निरूपिताऽस्तिविषयताप्रयोज्यत्वस्य घटविशेष्यतयां सत्वात्समवायसंग्रहापत्तिरिति वाच्यम् । स्वप्रयोज्यत्वपदेन स्वसमानाधिकरणवृत्तिज्ञानीयविषयताप्रयोज्यत्वस्य विवक्षणात् । अस्तिविषयताप्रयोज्यत्वस्य घटविशेष्यतायां सत्वेपि अस्तिपदविषयतासमानाधिकरणवृत्तिज्ञानीयविषयताप्रयोज्यत्वाभावात् ।

तथाच स्वविशिष्टा याऽऽकाङ्क्षाज्ञानीयपदनिष्ठविषयता तन्निरूपितसांसर्गिकविषयतानिरूपितपदनिष्ठविषयतासमानाधिकरणवृत्तिज्ञानीयविषयता - प्रयोज्यत्वं फलितम् । स्ववै०स्वप्रयोजकत्व, स्वप्रयोजकवृत्तिज्ञानीयविषयतासामानाधिकरण्योभयसं० ।

**सच** । आकाङ्क्षाभास्यसंबन्धश्च । **क्वचित्** नीलो घट इत्यादौ । **अभेदः** । तादात्म्यम् । यत्तु अभेदो न संसर्गः, संसर्गो द्विष्ठ इत्यभियुक्तोक्तेः । तदसत् । संसर्गे द्विष्ठत्वं न पदार्थद्वयवृत्तित्वम् , किन्तु द्वित्वविशिष्टत्वम् , वै० स्वसामानाधिकरण्य, स्वाश्रयसामानाधिकरण्यान्यतरसं० । एवं विशिष्टबुद्धित्वहेतुकानुमानेनापि अभेदस्य संसर्गत्वं साधनीयम् । **क्वचिच्च** । घटमित्यादौ । **तदतिरिक्त एव** । अभेदातिरिक्त एव । आधेयत्वादिः । शाब्दबोधो हि द्विविधः—अभेदविषयको भेदविषयकश्च । भेदशब्दश्चाऽभेदान्यसंबन्धेषु पारिभाषिकः । भेदसबन्धविशेषानाह । **आधाराधेयेत्यादि** । अत्राऽऽधारश्चाऽऽधेयश्च प्रतियोगी चाऽनुयोगी च विषयश्च विषयी चेति द्वन्द्वः । तेषां भाव इति षष्ठीतत्पुरुषः । आदिपदाज्जन्यजनकभावस्वरूपसमवाय संयोगादिपरिग्रहः । तथाचाऽऽधारता-आधेयतेत्यादीनां प्रत्येकस्यसंसर्गत्वम् । ननु आधेयत्वादौ द्विष्ठत्वमनुपपन्नं, निरूपकत्वस्य वृत्त्यनियामकत्वात् । संयोगसमवायादिकं विहायाऽऽधारतात्वेन संसर्गस्याऽदृष्टचरत्वाच्चेति चेत्सत्यम् । नवीनमतेऽनुयोगिनिष्ठधर्मस्यैव सबन्धत्वात् । प्राचीनमते आधारतानिरूपिताधेयत्वादिः संसर्गः । तन्मते आधाराधेयभावः प्रतियोग्यनुयोगिभावः विषयविषयिभाव इत्यर्थः । तत्र वह्नित्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे वह्नित्व-अवच्छिन्नत्व—प्रतियोगित्वानां संसर्गत्वमिवाऽऽधारत्वाऽऽधेयत्वयोः संसर्गत्वोपपत्तिरिति ध्येयम् ।

कुत्राऽभेदः संसर्गमर्यादया भासते इति सामान्यतो नियमं दर्शयति । **अभेदश्चेति** । अत्र प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यहितपूर्ववर्त्तिना च पदे

अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते। यथा नीलो घटः— नीलघटमानय इत्यादौ घटादौ नीलादेः,

---

नोपस्थापितस्यैवाऽभेदः संसर्गमर्यादया भासते इति योजना। प्रातिपदिकार्थे इत्यत्र सप्तम्यर्थोऽनुयोगित्वम्, तत्र प्रकृत्यर्थस्याऽऽधेयतया, तस्य च निरूपकत्वसंबन्धेनाऽभेदेऽन्वयः। उपस्थापितस्येत्यत्र षष्ठ्यर्थः प्रतियोगित्वम्, तत्र प्रकृत्यर्थस्याऽधेयतया तस्य च निरूपकत्वसंबन्धेनाऽभेदेन्वयः। तथाच प्रातिपदिकविशिष्टोऽभेदः आकाङ्क्षाप्रयोज्यसांसर्गिकविषयतावानिति बोधः। वै०स्वप्रयोज्यविशेष्यताकत्व-स्वविशिष्टपदप्रयोज्यप्रकारताकत्वोभयसंबन्धेन। पदेस्ववै०स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्व-स्वाव्यवहितपूर्ववर्त्तित्वान्यतरसं०। प्रातिपदिकपदेन स्वपञ्चकेन च विशेष्यवाचकपदग्रहणम्। उदाहरति। यथेति। नीलो घट इत्यत्र घटे घटसमानविभक्तिकनीलपदोपस्थापितस्य नीलस्य, नीलघटमित्यत्र घटपदाव्यवहितपूर्ववर्त्तिनीलपदोपस्थापितस्य नीलस्य चाऽभेदः संसर्गो भासते इत्यर्थः[1]।

---

१ अत्रेदं बोध्यम्। यथाश्रुतमूलग्रन्थतोऽभेदत्वमेवोद्देश्यतावच्छेदकं प्रतीयते। तथा सति अभेदः प्रातिपदिकविशिष्टा याऽऽकाङ्क्षाप्रोज्यसांसर्गिकविषयता तद्वानित्यनुगमः। वै०पूर्ववत्। अत्र कल्पे आकाङ्क्षाप्रयोज्यसांसर्गिकविषयता उद्देश्यतावच्छेदककोटौ निवेशनीया। तथा सति आकाङ्क्षाप्रयोज्याभेदनिष्ठसांसर्गिकविषयता प्रातिपदिकविशिष्टा इत्यनुगमः वै० पूर्ववत्। अन्यथा घटपदस्य अभेदसंसर्गेण द्रव्यविशिष्टघटे लक्षणाधीनबोधे व्यापकत्वहानिः, प्रातिपदिकवैशिष्ट्याभावात्। तच्च ग्रन्थकृदसम्मतं प्रतिभाति।

नच क्रियाविशेषणस्थले स्तोकं पचतीत्यादौ अभेदसंसर्गस्यासंग्रहः, प्रातिपदिकविशिष्टत्वाभावादितिवाच्यम्। तत्र नियामकान्तरस्य वक्ष्यमाणत्वात्।

ननु पदविशिष्टोऽभेद इत्येवोच्यतां किं प्रातिपदिकविशिष्टोऽभेद इत्यनेन। तथाच यत्र यत्राऽऽकाङ्क्षाप्रयोज्याऽभेदनिष्ठसांसर्गिकविषयतात्वं तत्र तत्र पदविशिष्टत्वमिति व्याप्तौ स्तोकं पचतीत्यादावपि अभेदे धातुरूपपदविशिष्टत्वसत्त्वान्न व्यापकत्वहानिरिति चेन्न। घटमित्यादौ अमात्मकपदविशिष्टत्वस्य (व्यापकस्य) आधेयत्वनिष्ठसांसर्गिकविषयतायां तत्र (व्याप्यस्य) आकाङ्क्षाप्रयोज्याऽभेदनिष्ठसांसर्गिकविषयतात्वस्य विरहेण व्याप्यव्यापकभावानुपपत्तेः। नच व्यापकसत्वे का क्षतिरिति वाच्यम्। तस्या वक्ष्यमाणत्वात्।

**न तु विरुद्धविभक्तिमत्पदार्थस्य । नीलस्य घट इत्यादौ नीलघटाऽभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् ।**

---

उपस्थापितस्यैवेति एवकारो भिन्नक्रमः । स्वसमानविभक्तिकेनैवेत्यन्वयः । एवकारव्यवच्छेद्यं दर्शयति । नत्विति ।

**विरुद्धविभक्तिमत्पदार्थस्येति ।** विरुद्धविभक्तिकेन पदेनोपस्थापिस्येत्यर्थः । अभेदः संसर्गतया भासते इति पूर्वेणाऽन्वयः । ननु विरोधोऽसामानाधिकरण्यम् , तच्च प्रकृतेऽव्यवहितपूर्वत्वसंबन्धेन विभक्तिमति अव्यवहितपूर्वत्वसंबन्धेनावृत्तित्वम् , न तु समवायघटितम् । शब्दात्मकविभक्तीनामसाममानाधिकरण्यस्याऽसंभवात् । एवं च नीलो घट इत्यादौ विभक्त्योर्भिन्नतयाऽसामानाधिकरण्यादभेदान्वयबोधानुपपत्तिरिति चेन्न । विशब्दो विरुद्धवचनः । विरुद्धेन रुद्ध इत्यर्थात् विरुद्धधर्मवानित्यर्थः । विरोधप्रतियोगीधर्मश्च प्रथमात्वादिः । तथाच विशेष्यवाचकपदोत्तरविभक्तिवृत्तिप्रथमात्वादिधर्मविरुद्धधर्मवद्विभक्तिमत्पदार्थस्याऽभेदो नाकाङ्क्षाभास्य इति भावः । ननु नीलस्य घट इत्यादौ प्रयोज्यत्वं सप्तम्यर्थः, तस्य बोधेऽन्वयो न

---

एवं प्रकारतायां स्वविशिष्टपदप्रयोज्यत्वमित्यस्य स्वविशिष्टप्रातिपदिकप्रयोज्यत्वमित्यर्थः । अन्यथा यत्र यत्राऽऽकाङ्क्षाप्रयोज्याभेदनिष्ठसांसर्गिकविषयतात्वं तत्र तत्र प्रातिपदिकविशिष्टत्वम् । वैशिष्ट्यं चोक्तोभयसं० । इति विवक्षायां "एकतरकृतिनिष्ठप्रकारतायां घट-चैत्रप्रातिपदिकविशिष्टसु-तिप्पदप्रयोज्यत्वसत्वेन" व्यापकसत्वेन तत्राकाङ्क्षाप्रयोज्याऽभेदनिष्ठसांसर्गिकविषयतात्वविरहेण "व्याप्यविरहेण" व्याप्यव्यापकभावानुपपत्तिः स्यात् । नच व्यापकसत्वे न क्षतिरिति वाच्यम् । उक्तव्याप्ये प्रयोजकान्तरविरहेण परस्परव्याप्यव्यापकभावे पर्यवसानेनोक्तसांसर्गिकविषयताया अभेदसंसर्गत्वापत्तेः ।

द्वितीयव्याप्यव्यापकभावश्च यत्र यत्र पदविशिष्टसांसर्गिकविषयतात्वं तत्र तत्राभेदसंसर्गतात्वम् । वै०स्वप्रयोज्यविशेष्यताकत्व, स्वविशिष्टप्रातिपदिकप्रयोज्यप्रकारताकत्वोभयसं० अन्यत्पूर्ववत् ।

प्रथमव्याप्यव्यापकभावश्च यत्र यत्र प्रातिपदिकविशिष्टसांसर्गिकविषयतात्वं तत्र तत्राऽभेदसंसर्गतात्वम् वै०स्वप्रयोज्यविशेष्यताकत्व-स्वविशिष्टपदप्रयोज्यप्रकारताकत्वोभयसं० । शेषं पूर्ववत् ।

**स्वसमानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यं च विभक्तिविभाजकप्रथमात्वादिना ।**

---

संभवति, नीलस्य घट इत्यादिवाक्यजन्यनीलघटाऽभेदान्वयबोधाऽप्रसिद्धेरिति चेन्न । तस्यानुभवेऽन्वयात् । तथा च नीलघटाऽभेदान्वयबोधस्य नीलस्य घट इत्यादिवाक्यप्रयोज्यत्वप्रकारकसर्वानुभवविशेष्यत्वाभावादित्यर्थः । **अनुभवश्च** नीलघटाऽभेदबोधः नीलस्य घट इतिवाक्यप्रयोज्य इत्याकारकः । तथा च नाऽप्रसिद्धिः ।

**स्वसमानविभक्तिकेनेत्यत्र** स्वं विशेष्यवाचकपदं तेन समाना विभक्तिर्यस्येति विग्रहः । तेन विशेषणवाचकपदोत्तरविभक्तितुल्यविभक्तिकत्वं विशेषणवाचकपदे लभ्यते, तच्च न सम्भवति, विभक्त्योरतुल्यत्वादाह । **स्वसमानविभक्तिकत्वं चेति । स्वप्रकृतिकविभक्तिसजातीयेति** । स्वोत्तरविभक्तिवृत्तिजातिमद्विभक्तिप्रकृतित्वमित्यर्थः । स्वं-विशेष्यवाचकपदम् । सुप्त्वादिजातिमादाय नीलस्य घट इत्यादावभेदान्वयापत्तिवारणायाह **साजात्यं चेति** । तथा च स्वोत्तरविभक्तिवृत्तिर्योविभक्तिविभाजकःप्रथमात्वाद्यन्यतमोधर्मः तद्विभक्तिप्रकृतित्वमिति समुदितार्थे सुप्त्वतिङ्त्वयोर्विभक्तिविभाजकत्वात्सुप्त्वेन साजात्यमादाय नीलस्य घट इत्यादौ अभेदबोधतादवस्थ्यात्, किं च विभक्तित्वव्याप्यत्वे सति विभक्तित्वव्याप्याव्याप्यत्वरूपस्य विभक्तिविभाजकत्वस्य प्रथमात्वेऽसंभवात्तस्य विभक्तित्वव्याप्यसुप्त्वव्याप्यत्त्वात् । प्रथमात्वादिनेत्यस्याऽसंगत्यापत्तेश्चातो विभक्तिपदं सुप्परम् । न च सुब्विभाजकधर्मत्येव कथं नोक्तमिति वाच्यम् । कोसौ सुब्विभाजको धर्मइत्याकाङ्क्षानिवृत्तये **प्रथमात्वादिनेति** । प्रथमात्वादिनेत्येतावन्मात्रोक्तौ प्रथमोपस्थितत्वेन साजात्यापत्तौ नीलस्य घट इत्यादावप्यभेदबोधापत्तिरतोविभक्ति**विभाजकेति** । वस्तुतः प्रथमात्वाद्यन्यतमधर्मेण साजात्योक्तौ न कोपि दोषः इति विभावनीयम् ।

सुब्विभाजकत्वं च सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्याऽव्याप्यत्वम् । विभक्तित्वस्य व्याप्यत्ववारणाय सत्यन्तम् । तच्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् । स्वद्वयं सुप्त्वपरम् । विशेष्यदलोपादानात्सुप्त्वस्य न विभाजकत्वप्रसक्तिः । सत्यन्तोपादानात्तिङ्त्वादिवारणम् । सुप्त्वादीनां विभाजकत्ववारणाय स्वव्याप्याव्याप्यत्वदलम् । सुप्त्वव्याप्यसुप्त्व व्याप्यत्वस्यैव प्रथमात्वादौ सत्वात्स्वव्याप्याव्याप्यत्वघटकप्राथमिकं व्याप्यत्वं न्यूनवृत्तित्वरूपं बोध्यम् । तच्च सामानाधिकरण्याविशेषितं ग्राह्यम् । एवं सुप्त्व-

**न तु समानानुपूर्वीकत्वं साजात्यम्, वेदाः प्रमाणं शतं ब्राह्मणा इत्यादावन्वयबोधानुपपत्तेः ।**

---

व्याप्यप्रथमात्वादिव्याप्यत्वस्यैव प्रथमात्वादौ सत्वात्तद्वारणाय द्वितीय "अव्याप्यात्वघटकं" व्याप्यत्वमपि न्यूनवृत्तित्वरूपं बोध्यम् । स्वव्याप्ये प्रथमात्वदिविशिष्टान्यत्वं विशेषणीयम् । वै०स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्वोभयसं० । तेन सुप्त्वव्याप्यसुअमाद्यन्यतरत्व—सुट्त्वव्याप्यत्वस्य प्रथमात्वादौ सत्वेपि न क्षतिः ।

तथा च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वन्यूनवृत्तिर्योधर्मस्तदन्यूनवृत्तित्वम् सुब्विभाजकत्वम् । स्वं सुप्त्वम् । स्वन्यूनवृत्तिधर्मे प्रथमात्वादिविशिष्टान्यत्वं विशेषणीयम् । वै० स्वाश्रयवृत्तित्व स्वानाश्रयवृत्तित्वोभयसं० ।

सुप्त्वविशिष्टोधर्मः सुब्विभाजकः । वै०स्वविशिष्टत्व स्वविशिष्टाव्याप्यत्व स्वव्याप्याघटितत्वैतत्रितयसं० । प्रथमस्ववै०स्वव्याप्यत्व, स्वभिन्नत्वोभयसं० । उदासीनेघट्त्वादौ सुब्विभाजकत्ववारणाय स्वव्याप्यत्वनिवेशः । सुप्त्वस्यापि सुप्त्वव्याप्यत्वात्तद्दोषवारणाय स्वभिन्नत्वनिवेशः । सुत्वादौ विभाजकत्ववारणाय द्वितीयसंबन्धः । द्वितीयस्ववै०स्वव्याप्यत्व-स्वविशिष्टविशिष्टभिन्नत्वोभयसं० । स्ववै०स्वव्याप्यत्व-स्वव्याप्याघटितत्वोभयसं० । अन्यथा स्वव्याप्याव्याप्यत्वनिवेशे सुप्त्वव्याप्यं यत्सु-अम्एतदन्यतरत्वादिकं प्रथमात्वादेस्तद्व्याप्यत्वाद्विभाजकत्वानुपपत्तिः । एवं च तादृशान्यतरत्वव्याप्यसुत्वघटित्वादन्यतरत्वादेर्वारणम् । स्वविशिष्टवै० स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्योभयसं० । तेन सुप्त्वव्याप्यसुट्त्व-आप्त्वव्याप्यत्वेपि प्रथमात्वादेर्विभाजकत्वानुपपत्तिः । सुप्त्वव्याप्यतृतीयात्वविशिष्टमेवाऽऽप्त्वं न तु तद्भिन्नमितिनानुपपत्तिरितिजयायाम् । तद्गौरवभीरुभिरुपेक्षणीयम् ।

**समानानुपूर्वीकत्वमिति । समाना-एका-आनुपूर्वीययोस्ते समानानुपूर्वीके । तत्त्वम् ।** स्ववृत्तिआनुपूर्वीसमानानुपूर्वीमत्वम् । स्वं विशेष्यवाचकपदोत्तरविभक्तिः । विशेष्यवाचकपदोत्तरविभक्तिवृत्ति आनुपूर्वीमत्वं विशेषणवाचकपदोत्तरविभक्तिनिष्ठमिति यावत् । आनुपूर्वी च न तत्तद्वर्णोतरत्तत्तद्वर्णत्वरूपा तस्याः वर्णभेदेन भिन्नतया घटपदोत्तरसुविभक्तिवृतिसकारोत्तरोत्स्वरूपानुपूर्व्याः नीलपदोत्तरसुविभक्तावसत्वात् । किन्तु आनुपूर्वीपदेन स्वाश्रयाव्यवहितोत्तरवृत्तित्वसंबन्धेन सुत्वविशिष्टत्वमेव ग्राह्यम, तच्च

न भिन्नम् । न च तादृशानुपूर्वी चरमवर्णे एवास्तीति न तत्र विशेष्यवाचकपदप्रकृतिकत्वं न वा तदानुपूर्व्याश्रयविभक्तिप्रकृतित्वं विशेषणवाचकपदे इति वाच्यम् । विनिगमनाविरहणोत्तरवर्णविशिष्टपूर्ववर्णत्वरूपानुपूर्व्याश्रयत्वेन पूर्ववर्णस्य ग्रहणात् । वै० अव्यवहितपूर्वत्वसं० ।

ननु सकारो विभक्तिरिति व्यवहारविरहेण प्रत्येकवर्णे विभक्तित्वविरहाद् विशेष्यवाचकपदप्रकृतिकविभक्तित्वेन तस्य ग्रहणाऽसंभवः । न च विशेष्यवाचकपदोत्तरविभक्तिघटकमात्रवृत्तयो यावदानुपूर्व्यस्तावदानुपूर्वीमद्वर्णसमुदायघटितत्वं विशेषणवाचकपदोत्तरविभक्तिनिष्ठमित्यर्थे न दोष इति वाच्यम् । घटपदनीलघटपदयोः लतातालपदयोः समानानुपूर्वीकत्वप्रसंगादिति चेन्न । पदविशिष्टपदत्वं समानानुपूर्वीकत्वम्[1] । वै० स्वघटकाऽवृत्तिश्रावणविषयता-

[1] लता-ताल—रस-सरेत्यादीनां च न समानानुपूर्वीकत्वम्, लताशब्दघटकावृत्तिश्रावणविषयतावच्छेदकोधर्मः—तकारोत्तरलत्वं तदवच्छिन्नघटितस्यैव तालशब्दे सत्वात् । एवं सरशब्देपि बोध्यम् ।

अथ पदत्वस्याननुगमान्नोक्तानुगमसंभवः । नचार्थबोधप्रयोजकतावच्छेदकत्वेन पदत्वमनुगमनीयम् । तथा चार्थबोधप्रयोजकतानवच्छेदकधर्मवद्विशिष्टो यस्तादृशधर्मवान् तत्वं समानानुपूर्वीकत्वम् । वै० स्वघटकतावच्छेदकधर्मावच्छिन्नाऽघटितत्वस्ववृत्तित्वोभयसं० । स्ववृत्तित्वं च स्वघटकतानवच्छेदकधर्मावच्छिन्नाघटितत्वसंबन्धेन । स च धर्मो घ-घत्व-अ-अत्व-ट-टत्व-अ-अत्वएतद्गतसमुदायस्वरूपः । न च लता-तालशब्दयोः समानानुपूर्वीकत्वापत्तिः, तयोरपि तादृशधर्मवत्वादिति वाच्यम् । स्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावद्बोधप्रयोजकतावच्छेदकत्वेन तत्प्रवेशे दोषाभावात् इति चेन्न । निरर्थकयोः समानानुपूर्वीकत्वानुपपत्तेरिति चेद् यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नसमानानुपूर्वीकत्वं विवक्षितं तद्धर्मसमनियतज्ञानीयविषयतात्वसमनियतज्ञानसमनियततद्धर्मवत्वम् । ज्ञाने धर्मसमनैयत्यं च स्वनिरूपितविषयताविशिष्टविषयतावत्वसं० । वै० स्वानवच्छेदकसंबन्धानवच्छिन्नत्व-स्वसामानाधिकरण्योभयसं० । विषयतावत्ता च तादात्म्यसं० ।

यथा घटपदसमानानुपूर्वीकत्वं घटपदे । तथाहि तद्धर्म उक्तसमुदायत्वरूपः तत्समनियतं घटज्ञानं, उक्तसमुदायत्वाधिकरणे घटे विषयतया घटज्ञानस्य सत्वात् । तादृशविषयतात्वं अव्यवहितोत्तरत्वसंबन्धावच्छिन्नघत्वावच्छिन्नप्रकारतायां एवं अत्व-टत्वावच्छिन्नप्रकारतायां अत्वावच्छिन्नविशेष्यतायां च तत्रैव घटज्ञानमपि उक्तोभयसंबन्धावच्छिन्नस्वीयविषयतावत्वसंबन्धेन वर्तते ।

वच्छेदकधर्मावच्छिन्नाघटितत्व-स्ववृत्तित्वोभयसं० । स्ववृत्तित्वं च स्वघटका-

ननु नञ्द्वयप्रवेशोऽव्यर्थः, स्वावच्छेदकसंबन्धावच्छिन्नत्वस्यैव सम्यक्त्वादिति चेन्न । तादृशविषयतात्वस्य विशेष्यतायामपि सत्त्वेन तत्रोक्तोभयसंबन्धघटितोभय-संबन्धेन ज्ञानविरहाद्विषयतात्वसमनैयत्याप्रसिद्धेः ।

ननु नञ्द्वयप्रवेशेपि समनैयत्यं दुर्घटं—स्वपदार्थान्तर्गतविशेष्यतावच्छेदक-संबन्धाप्रसिद्धेरिति चेन्न ।

स्वनिरूपितसंसर्गतावच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मावच्छि-न्नसंसर्गत्वानिरूपकस्य तदर्थत्वात् । तथा च स्वं-प्रकारता तन्निरूपितसंसर्गतावच्छेद-कत्वमव्यवहितोत्तरत्वत्वे तादृशावच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववान् यो धर्मः संयोगत्वादिकं तद्धर्मावच्छिन्नसंसर्गत्वानिरूपकत्वं घटपदज्ञानीयविशेष्यता-याम् । स्वपदेन विशेष्यताया ग्रहणेपि तस्या व्यधिकरणसंबन्धतया तत्संबन्धावच्छिन्न-प्रतियोगिताकतदभावस्य केवलान्वयितया तदभाववदव्यवहितोत्तरत्वत्वावच्छिन्नसंस-र्गत्वानिरूपकत्वं पदज्ञानीयविशेष्यतायामिति । न च संसर्गताया मध्यपातितया तन्निरूपितत्वमेव विशेष्यतायां नत्वनिरूपितत्वमिति वाच्यम् । संसर्गनिष्ठावच्छेदक-त्वानिरूपकत्वे तात्पर्यात् ।

घटपटयो : समानानुपूर्वीकत्ववारणाय संसर्गकोटौ सामानाधिकरण्यनिवेशः । अथ वर्णविषयतयोः सामानाधिकरण्याभावात्समानानुपूर्वीकत्वानुपपत्तिः । नच सामा-नाधिकरण्यस्थाने स्वावच्छेदकावच्छिन्नत्वं निवेशनीयमिति वाच्यम् । तस्य घत्वा-दिनिष्ठनिरवच्छिन्नविषयतायामभावात् समनियतत्वानुपपत्तेः । तादृशविषयतात्वस्य घत्वादिविषयतायां सत्वात्, तत्र च स्वनिरूपितविषयतावत्वसंबन्धेन तादृशज्ञानाभा-वात्, घत्वादिविषयताया निरवच्छिन्नत्वेन तदवच्छेदकाप्रसिद्धिरिति चेन्न । तदा विषयतावत्वं तादात्म्येन निवेशनीयमतो न कश्चिद्दोषः ।

अथवा स्वानवच्छेदकसंबन्धानवच्छिन्नत्व स्वसामानाधिकरण्य-स्वावच्छेदकाव-च्छिन्नत्वान्यतरवत्वोभयसंबन्धेन स्वीयविषयतावत्वं वाच्यमिति ध्येयम् ।

ज्ञाने तद्धर्मसमनियतत्वं विषयतया विवक्षितम्, विषयता च संसर्गतान्या ग्राह्या । अन्यथा घटपदज्ञानस्य अव्यवहितोत्तरत्वनिष्ठसांसर्गिकविषयतासम्बन्धेनाऽव्यवहितोत्तर-त्वेपि सत्वात्तत्र घटगतोक्तसमुदायत्वविरहेण समनियतत्वानुपपत्ति : स्यात् । न च घकारोत्तराऽकारोत्तरटकारोत्तरेत्यादिरित्याऽव्यवहितोत्तरत्वघटिततादृशसमुदाय-त्वावच्छिन्ने एव घटपदत्वव्यवहार इति वाच्यम् । मानाभावात् ।

वृत्तिश्रावणविषयतावच्छेदकधर्मावच्छिन्नाघटितत्वसंबन्धेन। घटपदसमानानुपूर्वीकत्वस्य नीलघटपदे वारणायाऽऽद्यसंबंधः। नीलघटपदसमानानुपूर्वीकत्वस्य घटपदे वारणाय द्वितीयसंबन्धः।

विशेषतश्च घटपदसमानानुपूर्वीकत्वं स्वनिष्ठघत्वावच्छिन्नविषयतानिरूपिताऽ·वावच्छिन्नविषयतानिरूपितटत्वावच्छिन्नविषयतानिरूपिताऽत्वावच्छिन्नविषयत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकविषयतात्वसमनियतज्ञानीयविषयतापर्याप्त्यवच्छेदकधर्मवत्वम्। ज्ञाने विषयतात्वसमनैयत्यं च स्वनिरूपितविषयतावत्वसं०। स्वं० ज्ञानं, विषयतावत्वं च स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसं०।

**अन्वयबोधानुपपत्तेरिति**। वेदपदोत्तरजसविभक्तिवृत्तिआनुपूर्वीमत्वस्य प्रमाणपदोत्तरसुविभक्तौ अभावादभेदान्वबोधानुपपत्तेरिति भावः।

**इदमुपलक्षणम्**। सुन्दराभ्यां घटाभ्यामित्यादौ एक विभक्तौतृतीयात्वग्रहेऽपरत्र च चतुर्थीत्वग्रहे विभक्त्योः समानानुपूर्वीकत्वात्ततोऽभेदान्वयापत्तिर्बोध्या।

**इदन्तु बोध्यम्**। सुन्दराभ्यामित्यत्र चतुर्थीत्वविरुद्धतृतीयात्वग्रहो करणत्वग्रहे सति भविष्यति, नान्यथा, करणत्वे तृतीयाविधानात्। तृतीयायाः करणत्वपरत्वेऽभेदान्वयबोधो दुर्घटः, करणत्वविशेषणत्वेनोपस्थितस्य सुन्दरस्याऽन्यत्राऽन्वयाऽयोगात्। एकत्र विशेषणस्याऽन्यत्र विशेषणत्वेनाऽन्वयायोगादिति समानानुपूर्वीकत्वेन साजात्यपक्षेपि नात्रापत्त्यवकाश इति ध्येयम्।

वेदाः प्रमाणमिति प्रयोगस्याऽसाधुत्वात्तदनुरोधोऽसंगत इत्याशंकते। **नन्विति**।

**विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः संख्यार्थौ द्वित्वबहुत्वे स्तः।**

---

ज्ञाने च मुख्यविशेष्यताद्वयशून्यत्वं निवेशनीयम्। तेन समूहालंबनमादाय न लतातालपदयोः सामानानुपूर्वीकत्वप्रसंगः। इदन्तु बोध्यम्। नीलघटपदे घटपदसमानानुपूर्वीकत्ववारणाय-घटपदे नीलघटपदसमानानुपूर्वीकत्ववारणाय प्रथमसमनियत्वघटकव्यापकत्वव्याप्यत्वयोर्निवेशः। एवं द्वितीयसामनैयत्येपि। तद्धर्मपदेन नीलघटपदगतकेवलघटगतसमुदायत्ववारणाय समानानुपूर्वीकत्वमापादनीयम्।

**ननु विंशत्याद्याः सदैकत्वे इत्यनुशासनात् शतं ब्राह्मणा इत्यादेः साधुत्वेपि वेदाः प्रमाणमित्यादयः कथं प्रयोगाः। विशेष्य-विशेषणवाचक पदयोरसति विशेषानुशासने समानवचनकत्वनियमात्, अन्यथा घटा नील इत्यादेरपि साधुताप्रसंगात्। समानलिङ्गकस्थले तथानियमोपगमेन वेदाः प्रमाणमित्यादेः साधुत्वोपपादनेपि इतिहेतुस्तदुद्भवे इति कारिकायाः इति त्रयः सुमुदिता हेतुरितिकाव्यप्रकाशव्याख्याया असंगतिदुर्वारैव।**

---

अस्यार्थः। विंशत्याद्याः शब्दाःसंख्याप्रकारकसंख्येयविशेष्यकबोधेच्छयोच्चरिताः; एकवचनान्ता भवन्ति, संख्यापराश्च द्विवचनबहुवचनान्ता भवन्तीति। तथा च विंशत्याद्या इत्यनुशासनाच्छतं ब्राह्मणा इतिप्रयोगस्य साधुत्वे "स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्व" मित्युक्तनियमशरीरे असति बाधके इत्युक्तौ नानुपपत्तिः, वेदा प्रमाणमित्यस्य च साधुतैव नास्ति क्व तत्रानुपपत्तिरिति समानानुपूर्वीकत्वेन साजात्योक्तौ न दोषः, प्रत्युत विभक्तिविभाजकप्रथमात्वादिना साजात्योक्तौ नीला घट इत्यादिप्रयोगापत्तिरित्याशयेनाह। **कथं प्रयोगा इति**। साधव इति शेषः।

**या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।**

**प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे** इत्युत्सर्ग इति भावः। प्रमाणपदं विशेष्यवाचकवेदपदसमानवचनकं विशेषानुशासनवचनकभिन्नत्वे सति विशेषणपरत्वात्। यद्यद्विशेषानुशासनबोधितवचनकभिन्नं विशेषणवाचकपदं तत्तद्विशेष्यवाचकपदसमानवचनकमिति व्याप्तिं दर्शयति। **विशेष्य-विशेषणवाचकपदयोरिति। असति विशेषानुशासने।** असति बाधके। तथा च नियतवचनकत्वानुशिष्टभेदकूटवत्प्रातिपदिकविशिष्टप्रातिपदिकत्वं यत्र तत्र तत्तद्विशेष्यवाचकपदप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिप्रकृतित्वमिति फलितार्थः। प्रातिपदिकवै०स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्व--नियतवचनकत्वानुशिष्टभेदकूटवत्त्वोभयसं।

**तथेति**। समानवचनकत्वेत्यर्थः। **साधुत्वोपपादनेपीति** असमानलिङ्गकत्वेन समानवचनकत्वाभावादिति भावः। **कारिकाया इति**। शक्तिर्निपुणता-लोककाव्यशास्त्राद्यवेक्षणात्।

काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे इति कारिकाया इत्यर्थः। अस्या अर्थः। **शक्तिः**-कवित्वबीजभूतः संस्कारविशेषः—प्रतिभाऽपरपर्यायः।

लोककाव्यशास्त्राद्यवेक्षणप्रयुक्तनिपुणता—व्युत्पत्तिविंशेषः। काव्यज्ञशिक्षा-प्रयुक्तोऽभ्यासः-काव्यकरणे योजने च पुनः पुनः प्रवृत्तिः। **इति हेतुस्तदुद्भवे** इत्यस्य व्याख्या **इति त्रयः समुदिता हेतुरिति**। अत्रेति शब्देन शक्ति-निपुणताऽभ्यासानां परामर्शः। कवित्वोद्भवे त्रयः समुदिता हेतुरित्यर्थः। **असंगतिर्दुर्वारैवेति** समुदिता हेतुरित्यनयोः समानलिङ्गकत्वेन समानवचनकत्वविरहादिति भावः।

**समानलिङ्गकत्वं** च स्ववृत्तिपुंल्लिंगत्वाद्यन्यतमत्वम्। पुंलिङ्गत्वादिकं च पुंस्त्वादिप्रकारकबोधजनकतावच्छेदकानुपूर्वीमत्वम्। लिङ्गरोमवत्वं पुंस्त्वम्।

**अनुगमस्तु** प्रातिपदिकवृत्ति आनुपूर्वीविशिष्टस्वानुपूर्वीकत्वम् पुंलिङ्ग-त्वम्। स्वानुपूर्व्यामानुपूर्वीवै०। स्वविशिष्टविषयतात्वव्यापकत्वसं०। विषय-तायां स्ववै०स्वघटकवर्णावृत्तित्व-स्वावच्छिन्नविषयताप्रयोज्यविशेष्यतानिरूपित-पुंस्त्वप्रकारताप्रयोजकत्वोभयसं०। व्यापकता च स्वावच्छिन्नविषयताप्रयोज्य-विशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकविषयतावच्छेदकावच्छिन्नत्वसं०। तट इत्यादौ प्रातिपदिकपदेन न तटस्य ग्रहणम्, तत्र तादृशपुंस्त्वविरहात्। किन्तु ब्राह्मणस्य ग्रहणम्, तद्वृत्तिआनुपूर्वीवैशिष्ट्यस्य स्वपदग्राह्यतटवृत्त्यानु-पूर्व्यां सत्वात् पुल्लिङ्गत्वोपपत्तिः। ब्राह्मणवृत्ति आनुपूर्वीविशिष्टा या सुत्वरूपाऽ-नुपूर्व्यवच्छिन्नविषयता तादृशविषयतात्वव्यापकत्वस्य स्वपदग्राह्यतटवृत्त्यानुपूर्व्य-वच्छिन्नविषयतायां सत्वात्। व्यापकताघटकस्वपदं तटपदपरम्। ब्राह्मण इत्यादौ यादृशानुपूर्व्यवच्छिन्नसुपदनिष्ठविषयता पुंस्त्वप्रकारकबोधजनिका नदी इत्यादौ तादृशानुपूर्व्यवच्छिन्नविषयता न संख्याबोधजनकतावच्छेदिका "विभक्तिवृत्ति-आनुपूर्वीभेदात्" इति न नदीपदे पुंस्त्वापत्तिः। इदं च स्तनकेशवर्ती स्त्री स्याल्लोमशः पुरुषः स्मृत इतिवाक्यानुरोधेन। अन्यथा तु प्राण्यप्राणि-साधारणं पदसंस्कारप्रयोजकं पुल्लिगत्वादिना परिभाषितत्वं तद्बोध्यम्। **तदुक्तम्**। स्त्रीलिङ्गमपि पुंल्लिङ्गंक्लीवलिङ्गमिति त्रिधा।

शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते।
स्त्रीलिङ्गं पुंल्लिङ्गं नपुंसकलिङ्गमिति त्रिधा नाम भिद्यते।

तत्र स्त्रीलिंङ्गत्वादिकं स्त्रीलिङ्गत्वादिना परिभाषितत्वम्। न तु स्त्रीत्वा-दिवाचकत्वम्, तटः-तटी तटमित्यादौ तटादेः योन्यादिमत्वरूपस्त्रीत्वाभावाद-योग्यतापत्तेः। परिभाषायाः प्रयोजनं चेह पदसंस्कारः (आकाङ्क्षा)। यथा तटइत्यादौ पुंस्वेन सुबादिसद्भावः। तटी इत्यादौ स्त्रीत्वेन ङीबादिसद्भावः। तटमित्यादौ क्लीबत्वेन सुबादेर्लुगादिः। यद्यपि सम्पदादिशब्दे नास्ति

**एवमसमानलिङ्गकस्थले विशेष्यवाचकपदाऽसमानवचनस्यापि विशेषणवाचकपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनं प्रयोक्तुमुचितमिति प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि-पितरोदेवता इत्यादेरनुपपत्तिः।**

**मैवम्। यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्रैव समानवचनकत्वनियमः।**

---

संस्कारस्य विशेषः, तथापि तत्रापि अभेदेन तद्विशेषणवाचकशोभनादिपदे अस्ति संस्कारस्य विशेषः। असति वाधके विशेषणपदस्य विशेष्यपदसमानलिङ्गकत्वनियमात्।

केचित्तु शक्त्या तटत्वावच्छिन्नस्य लक्षणया च स्त्रीत्वस्य बोधकं तटादिपदम्। प्रत्ययास्तु तत्तदर्थे तात्पर्यग्राहका इत्याहुः

**एवं** समानलिङ्गकस्थले एव समानवचनकत्वनियमे। **असमानलिङ्गकस्थले**। वेदाः प्रमाणमित्यादौ। **तादृशस्थले**। असमानलिङ्गकस्थले। **औत्सर्गिकं**। अपदं न प्रयुञ्जीतेतिन्यायादितिभावः। अनेन नित्यद्विवचनबहुवचनसाकाङ्क्षविशेषणवाचकपदानामसमानलिङ्गकस्थले नैकवचनान्तत्वमिति सूचितम्। **अनुपपत्तिरिति**। असमानलिङ्गकत्वेन समानवचनकत्वानुपपत्तिरिति भावः।

विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वमितिनियमसंकोचेन समाधत्ते। **यत्रेति**। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यत्र पितरो देवताः इत्यादौ चेत्यर्थः। विशेष्यवाचकप्रत्यक्षानुमानोपमानशब्दपितृपदोत्तरजसविभक्तितात्पर्यविषयीभूतबहुत्वसंख्याविरुद्धसंख्यायाः विशेषणवाचकप्रमाणपदेन देवतापदेन चाऽविवक्षिततया तत्रैव समानवचनकत्वनियमः। वेदाः प्रमाणमित्यादौ तु न समानवचनकत्वनियमः, विशेष्यवाचकवेदपदोत्तरजसभिक्तितात्पर्यविषयीभूतवहुत्वसंख्याविरुद्धैकत्वसंख्यायाः विशेषणवाचकप्रमाणपदोत्तरसुविभक्त्या विवक्षितत्वात् तथाच समानानुपूर्वीकत्वरूपं साजात्यं न विवक्षणीयमिति भावः।

यत्रेति त्रल्प्रत्ययस्य घटकत्वमर्थः। तस्य विशेष्यवाचकपदेऽन्वयः। विशेष्यवाचकेत्यस्य विशेष्यबोधकेत्यर्थः। तेन लाक्षणिकविशेष्यपदस्थले कुमतिः पशुरित्यादौ न व्याप्यत्वहानिः। विशेष्यवाचकपदोत्तरत्वेनाऽनुसंन्धीयमानेत्यर्थः। तेन सुन्दरं दधीत्यत्र विशेष्यवाचकदधिपदाऽव्यवहितोत्तरविभ-

क्तेरप्रसिद्धावपि न क्षतिः। तथाच यद्वाक्यघटकविशेष्यबोधकपदाव्यवहितो-त्तरत्वेनाऽनुसन्धीयमानेत्यर्थः।

अथ विभक्तित्वेनोपादानं किमर्थम्, विशेष्यवाचकपदोत्तरत्वेनोपादानस्य सम्यक्त्वात्। नच तदनुपादाने सुन्दरं दधि बहवो गुणा इत्यत्र एकत्वविवक्षायां सुन्दरं दधीति समानवचनकत्वस्येष्टतया विशेष्यवाचकदधिपदाऽव्यहितोत्तर बहुपदार्थबहुत्वसंख्याविरुद्धैकत्वस्य विवक्षिततया प्रयोजकाभावात्समानवचनकत्वानुपपत्तिरिति वाच्यम्। व्याप्यविरहस्य व्यापकविरहाऽप्रयोजकतया उक्तस्थलेउक्ताऽविवक्षितत्वविरहेपि क्षत्यभावात्। तादृशस्थले विशेष्यवाचकपदाऽव्यवहितोत्तरविभक्तेरप्रसिद्धतयाऽव्यवहितोत्तरत्वेनानुसन्धीयमानत्वस्य विवक्षणीयतया तथाविधविभक्तितात्पर्यविषयैकत्वविरुद्धत्वस्यैकत्वेऽसंभवाच्च। तदा विभक्तिपदं स्पष्टार्थम्।

परे तु स्तोकमत्त इत्यादौ समानवचनकत्वप्रसंगवारणाय विशेष्यवाचकपदे प्रातिपदिकत्वप्रवेशापेक्षया विशेष्यवाचकपदाव्यवहितोत्तरपदे सुप्त्वप्रवेशे लाघवात्तत्सूचनाय विभक्तित्वोनोपादानमिति प्राहुः।

अथ विशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्याविरुद्धेत्यादिकमेवोच्यतां किं तात्पर्यानुसरणेनेति चेन्न। वेदाः प्रमाणमित्यादौ यदा जसि सुत्वभ्रमात्—एकत्वशक्तताभ्रमाद्वा एकत्वविषयकशाब्दबोधः तदा एकत्वस्य विभक्त्यर्थतया तद्विरुद्धसंख्याया अविवक्षितत्वात्समानवचनकत्वापत्तिरतस्तात्पर्यविषयेति। नच विभक्तिशक्यत्वप्रवेशे न दोष इति वाच्यम्। लाघवाभावादिति ध्येयम्।

तथाच विशेष्यवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताबती संख्या इत्यर्थः। यथाश्रुते तु वेदाः प्रमाणमित्यादावपि जस्पदं बहुत्वं बोधयतु सुपदं च एकत्वं बोधयतु इति समूहालंवनतात्पर्यस्यापि विशेष्यवाचकपदोत्तरविभक्तितात्पर्यत्त्वात्तद्विषयैकत्वसंख्याविरुद्धत्वाभावेन विरुद्धसंख्याविवक्षितत्वाभावसत्वेन समानवचनकत्वापत्तिः। विभक्तिजन्यबोधविषयत्वेन निवेशे तु एकत्वस्य वेदपदोत्तरजस्पदजन्यबोधविषयत्वेनेच्छाविषयत्वाभावान्न दोषः।

तात्पर्यविषयसंख्यायाः संख्यात्वेन प्रवेशात्प्रमाणं वेदेषु द्वित्वान्यप्रमेयमित्यादौ वेदनिरूपिततादृशप्रमेयत्वावच्छिन्नाधेयत्वस्याधेयरूपत्वे "तात्पर्यविषयीभूतद्वित्वान्यप्रमेयरूप "तादृशविषयत्वावच्छिन्नभेदस्य" एकत्वे विरहेपि

न समानवचनकत्वापत्तिः। तात्पर्यविषयतावच्छेदकसंख्यात्वव्याप्यबहुत्वभेदस्य एकत्वे सत्वात्।

वस्तुतो विशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्याविरुद्धसंख्याथा अप्रसिद्ध्या तदनुपपत्तिरस्तात्पर्यविषयेति अपेक्षाबुद्धिविशेषविषयत्वस्याप्युपलक्षकम्, अन्यथा नीला वर्णाः इत्यादौ निरुक्ततात्पर्यविषयसंख्याया अप्रसिद्धत्वेन समानवचनकत्वानुपपत्तिरिति नियमशरीरे संख्यायाः विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयत्वेनैव प्रवेश इति ध्येयम्।

तादात्म्यस्य विशेषणविभक्त्यर्थतापक्षे विशेषणवाचकपदोत्तरविभक्त्या तादात्म्यस्य सर्वत्र विवक्षिततया विशेषणवाचकपदोत्तरविभक्तिमात्रेऽविवक्षितत्वविरहेण समानवचनकत्वानुपपत्तिरतो विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धस्य संख्यात्वेन प्रवेशः। ननु संख्याविरुद्धत्वं न संख्याऽसामानाधिकरण्यम्, बहुत्वाधिकरणेपि वेदे स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसम्बन्धेनैकत्वस्य वर्तमानत्वादिति चेन्न। संख्याविरुद्धत्वमत्र संख्याभिन्नत्वमिति ध्येयम्।

**अविवक्षितत्वमिति।** विशेषणवाचकपदोत्तरविभक्त्या इत्यादिः। तथाच विशेषणवाचकपदोत्तरत्वेनाऽनुसन्धीयमानविभक्तिजन्यबोधविषयत्वेनेच्छाविषयभिन्नत्वं तदर्थः। तत्रेति। घटकत्वं सप्तम्यर्थः। तस्य विशेष्यविशेषणवाचकपदयोरन्वयः। तथाच यद्वाक्यघटकविशेष्यवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावती संख्या विशेषणवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावद्भिन्ना न तद्वाक्यघटकविशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियम इति फलितम्[1]।

---

१ समानवचनकत्वं च स्वोत्तरविभक्तिवृत्तिएकवचनत्व-द्विवचनत्व-बहुवचनात्वाऽन्यतमधर्मवद्विभक्तिकत्वम्। नचैवं सुन्दरो घटमित्यादावपि समानवचनकत्वसत्वादभेदाऽन्वयापत्तिरिति वाच्यम्। समानानुपूर्वीकत्वस्यैव समानवचनकत्वरूपत्वात् घटो द्रव्यमित्यादौ स्थानिवृत्यानुपूर्वीमादाय समानवचनकत्वोपादानसंभवात्। कथमन्यथा "न तु समानानुपूर्वीकत्वं साजात्य"मित्यत्र वन्ह्यौ हरी इत्यादौ अनुपपत्तिमनुद्भाव्य वेदाः प्रमाणमित्याद्यसमानवचनकस्थले तदुद्भावनं नासंगतं स्यात्।

एवं च यत्र यत्पदवत्वं तत्र तत्पदाव्यवहितोत्तरत्वेनाऽनुसन्धीयमानविभक्तिवृत्त्या-

नुपूर्वीमद्विभक्तिकत्वमिति नियमः पर्यवसितः । पदवत्ता च स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्व-स्वाव्यवहितोत्तरत्वेनाऽनुसन्धीयमान-विभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेदकसंख्यावृत्तिधर्मभिन्नधर्मावच्छिन्नसंख्यानिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तकत्वोभयसं० । यत्तत्पदाभ्यां विशेष्यावचकपदं ग्रहीतव्यम् ।

नीलो घट इत्यादौ घटपदप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न-प्रकारताप्रयोजकत्वस्य, घटपदाऽव्यवहितोत्तरत्वेनाऽनुसन्धीयमानसुविभक्तिजन्यबोध-विषयत्वप्रकारतानिरूपितेच्छी[1]यविशेष्यतावच्छेदकसंख्यावृत्तिधर्मः "एकत्वत्वरूपः" तद्भिन्नो धर्मः "द्वित्वत्वादिरूपः" तदवच्छिन्नसंख्यानिष्ठविषयताकबोधजनकत्व-प्रकारतानिरूपितेच्छी[2]यविशेष्यता "औजसादौ तदभावो नीलपदोत्तरसुविभक्तौ तत्कत्वस्य नीलपदे सत्वात्समानवचनकत्वम् । वेदाः प्रमाणमित्यादौ वेदपदा-व्यवहितोत्तरत्वेनानुसन्धीयमानजसविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीय-विशेष्यतावच्छेदकीभूतसंख्यावृत्ति "बहुत्वत्वधर्मभिन्न "एकत्वत्वावच्छिन्नसंख्या-निष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छी[3]यविशेष्यता एव सौ इतिविशेष्य-त्वाभाववद्विभक्तिकत्वस्य प्रमाणपदे विरहान्न समानवचनकत्वम् ।

अथ यत्र संख्याधर्मिकैवेच्छा जाता तत्राऽतिरेव, विभक्तेरिच्छाविशेष्यत्वा-भावात् । तथा च वेदाः प्रमाणमित्यादौ समानवचनकत्वापत्तिः । न च द्वितीयसम्बन्धे तादृशसंख्यानिष्ठविशेष्यतानिरूपितेच्छीयप्रकारत्वाभाववद्विभक्तिकत्व-मेवोपादेयमिति वाच्यम् । विभक्तिधर्मिकेच्छामादायोक्तदोषप्रसंगादिति चेन्न । विभक्तिप्रयोजकेच्छीयसंख्यानिष्ठविषयतावच्छेदकधर्मभिन्नधर्मावच्छिन्नविषयतानिरूप-केच्छाप्रयोज्यत्वाभाववद्विभक्तिकत्वस्य द्वितीयसंबन्धरूपत्वात् । एकत्वबोधेच्छया एकवचनविभक्तिः प्रयुज्यते एवं द्वित्वबोधेच्छया द्विवचनविभक्तिः । एवं चैकत्वधर्मिकबोधेच्छायाः विभक्तिधर्मिकबोधेच्छायाश्च एकवचनविभक्तिप्रयोजकत्वं बोध्यम् ।

१ एकत्वं सुपदजन्यबोधविषयो भवतु इत्याकारिका ।

२ औजसादिर्द्वित्वाद्यवच्छिन्नविषयकबोधजनको भवतु

३ प्रमाणपदोत्तरं सुविभक्तिः एकत्वं बोधयतु ।

अत्रेदं बोध्यम् । यथाश्रुतग्रन्थतोऽविवक्षितरान्तस्य समानवचनकत्वमप्यर्थं लभ्यते । परन्तु परस्परं व्याप्यव्यापकबोधो बोध्यः ।

---

अथ यत्र विशेषणवाचकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वं तत्रैव विशेष्य-विशेषणवाचकपदयोः समानवचनकत्वनियम इत्येव कथं नोक्तं किं विरुद्धान्त-निवेशेन ।

तथा च यत्र यत्पदवत्त्वं तत्र तत्पदवत्त्वम् । यत्पदवत्ता च स्वप्रयोज्यविशेष्यता-निरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्व-स्वकालीनसंख्याविषयकबोधजन-कत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तिकत्वोभयसं० । तत्पदवत्ता च स्वाव्यवहितोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिकत्वसं० इति चेन्न । वेदत्वे एकत्व विवक्षया प्रमाणत्वे चैकत्वविवक्षया प्रयुक्ते वेदःप्रमाणमिति वाक्ये समानवचन-कत्वानुपपत्तिः, प्रमाणपदोत्तरविभक्त्या एकत्वस्य विवक्षितत्वात् । एवं प्रत्यक्षा-नुमानोपमानशब्दाः प्रमाणानीत्यत्र समानवचनकत्वानुपपत्तिः, प्रमाणपदोत्तर-विभक्त्या बहुत्वस्य विवक्षितत्वात् । विरुद्धान्तनिवेशे च विशिष्टाभावसत्वान्ना-नुपपत्तिः ।

ननु विशेष्यवाचकपदोत्तरेत्यादिग्रन्थेनाऽविवक्षितत्वस्य समानवचकत्वव्याप्य-ताया एव लाभेन विवक्षास्थले समानवचनकत्वसत्वे क्षत्यभावः समानवचनकत्व-स्योक्ताविवक्षितत्वव्यापकत्वात् । उक्ताऽविवक्षितत्वस्य समानवचनकत्वव्यापकत्वे वेदः प्रमाणमित्याद्युक्तस्थले समानवचनकत्वानुपपत्तिरिति चेत्—ग्रन्थलाघवार्थं तदुपादानात् । तथाहि—नीलो घटा इत्यादावभेदाऽन्वयवारणाय विशेषणवाचकपदे विशेष्यवाचकपदसमानवचनकत्वं विवक्षणीयम् । तदपि विशेषणवाचकपदोत्तरविभक्त्या संख्याऽविवक्षास्थले वक्तव्यम्, अन्यथा वेदाः प्रमाणमित्यादौ व्यभिचारः स्यात् । एवमपि वेदः प्रमाणमित्यत्र व्यभिचारवारणाय विरुद्धान्तं निवेशनीयम् । एवं विभज्य कथने गौरवं स्यादितीत्थमभिधानम् ।

अपरे तु विरुद्धान्ताऽनिवेशे स्तोकं पचत इत्यादौ विशेषणवाचकस्तोकपदो-त्तरविभक्त्या संख्याया अविवक्षितत्वात्समानवचनकत्वापत्तिः, विरुद्धान्तनिवेशे तु विशेष्यवाचकपच्धातुपदाव्यवहितोत्तरविभक्त्यभावेन तादृशविभक्तितात्पर्यविषय-संख्याविरुद्धादिविवक्षापर्यन्ताऽप्रसिद्धया तदभावस्याप्यसिद्धया न समानवचन-कत्वापत्तिः ।

नचाऽऽगमादेशविकरणादिव्यवधानेपि अव्यवहितोत्तरत्वमिष्टम्, तच्च यद्व्यव-धानेन प्रकृतिप्रत्यययोरन्वयबोधोपयिकाकाङ्क्षा निर्वाह्यते, तत्तद्भिन्नप्रकृत्युत्तरा-नुत्तरत्वे सति प्रकृत्युत्तरत्वम्, एवं च स्तोकं पचत इत्यादौ समानवचनकत्वापत्ति-र्दुर्वारैव, व्यवधानाभावात्, स्तोकमत्त इत्यादौ सुतरां तदापत्तिरिति वाच्यम् ।

विशेष्यविशिष्टा या विभक्तिस्तत्तात्पर्यविषयसंख्या विरुद्धसंख्यायाः विशेषणवाचकपदोत्तरविभक्त्या अविवक्षितत्वमित्यर्थेनाऽदोषात् । वै०स्वनिष्ठसंख्याबोधकत्व-स्वबोधकपदाऽव्यवहितोत्तरत्वोभयसं० । आख्यातार्थसंख्यायाः कर्त्तरि अन्वयेन विशेष्यीभूतधात्वर्थेऽनन्वयादित्याहुः । तच्चिन्त्यम् । विशेष्यान्वयित्वेन संख्याविषयकतात्पर्यविषयविभक्तिकविशेष्यवाचकपदसमभिव्याहृतत्वे सति विशेषणवाचकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वोपादानादेव विशेष्यवाचकपदोत्तरसुप्समभिव्याहृतत्वे सतीत्युपादानादेव वा प्रातिपदिकपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकपदोत्तरविभक्त्या यत्र संख्याया अविवक्षितत्वमित्युपादानादेव वा उक्तदोषवारणसंभवे विरुद्धान्तनिवेशस्य वैयर्थ्यात् ।

तथा च यत्र यत्पदवत्त्वं तत्र तत्पदवत्त्वम् । यत्पदवत्ता च स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्व—स्वाव्यवहि०रत्वेनानुसन्धीयमानविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नसंख्याविषयकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तिप्रकृतित्वोभयसं० । तत्पदवत्ता च स्वाव्यवहितोत्तरत्वेनाऽनुसन्धीयमानविभक्तिकत्वसं०, इति फलितम् ।

अथ विशेषणविभक्तेरभेदार्थकतापक्षे उक्ताऽविवक्षितत्वस्य नीलो घटइत्यादाविव प्रकृत्या चारव इत्यत्रापि सत्त्वात्समानवचनकत्वापत्तिः । नच तादृशविशेष्यत्वाभाववत्त्वेसति विशेष्यवाचकपदोत्तरविभक्तिवृत्तिसुब्विभाजकधर्मवद्विभक्तिप्रकृतित्वनिवेशे नोक्तस्थले समानवचकत्वापत्तिः, प्रकृतिपदोत्तरतृतीयाविभक्तौ तादृशप्रथमात्वविरहादिति वाच्यम् । प्रकृत्या चारुभिरित्यत्र तदापत्तितादवस्थ्यादिति चेन्न । स्वविशिष्टविभक्तिप्रकृतित्वस्य द्वितीयसंबन्धत्वात् । विभक्तौ स्ववै०स्वाव्यवहितोत्तरत्वेनानुसन्धीयमानविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेदकसंख्यात्वव्याप्यधर्मभिन्नधर्मावच्छिन्नसंख्यानिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववत्त्व—स्वाव्यवहितोत्तरविभक्तिवृत्तिसुब्विभाजकधर्मशून्यविभक्तिप्रकृतिविशेष्यवाचकपदसमानानुपूर्वीकपदार्थधर्मिकाऽभेदानुकूलाकांक्षाघटकविशेषणपदसमानानुपूर्वीकप्रकृतिकवृत्तिसुब्विभाजकधर्मशून्यत्वोभयसं० । तथाच न समानवचनकत्वापत्तिः । तथाहि प्रकृत्या चारुभिरित्यत्र विशेष्यवाचकचारुपदोत्तरभिस्विभक्तिवृत्तिसुब्विभाजकतृतीयात्वधर्मशून्या या प्रकृत्या चारवः इत्यत्र जस्विभक्तिः तत्प्रकृतिविशेष्यवाचकचारुपदसमानानुपूर्वीकपदं प्रकृत्या चारुभिरित्यत्र चारुपदं तदर्थं चारुधर्मिकाऽभेदानुकूलाऽऽकांक्षाघटकीभूतविशेषणवाचकप्रकृतिपदसमानानुपूर्वी-

कपदं प्रकृत्या चारव इत्यत्र प्रकृतिपदं, तत्प्रकृतिकवृत्तिसुब्विभाजको धर्मस्तृतीयात्वं तच्छून्यत्वं प्रकृत्या चारुभिरित्यत्र प्रकृतिपदोत्तरतृतीयाविभक्तौ नास्तीतिस्ववैशिष्ट्याभावादिति । नहि प्रकृत्या चारुभिरित्यत्र विशेषणविभक्तौ तादृशधर्मशून्यत्वं, प्रकृत्या चारुभिरित्यत्रैव प्रकृत्या चारव इत्यत्रापि अभेदबोधात् । नीलो घट इत्यत्र विशेषणविभक्तौ तादृशधर्मशून्यत्वमस्त्येव, नहि नीलो घट इत्यत्रेव जात्वपि नीलो घटायेत्यत्राऽभेदबोधः । एवं चोक्तनिवेशस्य विरुद्धान्तोपादानेपि आवश्यकतया तावतैव स्तोकमत्त इत्यादेरपि वारणाद् व्यर्थमेव तदुपादानमिति ध्येयम् ।

अप्रसिद्धप्रतियोगिकाभावानभ्युपगमेन "दाराः पुंसि च भूम्न्येवे" तिकोषादेकस्त्रीतात्पर्येणापि साधुत्वार्थकबहुवचनान्तदारपदघटिते दाराः शोभना इति वाक्ये समानवचनकत्वानुपपत्तिः, विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याया अप्रसिद्धया तादृशसंख्याविरुद्धसंख्याविवक्षितत्वस्याप्यप्रसिद्धत्वेन तदभावस्याप्यप्रसिद्धेः । न च विशेष्यवाचकपदोत्तरविभक्त्यभावो विवक्षणीयः । अभावश्च स्वतात्पर्यविषयसंख्याविरुद्धसंख्याविवक्षाविषयत्वसंबन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । स्वं-विशेष्यवाचकपदोत्तरविभक्तिः, प्रकृते दारपदोत्तरजस्विभक्तिर्न गृहीतुं शक्यते, तत्तात्पर्यविषयसंख्यायाः अप्रसिद्धेः, तथा च व्यधिकरणसंबन्धावच्छिन्नजस्विभक्त्यभावस्य केवलान्वयितया शोभनपदोत्तरजस्विभक्तौ सत्वात्तादृशविभक्त्यभाववद्विभक्तिप्रकृतित्वस्य शोभनपदे सत्वान्न समानवचनकत्वानुपपत्तिः ।

तथा च यत्र यत्पदवत्त्वं तत्र तत्पदवत्त्वम् । यत्पदवत्ता च स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्व—स्वाव्यवहितोत्तरत्वेनाऽनुसन्धीयमानविभक्तिविशिष्टविभक्तिप्रकृतित्वोभयसं० । विभक्तौ विभक्तिवै०स्वाभाववत्त्वसं । स्वाभावश्च स्वतात्पर्यविषयसंख्याविरुद्धसंख्यानिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वसंबन्धावच्छिन्नप्रतियोगिताकः । तत्पदवत्ता च स्वाव्यवहितोत्तरविभक्तिवृत्तिआनुपूर्वीमद्विभक्तिप्रकृतित्वसंबन्धेनेति वाच्यम् । एवं सति मैथिली रामदारा इत्यस्य समानवचनकत्वापत्तिः । उपदर्शितस्वतात्पर्येत्यादिसंबन्धविरहेण तादृशसंबन्धावच्छिन्नप्रतियोगिताकदारपदोत्तरविभक्त्यभावस्य मैथिलीपदोत्तरसुविभक्तौ सत्वात्तादृशविभक्तिप्रकृतित्वस्य मैथिलीपदे सत्त्वात् इति चेन्न । स्वतात्पर्यविषयसंख्याऽविरुद्धत्वसंबन्धावच्छिन्नप्रतियोगिताकविभक्त्यभाववत्संख्याविवक्षाविषयत्वाभाववद्विभक्तिप्रकृतित्वस्य विवक्षणात् । तथा च न समानवचनकत्वापत्तिः, विशेष्यवाचकदारपदोत्तरजस्विभक्तेः स्वपदाऽग्राह्यतया तादृशव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकोक्तविभक्त्यभाववती एकत्वसंख्या तद्विवक्षाविषयत्वाभावस्य सुविभक्तौ विरहादिति भावः ।

अनुगमे तु द्वितीयसंबन्धे विशेषः। स्वाव्यवहितोत्तरत्वेनाऽनुसन्धीयमानविभक्तिविशिष्टसंख्यानिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तिप्रकृतित्वसं०। वै०स्वाभाववत्वसं०। स्वाभावश्च स्वतात्पर्यविषयसंख्याऽविरुद्धत्वसंबन्धावच्छिन्नप्रतियोगिताकः।

अथ दारपदस्य विशेषणपरत्वे मैथिली रामदारा इत्यादौ समानवचनकत्वापत्तितादवस्थ्यम्, मैथिलीपदोत्तरसुविभक्तितात्पर्यविषयसंख्याऽविरुद्धत्वसंबन्धावच्छिन्नप्रतियोगिताकाभाववती बहुत्वसंख्यातद्विवक्षाविषयत्वाभावस्य दारपदोत्तरजसविभक्तौ सत्वात् तादृशविभक्तिप्रकृतित्वस्य दारपदे सत्वात् इति चेन्न।

नियतवचनकान्ययत्नदवत्वं यत्र तत्र स्वाव्यवहितोत्तरविभक्तिवृत्तिआनुपूर्वीमद्विभक्तिप्रकृतित्व-नियतवचनकान्यत्वोभयसंबन्धेन तत्नदवत्वस्य विवक्षणान्न दोषः।

नियतवचनकत्वं च धर्मविशिष्टत्वम्। वै०स्वावच्छिन्नपरत्व-स्वविशिष्टशाब्दजनकतावच्छेदकविभक्तिनिष्ठविशेष्यतानिरूपिताऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रकारतावच्छेदकानुपूर्वीमत्वोभयसं०। विशेष्यतायां स्ववै०स्वाभाववत्वसं०। स्वाभावश्च स्वावच्छिन्नविषयतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकविषयतावत्वसंबन्धावच्छिन्नप्रतियोगिताकः। विषयतावत्वं च स्वसमानाधिकरणसुब्विभाजकधर्मसामानाधिकरण्य-स्वावच्छेदकानवच्छिन्नत्व-स्वनिरूपिताऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नविषयतावच्छेदकावच्छिन्नविषयतानिरूपितत्वैतत्त्रितय सं०।

स्वं स्त्रीत्वं तदवच्छिन्नपरत्वं-एवं स्वं स्त्रीत्वं तद्विशिष्टा या दारपदजन्यशाब्दबोधजनकतावच्छेदिका-अव्यवहितोत्तरत्वसंबन्धावच्छिन्नदारपदत्वावच्छिन्नप्रकारता-निरूपितजस्त्वरूपानुपूर्व्यवच्छिन्नविभक्तिनिष्ठविशेष्यता तन्निरूपिताऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नदारत्वरूपानुपूर्व्यवच्छिन्नप्रकारतावच्छेदकदारत्वरूपानुपूर्वीमत्वं च दारपदेऽस्ति। विशेष्यतायां स्ववैशिष्ट्यमपि-स्वं स्त्रीत्वं तदवच्छिन्नविशेष्यतानिरूपितबहुत्वसंख्यानिष्ठशाब्दबोधीयप्रकारताप्रयोजिका अव्यवहितोत्तरत्वसंबन्धावच्छिन्नदारपदत्वावच्छिन्नप्रकारतानिरूपितजस्त्वावच्छिन्नविशेष्यता भवितुं नार्हति, तत्र जसो बहुत्वाऽबोधकत्वात्, किन्तु घटा इतिज्ञानीयजस्विषयतैव, तादृशविषयतावत्वसंबन्धावच्छिन्नप्रतियोगिताकस्त्रीत्वाभावो विभक्तिनिष्ठविशेष्यतायाम्। तादृशविषयतावत्वं विशेष्यतायां नास्ति, स्वं जस्विषयता तत्समानाधिकरणसुब्विभाजकप्रथमात्वसामानाधिकरण्यस्य, स्वनिरूपिताऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रकारतावच्छेदकदारत्वावच्छिन्नप्रकारतानिरूपितत्वस्य च द्वयोः सत्वेपि जस्विषयतावच्छेदकानवच्छिन्नत्वविरहात्।

विषयतावदन्यत्वं वा नियतवचनकत्वम् । विषयतावत्त्वं च-स्वावच्छेदकावच्छिन्न-परत्व-स्वनिरूपकबोधजनकत्वप्रकारकतात्पर्यविषयतावच्छेदकानुपूर्वीमत्त्व, स्वविशिष्ट-विषयताकबोधजनकत्वप्रकारकतात्पर्यविषयतावच्छेदकाऽऽनुपूर्वीमत्त्वैतन्नितयसं० । स्ववै०स्वनिरूपितप्रकारतावच्छेदकसंख्यात्वव्याप्यधर्मातिरिक्तताद्दशधर्मावच्छिन्नप्रकार-ताकत्व स्वावच्छेदकावच्छिन्नत्वोभयसं० ।

विषयतापदेन बहुत्वत्वावच्छिन्नप्रकारतानिरूपितस्त्रीत्वावच्छिन्नविशेष्यता ग्राह्या । स्त्रीत्वावच्छिन्नविशेष्यतावच्छेदकीभूतस्त्रीत्वावच्छिन्नपरत्वस्य दारपदे सत्वेपि स्त्रीत्वावच्छिन्नविषयतानिरूपकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताव-च्छेदकभूतदारपदस्वरूपानुपूर्वीमत्त्वस्य च सत्वेपि बहुत्वत्वावच्छिन्नप्रकारतानिरू-पितस्त्रीत्वावच्छिन्नविशेष्यताविशिष्टत्वं नास्ति, ताद्दशस्त्रीत्वावच्छिन्नविशेष्यतायाम् । ताद्दशविशेष्यतानिरूपितबहुत्वत्वावच्छिन्नप्रकारतावच्छेदकीभूतसंख्यात्वव्याप्यैकत्वत्वा-वच्छिन्नप्रकारताकत्वस्य स्त्रीपदजन्यबोधीयस्त्रीत्वावच्छिन्नविशेष्यतायां सत्वेन" ताद्दशस्त्रीत्वावच्छिन्नविशेष्यतायां विरहेण स्वविशिष्टाविषयता अन्यैव, ताद्दशविषय-ताकबोधजनकत्वप्रकारकतात्पर्यविषयतावच्छेदकानुपूर्वीमत्वरूपतृतीयसंबन्धविरहेण विषयतावदन्यत्वस्य दारपदे सत्वान्नियतवचनकत्वम् । उक्तसंबन्धत्रयेण घटत्वाद्य-वच्छिन्नविशेष्यतावत्त्वस्य घटादिपदे सत्वान्न नियतवचनकत्वम् ।

दारा इवाचरतीति विग्रहनिष्पन्नमाचारक्विबन्तदारपदवृत्तिः ऽनुपूर्वी सैव स्त्रीवाचकदारपदेऽपि वर्तते, एवं च दारसदृशाचरणकर्तृत्वावच्छिन्नविशेष्यतामादाय स्त्रीवाचकदारशब्दे नियतवचनकत्वानुपपत्तिरतः स्वावच्छेदकावच्छिन्नपरत्वनिवेशः । तथा च स्त्रीवाचकदारपदस्य ताद्दशविशेष्यतावच्छेदकीभूतदारसदृशाचरणकर्तृत्वाव-च्छिन्नपरत्वाभावान्नानुपपत्तिः ।

द्वितीयसंबन्धाऽनिवेशे एकत्वप्रकारतानिरूपितस्त्रीत्वावच्छिन्नविशेष्यतामादाय दारपदस्य नियतवचनकत्वानुपपत्तिः—एकत्वप्रकारतानिरूपितस्त्रीत्वावच्छिन्न-विशेष्यतावच्छेदकीभूतस्त्रीत्वावच्छिन्नपरत्वस्य दारपदे सत्वात् । एवं ताद्दशविशेष्य-ताविशिष्टा या बहुत्वप्रकारतानिरूपितस्त्रीत्वावच्छिन्नविशेष्यता तन्निरूपकबोधजनक-त्वप्रकारकतात्पर्यविषयतावच्छेदकानुपूर्वीमत्त्वस्य च तत्र सत्वात् । एवं ताद्दशविशेष्य-तायां ताद्दशविशेष्यतावैशिष्ट्यमपि, स्वपदग्राह्यताद्दशविशेष्यतानिरूपितप्रकारतावच्छे-दकसंख्याव्याप्यैकत्वभिन्नबहुत्वप्रकारतानिरूपितत्वस्य स्वावच्छेदकावच्छिन्नत्वस्य च सत्वात् । द्वितीयसंबन्धनिवेशे तु ताद्दशविशेष्यतानिरूपकबोधजनकत्वप्रकारकतात्पर्य-विशेष्यतावच्छेदकानुपूर्वीमत्त्वस्य दारपदे विरहेण विषयतावदन्यत्वस्य सुवचत्वात् ।

**अतएवेति** । ईदृशनियमाङ्गीकारादेवेत्यर्थः । **पुरूरव आर्द्रवसौ विश्वेदेवा इति** । पुरूरव आर्द्रवसौ पार्वणे समुदाहृतौ इति वाक्यम् । अत्र विश्वेदेवा इत्यध्याहृत्य पार्वणे विश्वेदेवाः पुरूरव आर्द्रवसौ समुदाहृतौ इत्यन्वयः । **द्वित्वविशिष्टयोः पुरुरव आर्द्रवसोः प्रभृत्योरिति** । प्रभृतिग्रहणं विशेष्यवाचकविश्वेदेवपदोत्तरविभक्तितात्पर्यविषयबहुत्वसंख्यायाः अन्वययोग्यतां सूचयितुम् , विश्वेदेवानां बहुत्वात् ।

तथा च द्वित्वविशिष्टपुरूरवआर्द्रवोऽभिन्ना बहुत्वविशिष्टविश्वेदेवा इति बोधः । न च बहुत्वविशिष्टेषु विश्वेदेवेषु द्वित्वविशिष्टयोः पुरुरव आर्द्रवसोरन्वये द्वौ बहव इति प्रयोगापत्तिरिति वाच्यम् । विशेषणतयेत्यस्य परंपरया विशेषणतयेत्यर्थात् । परंपरा च स्वघटितसमुदायत्ववदभेद एव । स्वं पुरुरव आर्द्रवश्च । तादृशसमुदायत्वे द्वित्वान्वयः । तथा च द्वित्वविशिष्टपुरूरव आर्द्रवोघटितसमुदायत्ववदभिन्नाविश्वेदेवा इति बोधः । **तद्वाचकपदस्य** ।

---

तृतीयसम्बन्धाऽनिवेशेपि तद्दोषतादवस्थ्यम् । तत्रापि स्वावच्छेदकावच्छिन्नस्वाऽनिवेश स एव दोषः । बहुत्वप्रकारतानिरूपितविशेष्यताया एव संबन्धत्रयेण दारपदे सत्त्वात् । बहुत्वप्रकारतानिरूपितस्त्रीत्वावच्छिन्नविशेष्यताविशिष्टा या या दारसदृशाचरणकर्तृत्वावच्छिन्नविशेष्यता तन्निरूपकदारसदृशाचरणकर्तृविषयकबोधजनकतावच्छेदकीभूतक्रियत्तदारपदत्वावच्छिन्नानुपूर्वीमत्वस्य दारपदे सत्वात् । अस्ति च तादृशविशेष्यतावैशिष्ट्यमपि तादृशविशेष्यतानिरूपितप्रकारतावच्छेदकबहुत्वभिन्नैकत्वप्रकारतानिरूपितत्वस्य तत्र सत्वात् । प्रथमद्वितीययोः संबन्धसत्वाच्च । तन्निवेशे च तादृशविशेष्यतावच्छेदकीभूतस्त्रीत्वावच्छिन्नत्वस्य तत्र विरहेण "दारसदृशाचरणकर्तृत्वावच्छिन्नत्वस्यैव तत्र सत्वेन" तृतीयसंबन्धाभावान्नानुपपत्तिः ।

अत्र स्वार्थनिष्ठाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्वस्वोत्तरविभक्त्यर्थतावच्छेदकीभूतधर्मावच्छिन्नसंख्यानिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वोभयसम्बन्धेन यत्र विशेषणवाचकपदवत्त्वं तत्र समानवचनकत्वमित्येव कथं नोक्तम् । न च विशेषणपदोत्तरविभक्तेर्निरर्थकतामते नीलो घट इत्यत्र समानवचनकत्वानुपपत्तिरिति वाच्यम् । स्वोत्तरविभक्तिवृत्त्यानुपूर्व्यवच्छिन्नशक्ततानिरूपितशक्यतावच्छेदकजात्यवच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्वस्य द्वितीयसंबन्धस्थाने विवक्षणात् । नच मैथिली रामदारा इत्यादौ मैथिल्या विशेषणत्वविवक्षाणां समानवचनकत्वापत्तिरिति वाच्यम् । नियतवचनकान्यत्वस्य विवक्षणादिति विभावनीयम् ।

**अत एव पुरूरवआर्द्रवसौ विश्वेदेवा इत्यादौ द्वित्वविशिष्टयोः पुरूरवआर्द्रवः प्रभृत्योर्विशेषणतया विवक्षितत्वात्तद्वाचकपदस्य द्विवचनान्तता। वेदाः प्रमाणमित्यत्र च विशेषणपदोत्तरविभक्त्या बहुत्वविरुद्धमेकत्वं विवक्षितम्, तच्च प्रकृत्यर्थतावच्छेदके प्रमिति-करणत्वेऽन्वेति। शाब्दप्रमाकरणत्वं च शब्दत्वावच्छिन्नं यावच्छब्द-निष्ठमेकमेवेति नायोग्यता।**

---

पुरूरवआर्द्रवोवाचकपदस्य। **द्विवचनान्तता।** न समानवचनकत्वमिति शेषः। तथा च विशेष्यवाचकविश्वेदेवपदोत्तरविभक्तितात्पर्यविषयीभूतबहुत्वसंख्या-विरुद्धद्वित्वसंख्यायाः पुरूरवआर्द्रवोरूपविशेषणपदोत्तरविभक्त्या विवक्षितत्त्वान्न समानवचनकत्वमिति भावः। विश्वेदेवानां बहुत्वेपि तद्विरुद्धद्वित्व-संख्याविशिष्टयोरेव पुरूरवआर्द्रवसोस्तत्र तत्र कर्मणि पूज्यत्वस्य प्रतिपिपादयि-षितत्वादिति ध्येयम्॥

वेदाः प्रमाणमित्यत्र समानवचनकत्वाभावमुपपादयति। **वेदाः प्रमाण-मित्यत्र चेति। विशेषणपदोत्तरविभक्त्येति।** विशेषणीभूतप्रमाणपदोत्तर-सुविभक्त्या इत्यर्थः। **एकत्वं विवक्षितमिति।** तथा च वेदपदोत्तरजस-विभक्तितात्पर्यविषयबहुत्वसंख्याविरुद्धैकत्वसंख्यायाः प्रमाणपदोत्तरसुविभक्त्या विवक्षितत्वान्न समानवचनकत्वमिति भावः।

ननु एकत्वं प्रकृत्यर्थे प्रमाणे बाधितम्, तेषां बहुत्वादित्यत आह। **तच्चेति।** एकत्वं चेत्यर्थः। **प्रकृत्यर्थतावच्छेदके** इति। ननु प्रकृत्यर्थप्रमाणानां बहुत्वेपि नानैकत्वानां प्रत्येकमन्वयेनैव सामंजस्ये प्रकृत्यर्थतावच्छेदके तद-न्वयानुधावनं किमर्थमिति चेन्न। नहि एकत्वमात्रमेकवचनार्थः। किन्तु सजाती-यद्वितीयरहितत्वम्, तच्च स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपम्। तथाच चालनीन्यायेन प्रमाणगतैकत्वे तादृशभेदप्रतियोगितावच्छेदकत्वस्यैव सत्वादयोग्यत्वप्रसंगात्। न च प्रकृत्यर्थतावच्छेदकरूपेण सजातीयप्रमाणे प्रमाणत्वगतैकत्वस्याऽसत्वेन तत्र सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्व-विरहेणा योग्यतायास्तथाप्यनुद्धार इति वाच्यम्। यत्र प्रकृत्यर्थतावच्छेदके एकत्वान्वयस्तत्र भेदीयप्रतियोगितावच्छेदकता स्वाश्रयाश्रयत्वसम्बन्धाव-च्छिन्ना ग्राह्या।

**प्रमितिकरणत्वे** इति। करणत्वसामान्यं हि व्यापारसंबन्धावच्छिन्नकार-णत्वम्। कारणत्वं तु तादात्म्यादिविभिन्नसंबन्धावच्छिन्नकारणत्वम्, न तु

व्यापारसंबन्धावच्छिन्नं, व्यापारेऽव्याप्तेः, तस्यापि कारणत्वस्येष्टत्वात् । कारणत्वकरणत्वयोरयमेव विशेषः ।

प्रमाणत्वं तु प्रमात्वन्यूनवृत्तिधर्मावच्छिन्नप्रमानिष्ठकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वम् । प्रमात्वं चानुगतमन्यत्र स्पष्टम् तथाच प्रमिति करणत्वे एकत्वान्वये एकत्वविशिष्टप्रमितिकरणत्ववदभिन्ना वेदाः इति वोधः ।

ननु एकत्वान्वयितावच्छेदकस्य शाब्दप्रमितिकरणतात्वस्याऽऽश्रयभेदप्रयुक्तप्रमितिकरणताया भिन्नतया तद्भेदेन प्रमितिकरणतात्वस्य भिन्नत्वात् कथं परिष्कृतैकत्वान्वय इत्यत आह । **शब्दत्वावच्छिन्नमिति** । तथा च शब्दत्वस्यैवाऽन्वयितावच्छेदकतया तस्य चैकत्वात्तदवच्छिन्नस्य प्रमितिकरणत्वस्याप्येकत्वेन तत्रैकत्वान्वयाऽवाधात् ।

नीलाऽभिन्नो घट इति शाब्दबोधं प्रति नीलो घट इति वाक्यविशेषः कारणमिति रीत्या तत्तच्छाब्दं प्रति तत्तच्छब्दस्य कारणत्वमिति विशेषकार्यकारणभावे यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति न्यायेन शाब्दत्वावच्छिन्नं प्रति शब्दत्वेन सामान्यतः कार्यकारणभावोपि वाच्यः । सामान्यधर्मावच्छिन्नकारणताया सामान्यधर्मस्वरूपतया कारणताया ऐक्येन तत्रैकत्वान्वयोपि निरावाध एवेत्याशयेन **"शाब्दप्रमाकरणत्व च शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमेकमेवेति नायोग्यते"**ति भट्टाचार्येणोक्तम्[1] ।

---

१ **अत्रेदं चिन्त्यते** । शाब्दप्रमाकरणत्वमित्यस्य यदि शाब्दत्वप्रमात्वोभयधर्मावच्छिन्नकार्यतानिरूपितकारणत्वमर्थः—तदा प्रमात्वस्य कार्यतावच्छेदकत्वेपि शब्दत्वावच्छिन्नकारणतानिरूपितकार्यताया भ्रमप्रमासाधारण्येन शाब्दप्रमात्वस्य कार्यतान्यूनवृत्तित्वेन कार्यतानवच्छेदकत्वात् । वस्तुतः प्रमात्वमर्थसमाजग्रस्तम् । तत्वं च वस्तुसद्भावाधीनत्वम्, विशेष्यप्रकारज्ञानसामग्रीप्रयोज्यत्वमिति यावत् । एतेन प्रमात्वस्य कार्यतानवच्छेदकत्वे प्रमाया आकस्मिकत्वापत्तिरिति निरस्तम् । यदि प्रमानिष्ठशाब्दत्वावच्छिन्नकार्यतानिरूपितकारणत्वमर्थः—तदा प्रमात्वस्योपलक्षणतया शाब्दत्वावच्छिन्नकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वस्य प्रसिद्धतया तदप्रसिद्धिवारणेपि तादृशकारणत्वस्य वह्निना सिञ्चतीति वाक्येपि सत्वेन तत्रापि प्रमाणत्वव्यवहारापत्तेरिति चेन्न । शाब्दत्वावच्छिन्नकार्यतायाः शब्दत्वावच्छिन्नकारणतानिरूपितायाः भ्रमप्रमासाधारण्येपि प्रमावृत्तित्वविशिष्टायास्तयाः प्रमावृत्तित्ववत्तन्निरूपितकारणतापि प्रमाजनकवाक्ये एवेति नोक्तवाक्यस्य प्रमाण-

**न च पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधः ।**

---

**नचेति** । एवमितिशेषः । एकदेशान्वये इति यावत् । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिः । आश्रयतासवन्धावच्छिन्नपदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावान्पदार्थः । अवच्छेदकतासंबन्धावच्छिन्नपदजंन्यबोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यतावान्पदार्थैकदेशः । प्रकृते च प्रमाणपदार्थैकदेशे प्रमाणत्वे "प्रमितिकरणत्वे" एकत्वान्वयो न संभवति व्युत्पत्तिविरोधादिति भावः । एतस्या व्युत्पत्तेरङ्गीकारादेव घटत्वे नित्यान्वयतात्पर्येण नित्यो घट इत्यस्य नापत्तिः, घटत्वस्य पदार्थैकदेशत्वात् । न च स्वरूपत एव घटपदादुपस्थिते घटत्वे नित्यान्वयो न संभवति, अन्वयितावच्छेदकरूपेणोपस्थित्यभावादिति वाच्यम् । जातित्वविशिष्टजातिमत्तात्पर्यकतत्पदघटितस्य जातावन्वयतात्पर्येण स नित्य इतिवाक्यस्य प्रामाण्यापत्तेः ।

**कार्यकारणभावस्तु** विशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेनोपस्थितिः कारणमित्याकारकः । एवं च घटत्वे विशेष्यतासंबन्धेन घटपदजन्योपस्थितेरभावान्नोक्तापत्तिः[1] ।

---

त्वप्रसक्तिः । तथाच प्रमात्वन्यूनवृत्तिशाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणत्वमेव तदर्थः ।

वस्तुतः प्रमात्वन्यूनवृत्तिशाब्दत्वघटितो धर्मः नीलाभिन्नो घट इत्यादितत्तच्छाब्दबुद्धित्वमेव तदवच्छिन्नकार्यतानिरूपितकारणता न शब्दत्वावच्छिन्ना किन्तु तत्तच्छब्दत्वावच्छिन्नैवेति सामान्यधर्मावच्छिन्नत्वविरहेण कारणत्वस्य नानात्वेन "एकमेवेति" ग्रन्थाऽसंगतिरतः शाब्दत्वजातौ एकत्वान्वयः । तथाच प्रमाणपदोत्तरस्वर्थैकत्वस्य शाब्दत्वजातावन्वयेन एकत्वविशिष्ट "प्रमात्वन्यूनवृत्ति"शाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतावदभिन्ना वेदा इति बोधः । एकत्वस्य स्वाश्रयप्रमात्वन्यूनवृत्तिशाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितत्वसंबन्धेन तादृशप्रमाकरणत्वेऽन्वयवलात्कथंचिदेकमेवेति ग्रन्थः संगमनीयः । न च तादृशकारणतायाः प्रमाणीभूतशब्दनिष्ठत्वेन शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमित्यस्याऽसंगतिरिति वाच्यम् । शब्दत्वावच्छिन्नमित्यस्याऽऽनुपूर्व्यवच्छिन्नमित्यर्थात् । यावच्छब्दनिष्ठमित्यस्य च प्रमाणशब्दनिष्ठमित्यर्थात् ।

१ न च लाङ्गूले शोभनान्वयतात्पर्येण शोभनः पशुरित्यादिप्रयोगस्य स नित्य इति प्रयोगस्य चापत्तिः, पशुपदजन्योपस्थितेर्विशेष्यतासंबन्धेन लाङ्गूले सत्त्वात्,

संपन्नो व्रीहिरित्यत्र व्रीहिपदोत्तरसुविभक्त्यर्थैकत्वस्य व्रीहावन्वयो न संभवति, एकत्वविशिष्टसंपत्तिविशिष्टस्याऽभेदाऽन्वयाऽसंभवात्, अनिर्धारित-वहुत्वसंख्या हि संपत्तिः। एवं च व्रीहित्वजातौ एकत्वान्वयस्याऽऽवश्यकत्व-वत्प्रमाणत्वेऽपि एकत्वान्वयस्य संभव इति उक्तव्युत्पत्तिसंकोच आवश्यक

---

एवं जातावपि तत्पदजन्योपस्थितिर्बोध्येतिवाच्यम्। कारणतावच्छेदककोटौ मुख्यत्वनिवेशेन दोषाभावात्। नचैवमपि व्यतिरेकव्यभिचारः, लाङ्गूले लोमनिष्ठ-प्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधस्य सत्वादिति वाच्यम्। कार्यता-वच्छेदककोटावपि विशेष्यतायां मुख्यत्वस्य निवेशनीयत्वात्। तथा च लाङ्गूले मुख्यविशेष्यतासंबन्धेन शाब्दबोधस्याप्यभावान्न व्यभिचारः। न च कार्यतावच्छेदक-कोटौ मुख्यत्वनिवेशे पशुपदार्थतावच्छेदकीभूतलाङ्गूले शोभनाद्यभेदान्वयापत्तिः, कार्यतावच्छेदकानाक्रान्तत्वादिति वाच्यम्। पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्य-तासंबन्धेनैव शाब्दबुद्धित्वस्य कार्यतावच्छेदकत्वात्। लोमस्य तु पदार्थान्तरत्वा-भावात्। पदार्थान्तरत्वस्य केवलान्वयितया लोमस्यापि पदार्थान्तरत्वाद् व्यभिचार-स्तदवस्थ इति चेद्।

विशेष्यताविशिष्टविशेष्यतासंबन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासंबन्धेनो-पस्थितेः कारणत्वात्। वै०स्वतादात्म्य-स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपित-विषयत्वाप्रयोज्यविषयतानिरूपितत्वोभयसं०। तथा च विशेष्यतापदेन लाङ्गूल-निष्ठविशेष्यतामादाय तत्तादात्म्यस्य स्वपदग्राह्यतादृशविशेष्यताप्रयोजकपशुपदवृत्ति-ज्ञानीय "लाङ्गूलवन्निष्ठ" विषयतानिरूपितविषयत्वाऽप्रयोज्यशाब्दबोधीयशोभननिष्ठ-"प्रकारतात्मक" विषयतानिरूपितत्वस्य च लाङ्गूलविषयतायां सत्वेन कार्यता-वच्छेदकाक्रान्ततया तत्र मुख्यविशेष्यतासंबन्धेन पशुपदजन्योपस्थितेरभावान्नापत्तिः। लोमनिष्ठप्रकारतात्मकविषयतायां तादृशविषयत्वाऽप्रयोज्यत्वविरहेण तादृशशाब्द-बुद्धित्वस्य कार्यतावच्छेदकानाक्रान्ततया तत्र मुख्यविशेष्यतासंबन्धेन पशुपदजन्यो-पस्थितेरसत्वेऽपि न क्षतिः।

तथा च नित्यो घट इत्यस्य नापत्तिः, विशेष्यताघटत्वनिष्ठा तद्विशिष्टा सैव, स्वतादात्म्यस्य स्वप्रयोजकघटपदवृत्तिज्ञानीयघटनिष्ठविषयतानिरूपितविषयत्वाप्रयो-ज्यशाब्दबोधीयनित्यनिष्ठप्रकारतानिरूपितत्वस्य च सत्वात्, तादृशविशेष्यतासंबन्धेन शाब्दबोधस्य घटत्वे सत्वेन तत्र मुख्यविशेष्यतासंबन्धेनोपस्थितेरभावात्। तुल्ययुक्त्या वेदाः प्रमाणमित्यत्रापि प्रमाणत्वे एकत्वान्वयानुपपत्तिः, प्रमाणत्वे मुख्यविशेष्यता-संबन्धेनोपस्थितेरभावात्।

संपन्नो व्रीहिरित्यनेकव्रीहितात्पर्यकेप्येकवचनदर्शनेन साद्दशव्युत्पत्तिसंकोचस्यावश्यकत्वात्। यदि च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसंबन्धेन प्रकृत्यर्थे एवैकत्वान्वयः, व्रीहित्वजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतया अन्वयितावच्छेदकरूपेणाऽनुपस्थितेस्तत्र पदार्थान्तरस्याऽन्वयानुपपत्तेरिति मन्यते, तदा प्रकृतेपीदृश्येव गतिः।

---

इत्याशयेनाह। संपन्नो व्रीहिरिति। उक्तव्युत्पत्तिसंकोचस्येति। कार्यकारणभावज्ञानरूपाया उक्तव्युत्पत्तेः—पदार्थःपदार्थेनान्वेतीति व्युत्पत्तेः—संकोचस्य-सामान्यतः कार्यकारणभावज्ञाने अंशतो भ्रमत्वकल्पनस्येत्यर्थः।

अत्रेदं बोध्यम्। उक्तवाक्यरूपा न व्युत्पत्तिः, तथासति व्युत्पन्नोयमिति व्यवहारानुपत्तिःवाक्यस्य पुरुषनिष्ठत्वाभावात्। स्वानुकूलकृतिमत्वसंबन्धेन पुरुषनिष्ठत्वेन तदुपपादनेपि अर्थज्ञानशून्ये व्युत्पन्न इति व्यवहारापत्तेः। ग्रन्थे व्युत्पादकत्वव्यवहारानुपपत्तेश्च।

सामान्यतः कार्यकारणभावस्तु स्वतादात्म्य स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यविषयतानिरूपितत्वोभयसंबन्धेन विशेष्यताविशिष्टविशेष्यतासंबन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासंबन्धेनोपस्थितिः कारणमित्याकारकः। तथाच व्रीहित्वे मुख्यविशेष्यतासंबन्धेनोपस्थितेरभावादन्वयबोधानुपपत्तिरिति भावः।

नच कार्यतावच्छेदकीभूतविशेष्यतासंबन्धे व्रीहिपदाऽप्रयोज्यत्वं-व्रीहित्व-प्रमाणत्वाद्यवृत्तित्वं वा निवेशनीयम्, तथा च पदाऽप्रयोज्या-व्रीहित्व-प्रमाणत्वाद्यवृत्तिर्वा या विशेष्यताविशिष्टविशेष्यतां तत्संबन्धेन शाब्दंप्रतीत्युक्तौ न दोषः। अथवा मुख्यविशेष्यत्वमनुपादाय मुख्यविशेष्यताभिन्नत्वव्रीह्यादिपदाऽप्रयोज्यत्वोभयाभाववद्विशेष्यतासंसर्गेणोपस्थितेः कारणत्वोक्तौ न दोष इति वाच्यम्। तथापि व्रीहित्वे एकत्वस्येव नित्यपदार्थस्यापि अन्वयसंभवेन नित्यो व्रीहिरिति प्रयोगस्य प्रामाण्यापत्तेः। अत्रोच्यते। स्वादिप्रयोज्यैकत्वनिष्ठप्रकारतानिरूपितव्रीहित्वनिष्ठविशेष्यताभिन्ना या विशेष्यताविशिष्टविशेष्यता तत्संसर्गेण शाब्दं प्रति मुख्यविशेष्यतासंबन्धेनोपस्थितेर्हेतुत्वोक्तौ न दोषः। नित्यो व्रीहिरित्यादौ एकत्वनिष्ठप्रकारतानिरूपितविशेष्यतातो नित्यनिष्ठप्रकारतानिरूपितविशेष्यताभिन्नैवेति नोक्तदोषतादवस्थ्यम्। विभक्त्यप्रयोज्यपकारतानिरूपितविशेष्यतासंबन्धो वा कार्यताच्छेदकः, तथाच न व्यभिचारः, स्वर्थैकत्वनिष्ठप्रकारताया विभक्तिप्रयोज्यत्त्वात्।

**यदि चेति**। विवादप्रदर्शनार्थं। तथाहि-आकाशपदात्स्वरूपत उपस्थित-स्याकाशस्य शाब्दबोधविषयत्वे अन्वयितावच्छेदकरूपणैवान्वयिन उपस्थितेर-पेक्षितत्वनियमाभावात् व्रीहित्वेएकत्वान्वयस्वीकारात्केवलं पदार्थः पदार्थेना-न्वेतीति नियमसंकाचो दोषः। शब्दाश्रयत्वादिनोपस्थितस्यैवाकाशस्य शाब्दवोधविषयत्वोपगमे व्रीहित्वेऽन्वयोपगमे अन्वयितावच्छेदकरूपेणे त्यस्य-पदार्थः पदार्थेनान्वतीतिनियमद्वयस्य संकोचः, अतो व्रीहावेव एकत्वा-न्वयः स्वीकार्यः। अस्मिन्पक्षे च संख्यायाः पर्याप्तिसंवन्धेनैवान्वय इति नियमस्य संकोचः, परंपरासंबन्धस्य कल्पने च दोषः

**स्वाश्रयेति**। स्वं-एकत्वं-तदाश्रयीभूतं प्रकृत्यर्थतावच्छेकं-व्रीहित्वं-तद्वत्व-संवंधेनेत्यर्थः। **प्रकृत्यर्थेएवेति**। व्रीहावेवेत्यर्थः। एवकारेण व्रीहित्वस्य व्यवच्छेदः। व्रीहित्वे एकत्वान्वये वाधकमाह। **व्रीहित्वजातेरिति**। अस्या-न्वयितावच्छेकरूपेणाऽनुपस्थितेरित्यनेनाऽन्वयः। व्रीहित्वजातावन्वयपक्षे व्रीहि-त्वत्वमन्वयितावच्छेदकं तेन रूपेणाऽनुपस्थितेरित्यर्थः।

अन्वयितावच्छेदकतया संभाव्यमानं यद्रूपं तद्रूपेणाऽनुपस्थितेरिति यावत्। तेन प्रकृतेऽन्वयितावच्छेदकस्याप्रसिद्धावपि न क्षतिः। तत्र हेतुः **स्वरूपतो व्रीह्यादिपदशक्यतावच्छेदकतयेति**। **तत्र**। व्रीहित्वे। **पदार्था-न्तरस्य**। सुविभक्त्यर्थैकत्वस्य। **अन्वयानुपपत्तेरिति**। तथाचाऽऽकाङ्क्षा-भास्यसंवन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबघेन शाब्दबोधे किञ्चिद्धर्मावच्छिन्नविशेष्यतासंवन्धेनोपस्थितिः कारणमिति कार्यकारणभाव-मूलिका "अन्वयितावच्छेदकरूपेणान्वयिनः उपस्थितिरपेक्षणीयेति" नियमोप-पत्तिः। नचाऽनया पदार्थः पदार्थेनान्वेतीत्यस्य गतार्थता। लोम्नि पशुभेदा-न्वयतात्पर्येण पशुरपशुरिति प्रयोगवारणाय तस्याः आवश्यकत्वात्, अन्व-यितावच्छेदकीभूतलोमत्वेन लोम्नः उपस्थितत्वात्। नापि पदार्थः पदार्थे-नान्वेतीत्यनया तस्याः गतार्थता। घटघटत्वे घटपदाद्बोद्धव्ये इत्याकारकशक्ति-ज्ञानाधीनायां घटघटत्वयोः विशृंखलभावेनापस्थितौ घटत्वेऽभेदान्वयता-त्पर्येण नित्यो घट इत्यादेः प्रामाण्यवारणाय तस्या आवश्यकत्वात्। किंच प्रतिवध्यप्रतिवन्धकभावानुरोधेनापि सा स्वीकार्या, ह्रदोवन्ह्यभाववानिति निश्चयस्य द्रव्यं वन्हिमदितिबुद्धिं प्रत्यविरोधित्वात्। **प्रकृतेपि**। वेदाः प्रमाणमित्यादावपि। **ईदृश्येव गतिः**। यथा स्वाश्रयव्रीहित्ववत्तासंवन्धेन व्रीहावेकत्वान्वयेन संपन्नो वीहिरित्यत्र प्रामाण्योपपत्तिरूपा गतिः तथा

**यत्तु संपन्नो व्रीहिरित्यादौ एकवचनोपस्थितानि नानैकत्वानि नानाव्रीहिषु अन्वीयन्ते इत्युक्त्यैव सामञ्जस्ये जातावेकत्वभानोपगमो निरर्थकः इति—**

---

स्वाश्रयप्रमाणत्ववत्वसंबन्धेन प्रमाणे एकत्वान्वयेन प्रामाण्योपपत्तिरूपा गतिरित्यर्थः। तथाच न तदर्थं व्युत्पत्तिसंकोच इति भावः।

एकमात्रवृत्तिएकत्वसंख्याया "अनिर्धारितबहुत्वसंख्यात्मक" संपन्नत्वन्यूनवृत्तितया तदनुयोगितावच्छेदकत्वं न संभवः, एकत्वसामान्यस्य चाऽतिप्रसक्तत्वेन तदसंभवात्, किन्तु एतद्देशविद्यमानव्रीहित्वसमानाधिकरणैकत्वसामान्यस्य तदनुयोगितावच्छेदकत्वमुपपादनीयम्, एवं च जातावेकत्वभानोपगमोऽनुचितः तथाच न पदार्थःपदार्थेनेत्यादिनियमविरोधइतिमतंदूषयितुमुपन्यस्यति। यत्त्विति। एकवचनोपपस्थितानि नानैकत्वानीति। सुपदादेकत्वं वोद्धव्यमितीच्छातः एकत्वत्वरूपेणानेकेषु एकत्वेषु शक्तिग्रहः ततो नानैकत्वानामुपस्थितिरिति भावः।

अथ "एकवचनोपस्थितानि नानैकत्वानि"इत्यनेन नानैकत्वाना मुपस्थितत्वोक्तिरसंगता, शाब्दवोधे अपूर्वव्यक्तिभानाय उपस्थितिशाब्दवोधयोः समानप्रकारकत्वेनैव कार्यकारणभावस्य सिद्धान्ततया एकत्वत्वेन यत्किंचिदेकत्वोपस्थितावपि ( नानैकत्वोपस्थितिर्विरहेपि ) शाब्दवोधे योग्यानां नानैकत्वानांभानसंभवात्। न च शाब्दवोधविषयसकलव्रीहिषु एकत्वभानं न विवक्षणीयम्, निष्प्रयोजनत्त्वादिति वाच्यम्। अयं द्वौ इति प्रयोगवारणाय भासमानसंख्यानुयोगितावच्छेदकतया संख्याभानं स्वीकरणीयम्। संपन्नो व्रीहिरितिग्रन्थस्यैकत्वत्वजातीयेषु संपन्नत्वानुयोगितावच्छेदकत्त्वोपादानपरत्वेन संख्याभानस्यावश्योपेयत्वात्, अन्यथा "प्रत्येकं नानाव्रीहिषु" इत्याद्युक्तिवैफल्यात्, यत्किंचिद्व्रीहिव्यक्तौ यत्किंचिदेकत्वान्वयेनापि प्रामाण्यस्याऽक्षतेरिति चेन्न। सामान्यलक्षणास्वीकारपक्षे एवोक्तग्रन्थः, तत्पक्षे समानविषयतयैवोपस्थितिशाब्दयोः कार्यकारणभाव इति सकलैकत्वस्योपस्थितत्त्वापेक्षाऽस्तीति नासंगतिः। नानैकत्वानामेकव्रीहौ अन्वयभ्रमवारणाय प्रत्येकमिति।

एकत्वं न संख्यारूपं किन्तु पारिभाषिकम्, तच्च व्रीहौ नोपयुज्यते इत्याशयेनाह। **तदसदिति।** **स्वस्वजातीयेति।** अत्र घटोस्तीत्यादौ स्वंघटः वक्ष्यमाणरीत्या तत्सजातीयः स एव तन्निष्ठभेदप्रतियोगिताऽनवच्छेदकत्वस्य तदेकत्वे प्रसिद्धिः; संपन्नोव्रीहिरित्यत्र स्वपदग्राह्यव्रीहिसजातीयव्रीह्य-

**तद्वत् । यतः स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूप-सजातीयद्वितीयरहितत्वमेकवचनार्थः नत्वेकत्वमात्रम्, तस्य वस्तुमात्र-साधारण्येनाऽर्थत एव लाभात्, अनुपयोगाच्च ।**

**अत एव पशुना यजेतेत्यादौ पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वाद-नेकपशुकरणकयागान्नाऽदृष्टसिद्धिः ।**

---

न्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव तदेकत्वे सत्त्वेन तादृशभेदप्रतियो-गितानवच्छेदकैकत्वाऽप्रसिद्धिरतो व्रीहित्वजातौ एकत्वान्वयः ।

ननु एवमपि स्वसजातीयव्रीहिनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य व्रीहि-त्वगतैकत्वे सत्वात्पुनरप्रसिद्धिः । न च भेदीयप्रतियोगितावच्छेदकतायां स्वाश्रय-प्रकृत्यर्थतावच्छेदकवत्वसंबन्धावच्छिन्नत्वं निवेशनीयमिति वाच्यम् । तथासति तादृशसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदाऽप्रसिद्धेरिति चेन्न । स्वस-जातीयनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्य निवेशनीयत्वात् । अभावश्च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसं-बन्धावच्छिन्नप्रतियोगिताकः । प्रकृते च तादृशाभावस्य व्यधि-करणसंबन्धावच्छिन्नप्रतियोगिताकतया सर्वत्र सत्वेनाऽप्रसिद्ध्यभावात् । एवं च तादृशावच्छेदकतायां संबन्धावच्छिन्नत्वं न निवेशनीयम् ।

केचित्तु स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकतासामान्ये यत्संबन्धा-वच्छिन्नत्वयन्निष्ठत्वोभयाभावस्तत्संबन्धेन तद्वत्वं समुदितार्थ इत्याहुः ।

अन्ये तु स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व-प्रकृत्यर्थतावच्छेदकगतैकत्वनिष्ठत्वोभयाभाववती याऽवच्छेदकता तदभाव-वदेकत्वं सजातीयद्वितीयरहितत्वमित्याहुः ।

**नत्वेकत्वमात्रम्** । अविशेषितैकत्वत्वावच्छिन्नमात्रम् । **तस्य** । एकत्वस्य । **वस्तुमात्रसाधारण्येन** । केवलान्वयित्वेन । **अर्थतएवेति** । अर्थान्तरप्रतिपत्त्य-र्थमवश्यप्रयोक्तव्यपदार्थादेवेत्यर्थः । एवकारेणैकत्वबोधनाय शब्दप्रयोगव्यव-च्छेदः । **लाभात्** । ज्ञानात् । तथा च प्रकृतिं विना प्रत्ययस्य प्रयोगानर्हत्वेन प्रकृतिपदस्यावश्यप्रयोक्तव्यतया ततस्तदर्थलाभे तत्र शक्तिकल्पनमनुचितम्, सजातीयद्वितीयराहित्येन तु न प्रकृत्यर्थनियतम् इति तस्यानन्यलभ्यतया-एकवचनार्थतासंभव इति भावः । **अनुपयोगाच्चेति** । एकत्वप्रतिपत्तेः फलमनेकव्यावृत्तिः, सा च एकत्वमात्रप्रतिपत्तेर्न संभवतीति विशेषस्य एकवचनार्थतेति भावः ।

**साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्वरूपेण।**

---

अथ स्वसजातीयेत्यत्र स्वपदेन कस्य ग्रहणम्, न तावदेकत्वस्य, तद्ग्रन्थपर्यालोचनया प्रकृत्यर्थस्यैव साजात्यप्रतियोगित्वात्। नापि प्रकृत्यर्थस्य, स्वपदस्य हि साक्षात्परंपरया यः स्वार्थस्य विशेष्यः यश्च क्रियाकारकपदार्थस्तदुभयत्र शक्तिः, प्रकृते चोक्तस्वपदघटितवाक्यजबुद्धौ प्रकृत्यर्थो हि न स्वार्थघटितस्य विशेष्यः, तद्बोधकपदाऽभावात् प्रत्युत सजातीयद्वितीयरहितत्वस्यैव विशेष्यत्वात्। न हि अध्याहृतक्रियाकारकपदार्थोऽपि सः, अस्तीत्यादिक्रियापदानामेवाऽध्याहार्यतया उक्तराहित्यस्यैव तत्कारकतया प्रतीतेः। एवमत्र स्वपदेन प्रकृत्यर्थग्रहणे अग्रे स्वसमभिव्याहृतेत्यत्र स्वपदेन तस्यैव ग्रहणे तत्समभिव्याहृतत्वाप्रसिद्धिश्च, प्रकृत्यर्थस्य शब्दानात्मकत्वात्। नचाऽग्रे स्वपदेन एकवचनग्रहणसंभवः, साजात्यस्य प्रतियोग्यनुयोगिउभयवृत्तित्वनियमेन एकवचनाऽवृत्तेः। वक्ष्यमाणधर्मस्य साजात्यरूपतानुपपत्तेश्चेति चेन्न। प्रकृत्यर्थे वर्तमानमित्यध्याहृत्य प्रकृत्यर्थस्य स्वपदेनोपादानसंभवात् तस्य च वर्तमानत्वरूपक्रियाकारकत्वात्। एवं स्वसमभिव्याहृतेत्यस्य स्ववाचकपदसमभिव्याहृतेत्यर्थ इति ध्येयम्।

अथ स्वसजातीयनिष्ठभेदप्रतियोगित्वाभाव एव सजातीयद्वितीयरहितत्वमस्तु किमवच्छेदकत्वोपादानेन। ननूभयभेदमादायाऽसंभव इति वाच्यम्। भेदे प्रतियोगिताविशिष्टान्यत्वस्य निवेशनीयत्वात्। वै० स्वनिरूपकत्वस्वसामानाधिकरण्योभयसं०। उदासीनप्रतियोगितावारणाय स्वनिरूपकत्वदलम्। भेदप्रतियोगितानवच्छेदकत्वविवक्षायामपि एकत्ववद्गगनोभयभेदवारणाय तन्निवेशस्यावश्यकत्वादिति चेत्। इष्टापत्तेः। अत एवैकशब्दशक्तिविचारे स्वसजातीयनिष्ठभेदप्रतियोगित्वाभावस्यैव सजातीयद्वितीयरहितत्वरूपतोक्ता।

वस्तुतो द्व्येकयोर्द्विवचनैकवचने इति शक्तिग्राहकशास्त्रतः संख्यारूपद्वित्वसाहचर्यात्संख्यारूपमेवैकत्वम्, न तु तादृशप्रतियोगित्वाभावरूपमतोऽवच्छेदकत्वपर्यन्तानुधावनम्।

**अतएव।** विशिष्टैकत्वस्यैकवचनार्थत्वादेव। **पशुना यजेतेत्यादौ।** पशुना यजेतेतिवाक्यजन्यबोधे। एकपशुकरणको याग इष्टसाधनमिति वोधः। **तादृशैकत्वस्य।** स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपैकत्वस्य।

नादृष्टसिद्धिरिति। अनेकपशुसत्वे स्वसजातीयपश्वन्तरनिष्ठभेदप्रतियोगितावच्छेकत्वस्यैवैकत्वे सत्वादितिभावः।

ननु स्वसजातीयत्वं स्ववृत्तिधर्मवत्वम्, स च धर्मो यदि पशुत्वं तदाऽप्रसिद्धिस्तदवस्थैवेत्यत आह। साजात्यं चेति। स्वसमभिव्याहृतेति। स्वपदं स्वबोधकपदपरम्, अत्र घटोस्तीत्यादौ स्वं प्रकृत्यर्थो घटादिः तद्बोधकघटपदसमभिव्याहृतं अत्र पदम्, अस्तिपदं च, तदर्थः एतद्देशवृत्तित्वं, तत्संसर्गः-स्वरूपसंबन्धः संसर्गित्वं घटे सामानाधिकरण्यसंबन्धेन तत्संसर्गित्वविशिष्टं यत्प्रकृत्यर्थतावच्छेदकं घटत्वं तद्वत्वरूपेणेत्यर्थः। तथाचैतद्देशे एकघटसत्वे एतद्देशवृत्तित्वविशिष्टघटत्वेन रूपेण घटसजातीयः एतद्घट एव तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य तदेकत्वे सत्वात्तादृशैकत्वमेकवचनार्थः।

पशुना यजेतेत्यत्र स्वं पशुस्तत्सजातीयः स एव। तथाहि स्वं पशुस्तत्समभिव्याहृतयजधात्वर्थयागसंसर्गित्वविशिष्टपशुत्वरूपेण स्वस्यैव स्वसजातीयत्वात्, तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य पशुत्वगतैकत्वे सत्वादेकत्वमुपपन्नम्।

यद्यपि उक्तरूपेण साजात्यं यागान्तरकरणपशुसाधारणं तत्तद्यागकरणत्वं च न समभिव्याहृतपदार्थःतेनरूपेण पदादनुपस्थितेः। तथापि स्वाश्रयनिष्ठभेदप्रतियोगिपश्वकरणकत्व, स्वाश्रयपशुकरणकत्वोभयसंबन्धेनैकत्वस्य यागे अन्वया[1]न्नानुपपत्तिः।

---

१ अथात्र प्रत्ययार्थसंख्यायाः प्रकृत्यर्थेऽन्वयस्य सर्वानुभवसिद्धस्य विलयप्रसंग इति चेन्न। एकवचनस्यैकत्वत्वावच्छिन्न एव शक्तिः, परन्तु प्रकृते एकत्वस्य स्वाश्रयत्व स्वानाश्रयपशुकरणकयागकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताक-भेदवत्त्वोभयसंबन्धेन पशावेवाऽन्वयात्तादृशान्वयबोधस्यैकवचनसाकाङ्क्षत्वात्।

एवं संपन्नो व्रीहिरित्यादौ स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वस्वाश्रयाश्रयभिन्नोपयोक्तृस्वत्ववान् तद्वृत्तिसंपन्नत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसंबन्धेनैकत्वप्रकारकव्रीहिविशेष्यकबोधे एकवचनसाकाङ्क्षत्वात्।

यत्तु स्वपदार्थः स्वत्वादिरिति। तन्न, साजात्यस्य प्रतियोग्यनुयोग्युभयवृत्तित्वेनैकवचनाऽवृत्तेः, स्वसमभिव्याहृतेत्यादिधर्मस्य साजात्यानुपपत्तेश्च।

ननु संसर्गित्वं यदि संसर्गानुयोगित्वं तदा पशुना यजेतेत्यादौ पशुबोधकपदसमभिव्याहृतपदार्थो यागस्तत्संसर्गित्वं न पशौ यागनिरूपितकरणतासंसर्गित्वेन

पशोरभावात्, प्रत्युत पशुकरणकत्वस्यैव यागे भानात् । न हि तुल्यवित्तिवेद्यतया पशोरपि यागकरणतासंसर्गित्वेन भानं प्रामाणिकम्, प्रत्यक्षे एव तुल्यवित्तिवेद्यतयां भानोपगमादिति चेन्न । स्वसमभिव्याहृतपदार्थस्य संसर्गो यत्र, एवं स्वसभिव्याहृतपदार्थे संसर्गो यस्येति व्युत्पत्त्या च प्रतियोगिताऽनुयोगिताऽन्यतरसंबन्धेन तादृश संसर्गवत्वमर्थस्तथा च नानुपपत्तिरिति ध्येयम् ।

प्रकृत्यर्थतावच्छेदके तादृशसंसर्गित्ववै०सामानाधिकरण्यसंबन्धेन । तच्च तादृशसंसर्गितावन्निरूपितवृत्तितावत्त्वम् । संसर्गितावत्त्वं चात्र स्वरूपेण । वृत्तित्वं च प्रकृत्यर्थतावच्छेदकतावच्छेदकसं० । तेन कालिकेनाऽधिकरणतां वृत्तितां वाऽऽदाय नाप्रसिद्धिः ।

स्वसमभिव्याहृतत्वं च स्वविशिष्टपदत्वम् । पदे स्ववै० स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्व स्वभिन्नत्वोभयसं० । निरूपकत्वं चात्र साक्षात्परंपरासाधारणम् ।

अथ स्वसमभिव्याहृतपदार्थविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वमेवोच्यतां किं संसर्गित्व निवेशेनेति चेन्न ।

अत्र घटोस्तीत्यादौ घटपदसमभिव्याहृताऽस्त्रपदार्थेतद्देशवृत्तित्वस्य कालिकसंबन्धेन देशान्तरीयघटसाधारणतया तद्विशिष्टघटत्ववद्वृत्तिभेदप्रतियोगितानवच्छेदकैकत्वाऽप्रसिद्धितादवस्थ्यात् । न च तदुपादानेपि कालिकादिकमादाय तद्दोषतादवस्थ्यमितिवाच्यम् । संसर्गित्वस्याऽऽकाङ्क्षाप्रयोज्यसंसर्गवत्त्वार्थकत्वात् ।

अथ स्वसमभिव्याहृतयत्किंचित्पदार्थसंसर्गित्वं यदि विवक्षितम्, तदा नीलघटपीतघटोभयवति अत्र नीलघटोस्तीत्यस्याऽनुपपत्तिः, नीलघटपदसमभिव्याहृताऽस्त्रपदार्थेतद्देशवृत्तित्वसंसर्गित्वस्य पीतघटे सत्त्वात्, तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव नीलघटत्वगतैकत्वे सत्त्वात् । एवं भोजनकर्तृशयनकर्तृब्राह्मणद्वयवति अत्र ब्राह्मणोभुंक्ते इत्यस्य चानुपपत्तिः, ब्राह्मणपदसमभिव्याहृतैतद्देशवृत्तित्वसंसर्गित्वस्य शयनकर्तृब्राह्मणे सत्त्वात् । न च समभिव्याहृतयावत्पदार्थसंसर्गित्वं विवक्षणीयम्, तथा च नोक्तानुपपत्तिः, घटपदसमभिव्याहृतयावत्पदार्थान्तर्गतनीलपदार्थसंसर्गित्वस्य पीतघटेऽभावादिति वाच्यम् । यावत्त्वघटितकल्पे चत्वारः पक्षाः । तथा हि— यत्किंचित्संसर्गोग्राह्यः । स्वसमभिव्याहृतयावत्पदार्थनिरूपितयत्किंचित्संसर्गित्वविशिष्टेत्यादि । २ प्रकृतशाब्दबोधविषयो वा । तथा च स्वसमभिव्याहृतयावत्पदार्थनिरूपितप्रकृतशाब्दबोधविषयइत्यर्थः । ३ शाब्दबोधविषयो वा । तथा च स्वसमभिव्याहृतयावत्पदार्थनिरूपितशाब्दबोधविषयसंसर्गोवा इत्यर्थः । ४ शाब्दबोध-

विषयोपि साक्षात्-परंपरासाधारणोवा । नाद्यः—नीलादेरपि कालिकसंसर्गस्य पीत-घटादौ सत्वात्, तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य नीलघटस्वगतैकत्वे सत्वात् । न द्वितीयः—कालिकेन नीलरूपवति अत्र नीलो घट इत्यत्र कालिकस्यापि प्रकृत-शाब्दबोधविषयत्वात् । न तृतीयः—समभिव्याहृततत्तत्पदार्थनिष्ठविषयतानिरूपित-शाब्दबोधीयसंसर्गत्वस्य विवक्षणे च निरूपितत्वस्य साक्षात्प्रवेशे नीलघटेपि-यावत्पदार्थान्तर्गत"अत्रेति पदघटकेदमर्थस्य एतद्देशस्य अलर्थवृत्तित्वे निरूपितत्व-संसर्गेण प्रकारतया इदमर्थैतद्देशनिष्ठविषयतासाक्षान्निरूपितसंसर्गतावन्निरूपितत्वा-नुयोगित्वाभावेन सजातीयाऽप्रसिद्धेः । ४ साक्षात्परंपरासाधारणनिरूपितत्वप्रवेशे च कालिकस्याप्युक्तस्थले संग्रहप्रसंगात्, पीतघटस्यापि यावत्पदार्थसंसर्गित्वात्तथा तद-नुपपत्तेश्च एवं ब्राह्मणो ब्राह्मणाय गां ददातीत्यत्र कर्तुर्ब्राह्मणस्य संप्रदानीभूतब्राह्मणस्य चैकत्वानुपपत्तिः, समभिव्याहृतपदार्थदानक्रियाया द्वयोरेव संबद्धत्वादिति चेद् ।

एकवचनविशिष्टैकत्वमेकवचनार्थः । वै० स्वविशिष्टनिष्ठभेदप्रतियोगितान-वच्छेदकत्वसंब० वै० स्वप्रकृत्यर्थतावच्छेदकवत्त्वस्वविशिष्टसंसर्गतानिरूपकत्वोभयसं० संसर्गतानिरूपकत्वं च प्रतियोगितानुयोगिताऽन्यतरसंबन्धेन संसर्गतावत्वम् । स्वं-एकवचनम् । संसर्गतायां स्ववै० स्वप्रयोज्यशाब्दबोधविषयतासामानाधिकरण्य-स्वप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रत्ययप्रयोज्यशाब्दबोधीयविषयतासा-मानाधिकरण्यान्यतरसं० ।

अत्र घटोस्तीत्यादौ स्वपदग्राह्यघटपदोत्तरसुविभक्तिविशिष्टोघटः—घटे सुविभ-क्तिप्रकृत्यर्थतावच्छेदकवत्वं-सुविभक्तिविशिष्टैतद्देशवृत्तित्वरूपसंसर्गताऽनुयोगित्वमपि । आधेयत्वसंसर्गतायां सुविभक्तिवैशिष्ट्यमपि सुप्रकृत्यर्थघटनिष्ठविशेष्यतानिरूपितप्रका-रताप्रयोजकत्वप्रत्ययप्रयोज्यशाब्दबोधीयविषयतासामानाधिकरण्यसत्वात् ।

नीलघटपीतघटोभयवति अत्र नीलोघटइतिवाक्यजन्यबोधे एतद्देशवृत्तित्वं नील घटे एव भासते न तु पीतघटे, स्वसमानाधिकरणत्वप्रत्ययशाब्दबोधीयवृत्तित्वविषय-तासामानाधिकरण्यं तादृशवृत्तित्वनिष्ठसंसर्गत्वे एव न तु पीतघटनिष्ठवृत्तित्वसंसर्गत्वे इति नैकबोधानुपपत्तिः ।

भोजनकर्तृ-शयनकर्तृब्राह्मणद्वयवति ब्राह्मणोभुङ्क्ते इत्यादौ भोजनकर्तृत्वमेव शाब्दबोधविषयो न तु शयनकर्तृत्वं, तादृशशाब्दबोधविषयतासामानाधिकरण्यं कृतिनिष्ठ-संसर्गतायां तन्निरूपकतद्ब्राह्मणवृत्तिभेदप्रतियोगितानवच्छेदकत्वस्य तद्ब्राह्मण-गतैकत्वे सत्वान्नानुपपत्तिः ।

अथ स्वप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धोपादानं किमर्थमितिचेद्—भूतले घट

इत्यत्र भूतलपदोत्तरसप्तम्या एकत्ववाचकत्वरक्षायै । अन्यथा स्वपदग्राह्यभूतलपदोत्तर-ङिविभक्तिविशिष्टाऽऽधेयतारूपसंसर्गतानिरूपकघटवृत्तिभेदप्रतियोगितावच्छेदकत्वस्यैव भूतलवृत्तिएकत्वे सत्वात् । आधेयत्वनिष्ठसंसर्गतायां ङिविभक्तिवैशिष्ट्यमपि स्वपदग्राह्यैकवचनप्रयोज्यशाब्दबोधीयाऽऽधेयनिष्ठविषयतासामानाधिकरण्यस्य संसर्गतायां सत्वात् । न चाऽऽधेयत्वनिष्ठसंसर्गतानिरूपकत्वं भूतले एव न घटे इति वाच्यम् । निरूपकत्वस्य प्रतियोगितानुयोगितान्यतररूपत्वात् । प्रकृत्यर्थतावच्छेदकवत्त्वोपादाने तु स्वप्रकृत्यर्थतावच्छेदकवत्त्वस्य घटे विरहान्न दोषः ।

स्वसमानाधिरणप्रत्ययप्रयोज्यशाब्दबोधीयविषयतासामानाधिकरण्यमात्रोक्तौ फलं-भुंक्ते इत्यत्र द्वितीयार्थैकत्वबोधानुपपत्तिः । तथाहि स्वमेकवचनं "अम" प्रत्ययः तत्स-मानाधिकरणः "तद्घटितवाक्यघटकः" "ते" प्रत्ययः, तत्प्रयोज्यकृतिनिष्ठविषयता-सामानाधिकरण्यस्य कृतिनिष्ठसंसर्गतायां सत्वात् । स्वप्रयोज्यशाब्दबोधविषयता-सामानाधिकरण्योपादाने तु नानुपपत्तिः, स्वपदग्राह्यैकवचनप्रयोज्यशाब्दबोधीयकर्मत्व-विषयतासामानाधिकरण्यस्य कर्मत्वनिष्ठसंसर्गत्वे सत्वात्तन्निरूपकफलनिष्ठभेदप्रति-योगितानवच्छेदकत्वस्य फलगतैकत्वे सत्वादिति । स्वसमानाधिकरणप्रत्ययार्थनिष्ठ-त्वोपादानेपि कर्तृत्वत्वेन शयनकर्तृत्वस्यापि आख्यातार्थतया शयनानुकूलकृतिनिष्ठ-संसर्गताया अपि संग्रहः स्यादतः प्रत्ययप्रयोज्यशाब्दबोधीयविषयतासामानाधिकरण्य-मुपात्तम् ।

अथ स्वघटितवाक्यघटकत्वेनैव निवेशोस्तु किं सामानाधिकरण्यनिवेशेनेति चेन्न । सुप्तब्राह्मणे अत्र ब्राह्मणोभुङ्क्ते इत्यादौ स्वघटितवाक्यघटकप्रत्ययप्रयोज्यत्वस्य शयनकर्तृत्वेपि सत्वेन एकत्वबोधानुपपत्तिरतः स्वसामानाधिकरण्योपादानम् । तत्वं च स्वप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमित्युक्तं प्राक् ।

स्वप्रयोज्यशाब्दबोधीयविषयतासामानाधिकरण्यमात्रोक्तौ अत्र घटोस्तीत्यादौ प्रथमाया एकत्ववाचकत्वानुपपत्तिः । स्वं एकवचनं सुविभक्तिः तत्प्रयोज्यशाब्दबोधीय विषयता एकत्वनिष्ठा तादृशविषयतासामानाधिकरण्यं एकत्वनिष्ठसंसर्गतायां तन्नि-रूपकत्वस्य प्रकृत्यर्थतावच्छेदकीभूतघटत्वस्य च देशान्तरीयघटेपि सत्वेन तद्वृत्ति-भेदप्रतियोगितावच्छेदकत्वस्यैव एतद्देशवृत्तिघटगतैकत्वे सत्वात् । स्वसमाना-धिकरणप्रत्ययप्रयोज्यशाब्दबोधीयविषयतासामानाधिकरण्योपादाने तु स्वमेकवचनं सुप्रत्ययः तत्समानाधिकरणस्त्रल्प्रत्ययः तत्प्रयोज्यशाब्दबोधीयविषयता वृत्तित्वनिष्ठा तत्सामानाधिकरण्यं वृत्तित्वसंसर्गतायां तन्निरूपकतद्घटवृत्तिभेदप्रतियोगितानवच्छे-दकत्वस्य तद्घटगतैकत्वे सत्वान्नानुपपत्तिः ।

अतोऽत्रघटोस्तीत्यादौ घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वाऽप्रसिद्धावपि न क्षतिः। एतद्देशविद्यमानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्य तत्र बोधात्। तस्य च प्रसिद्धत्वात्। एतद्देशे बहुघटसत्वदशायां तादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः।

यत्तु एकत्वाऽविवक्षायामपि भावाख्यातस्थले एकवचनस्य साधुत्वदर्शनात् संख्याया अविवक्षणेपि संपन्नो व्रीहिरित्यादौ एकवचनोपपत्तेरलं जात्येकत्वपरतया तत्र समर्थनेनेति।

---

अतः। ईदृशसाजात्यविवक्षणात्। तत्र। घटोस्तीत्यादौ। तस्य चेति। एतद्देशवृत्तित्वविशिष्टसंसर्गित्वविशिष्टघटत्ववद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वस्य चेत्यर्थः। प्रसिद्धत्वात्। एतद्घटगतैकत्वे प्रसिद्धत्वात्। ननु एतद्देशेवहुघटसत्वकाले "अत्रघटोस्तीत्यस्य का गतिः, घटसजातीयैतद्देशवृत्तिघटान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वस्यैवैतद्घटवृत्तिएकत्वे सत्वादित्यत आह। एतद्देशे इति। तादृशवाक्यप्रयागस्तुइति। अत्र घटोस्तीतिवाक्यप्रयोगस्तु इत्यर्थः। जात्येकत्वादेवेति। जातावेकत्वान्वयादेवेत्यर्थः। एवकारेण व्यक्तौ एकत्वान्वयव्यवच्छेदः।

अत्रेदं बोध्यम्। यत्र परंपरया स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसंबन्धेन प्रकृत्यर्थे एकत्वान्वयः तत्र स्वसमभिव्याहृतपदार्थसंसर्गित्वरूपेणैव साजात्यं विवक्षणीयम्, न तु प्रकृत्यर्थतावच्छेदकवत्वस्यापि प्रवेशः। (परंपरायांतस्याऽप्रवेशात्)। यत्र "एकघटसत्वे घटोस्तीत्यादौ" साक्षात्संवन्धेन प्रकृत्यर्थे एकत्वान्वयः तत्र ग्रन्थकृदुक्तरूपेण तथा।

एतेन संपन्नोव्रीहिरित्यत्र एकत्वविवक्षायाः किं फलम्, न तावद् यवव्रीह्युभयसंपन्नदशायां, संपन्नौ व्रीहियवौ इत्येव साधुः, न तु संपन्नोव्रीहिरित्यपि साधुरिति वक्तुं शक्यते, प्रकृत्यर्थतावच्छेदकव्रीहित्वस्य यवादावसत्वात्, यवसंपत्तिदशायामपि स्वसजातीयनिष्ठभेदप्रयोगितानवच्छेदकैकत्वस्य स्वाश्रयव्रीहित्ववत्वसंबन्धेन प्रकृत्यर्थेव्रीहौ सत्वात्प्रयोगप्रामाण्यस्याऽवारणादितिनिरस्तम्। व्रीहियवसंपत्तिदशायां संपन्नोव्रीहिरित्यत्र समभिव्याहृतपदार्थःसंपन्नः तत्प्रयोगिकतादात्म्यसंसर्गित्वविशिष्टयववृत्तिभेदप्रतियोगितावच्छेदकत्वस्य व्रीहित्वगतैकत्वे सत्वेनानवच्छेदकत्वाऽप्रसिद्ध्याऽप्रामाण्यमुपपद्यते। केवलवीहिसंपन्नदशायां तु साजात्यं व्रीहावेव, तन्निष्ठभेदप्रतियोगिरानवच्छेदकत्वस्य-

तदप्यकिंचित्करम् । भावाख्यातस्थले गत्यन्तरविरहेण विभक्ते-र्निरर्थकत्वोपगमात् । तत्र च सार्थकत्वसंभवे तत्परित्यागस्याऽनुचितत्वात्, सति तात्पर्ये तद्बोधस्याऽऽनुभविकत्वाच्चेति ।

एवं त्रयः समुदिता हेतुरित्यत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदक-समुदायत्वावच्छिन्नपरम्, तादृशसमुदायत्वान्विमेकत्वमेकवचनार्थः ।

अत एव शक्त्यादीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्का-निरासः । तथासत्येतेषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यक-तया तत्त्रितयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वानुपपत्तेः ।

---

व्रीहित्वगतैकत्वे सत्वेन प्रामाण्यमुपपद्यते । तथा च यवसंपत्तिनिरासार्थमेक-वचनप्रयोग इति ध्येयम् ।

कस्यचिन्मतमाह । यत्त्विति । भावाख्यातस्थले कर्तृकर्मकारकाणां तिङ्-वाच्यत्वाभावाद् भावाख्यातप्रयोगस्य न संभवः, युष्मत्पदार्थवृत्तियुष्मत्त्वे— एवमस्मत्पदवाच्यवृत्तिअस्मत्त्वे वा तिङर्थसंख्यासमानाधिकरणे सति मध्य-मोत्तमपुरुषौ स्तः । एवं युष्मत्त्वाऽस्मत्त्वाऽसमानाधिकरणे कर्तृत्वे तिङर्थ-संख्यासमानाधिकरणे सति प्रथमपुरुषो भवतीत्यभियुक्तोक्तेः ।'

यद्यपि वर्तमानत्वाद्यर्थकतया भावाख्यातप्रयोग आवश्यकस्तथापि यं यं भावनान्वेति तं तं संख्यानुधावतीत्याचार्योक्त्या भावनान्वयिनं संख्यान्वयनियमेनाऽत्र भावनान्वयविरहेण संख्यान्वयविरहादित्याह । एकत्वा-विवक्षायामपीति । इदं तु बोध्यम् । चैत्रेण गम्यते ग्राम इत्यत्र चैत्रे आख्यातार्थसंख्यान्वयवारणाय विशेष्यतासंबन्धेनाऽऽख्यातार्थसंख्याप्रकारक-शाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितेः कारणता वाच्या । न च चैत्रे संख्यान्वये का क्षतिः । तथा सति चैत्रेण ग्रामौ गम्येते इति प्रयोगा-नुपपत्तिः, एकत्वावरुद्धे कर्तरि आख्यातार्थद्वित्वान्वयाऽसंभवात् । कर्तृगत-संख्याभिधाने तृतीयानुपपत्तेश्च । इत्थं च चैत्रेण स्थीयते इत्यत्र भावाख्यात-स्थले आख्यातार्थभावनाया अन्वयो न संभवति, प्रथमान्तपदजन्योपस्थितेर-भावात् । न च भावाख्यातस्य सार्थकत्वाय कार्यतावच्छेदककोटौ आख्याते भावाख्यातभिन्नत्वं निवेशनीयम्, एवं च चैत्रे आख्यातार्थैकत्वाऽन्वये-बाधकाभाव इति वाच्यम् । चैत्रमैत्राभ्यां स्थीयते इत्यादौ द्वित्वावरुद्धयोश्चैत्र-मैत्रयोरेकत्वाऽन्वयाऽसंभवात्, तृतीयानुपपत्तेश्चेति । नापि धात्वर्थे ।

धात्वर्थे संख्यान्वये आख्यातस्य निराकाङ्क्षत्वात्, तच्चानुपदमेव स्फुटीभविष्यति। एवंचाऽन्यत्राऽऽख्यातस्यसंख्यावाचकत्वेपि यथा भावाख्यातस्थले आख्यातस्य न संख्यावाचकत्वविवक्षा तथासुविभक्तेरेकत्ववाचकत्वेपि संपन्नोव्रीहिरित्यादौ नैकत्वविवक्षा इत्याशयेनाह। **संख्याया अविवक्षणेपीति**। **जात्येकत्वपरतया**। जातावेकत्वान्वयपरतया। **तत्र**। संपन्नोव्रीहिरित्यादौ। **समर्थनेन**। एकत्वसमर्थनेन। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभंगापत्तेरिति भावः।

तन्मतं निरस्यति। **तदप्यकिञ्चित्करमिति**। **गत्यन्तरविरहेणेति**। उक्तरीत्याअविवक्षातिरिक्तगतिविरहेणेत्यर्थः। **निरर्थकत्वोपगमादिति**। न च कालबोधकत्वात्कथं निरर्थकत्वमिति वाच्यम्। संख्याविषयकबोधजनकत्वप्रकारकेच्छाविशेष्यत्वाभावोपगमादिति तदर्थात्। भावाख्यातस्थले स्थीयते इत्यादौ धात्वर्थे स्थितावेवैकत्वाऽन्वयोवाच्यः, तच्चैकत्वं स्थितित्वव्याप्यानांद्विकर्तृकस्थितित्व बहुकर्तृकस्थितित्वानां व्यावृत्त्यर्थमेव वाच्यम्, व्यावृत्तिश्च न संभवति व्यावर्त्त्यानामनवगमादितिएकत्वविशेषणं व्यर्थमतोभावाख्यातस्य संख्याऽर्थोनास्ति। स्थीयते इत्येतावन्मात्रं शृण्वतः कतिपयैः स्थीयते इति प्रश्नाऽसंगतिश्च। तथाहि—स्थीयते इत्यत्राऽऽख्यातार्थैकत्वस्य धात्वर्थस्थितौ अन्वयाङ्गीकारे एका स्थितिरित्यन्वय बोधोवाच्यः, तत्रैकस्यां स्थितौ "कतिपयैरितिजिज्ञासाविषयीभूत" बहुनिष्ठकृतिजन्यत्वं बाधितम्। एवं स्थितौ द्वित्वबहुत्वयोरपि संभवात् स्थीयेते स्थीयन्ते इतिप्रयोगापत्तिरपि द्रष्टव्या। तस्मादाख्यातार्थसंख्यानन्वयेन स्थितिरूपधात्वर्थे तृतीयान्तोपस्थाप्यकर्तुः "तृतीयार्थकृतिद्वारा" संख्याया अन्वयाऽभ्युपगमादुक्तप्रश्नसंगतिर्बोध्या।

**तत्रचेति**। संपन्नोव्रीहिरित्यादौ तु इत्यर्थः। **सार्थकत्वसंभवे**। संख्याविषयकबोधजकत्वप्रकारकेच्छीयविशेष्यत्वोपगमसंभवे। भावाख्यातस्थलवदत्राऽविवक्षाकारणं नास्ति, द्वयंहिअविवक्षाहेतुः विवक्षणीयस्याऽसंभवनिश्चयः तत्प्रयोजनत्वाऽप्रतिसन्धानं च। अत्र नैकस्याप्यवसर इति तत्त्वम्।

**तत्परित्यागस्य**। सार्थकत्वपरित्यागस्य। अथ संपन्नव्रीहिमात्रबुबोधयिषया प्रयुक्ते "संपन्नोव्रीहिरितिवाक्ये न केवलंप्रत्ययःप्रयोक्तव्यः नापिकेवलंप्रकृतिः" इतिन्यायेनापि प्रत्ययः प्रयोक्तव्यः, परन्तुविभक्त्यर्थस्याऽबुबोधयिषिततया यस्मिन् कस्मिंश्चित्प्रयोक्तव्ये औत्सर्गिकमेकवचनं प्रयुज्यते तथा च नैकदेशान्वयनियमभङ्गोपि एवं चैकत्वस्याऽविवक्षितत्वं दुर्वारमित्यत आह। **सति तात्पर्ये**

इति। अत्र सुपदमेकत्वं बोधयतु इति तात्पर्यमित्यर्थः। **तद्बोधस्य**। संख्याबोधस्य। **आनुभविकत्वाच्चेति**। एकत्ववद्व्रीहित्वावच्छिन्नःसर्वोपिव्रीहिःसंपन्नइतिबोधस्यानुभवसिद्धत्वाच्चेत्यर्थः।

ननु असतिविशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमितिनियमस्य समानलिङ्गकस्थले एवाभ्युपगमेन वेदाःप्रमाणमित्यस्य साधुत्वोपपादनेपि त्रयःसमुदिताहेतुरितिकाव्यप्रकाशव्याख्यायाअसंगतिदुर्वारैवेत्यत आह। **एवमिति**। अत्र त्रय इति पदं विशेष्यवाचकम्। तदुत्तरजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्याविरुद्धैकत्वसंख्याहेतुपदोत्तरसुविभक्त्या विवक्षितत्वादेवाऽसमानवचनकत्वोपपत्तिः। **कार्योत्पादप्रयोजकतावच्छेदकेति**। **कार्यं**—कवित्वं—**तस्योत्पादः**—उत्पत्तिः—**तत्प्रयोजकता**—शक्तिनिपुणताऽभ्यासानां—तदवच्छेदकेत्यर्थः। **तादृशेति**। कवित्वोत्पत्तिप्रयोजकतावच्छेदकेत्यर्थः कवित्वोत्पत्तिप्रयोजकतावच्छेदकीभूतं यच्छक्तिनिपुणताभ्यासगतसमुदायत्वं तदन्वितमितिभावः। **एकवचनार्थ इति**। तथाचैकत्वविशिष्टं यत्कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वं तादृशसमुदायत्ववदभिन्नास्त्रय इति बोधः।

अथ हेतुपदस्य कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्ने लक्षणा व्यर्था, तादृशसमुदायत्वे एकत्वान्वयश्च व्यर्थः, हेतुत्वे एवैकत्वान्वयसंभवात्। न च हेतुतावच्छेदकं शक्तित्वं निपुणतात्वं अभ्यासत्वं चेति त्रयम्। एवं च हेतुतावच्छेदकभेदाद्धेतुत्वं भिन्नमेवेति न तत्रैकत्वान्वयसंभव इति वाच्यम्। उक्तत्रयाणां समुदायत्वेनैकहेतुत्वस्य संभवात्। अन्यथा समुदिता इत्यस्य वैयर्थ्यापत्तेः। तथा च समुदायत्वरूपैकधर्मावच्छिन्नहेतुताया आश्रयभेदेप्यभिन्नत्वात्। इत्थमेवैकैकस्मात्कार्योत्पत्तिव्यतिरेकलाभेनैकत्वविवक्षाया नानर्थक्यमितिचेन्न। समुदायत्वस्यैकविशिष्टापरत्वरूपतया विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरानेककारणत्वापेक्षया शक्तित्वेन निपुणतात्वेनाऽभ्यासत्वेन च पृथक्पृथगेव कारणत्वात्। नचैवमेकैकशः कार्योत्पादप्रसङ्गः। घटं प्रति दण्डचक्रादेः परस्परसहकारित्वस्येव शक्त्यादेः परस्परसहकारित्वोपगमात्। न च समुदिताइत्यस्य वैयर्थ्यम्। हेतुपदस्य तादृशसमुदायत्वावच्छिन्ने तात्पर्यग्राहकत्वात्। तथाचैकसमुदायत्वाश्रयाणामेव शक्त्यादित्रयाणां हेतुत्वमितिबोधनमेवैकत्वविवक्षायाःफलमितिध्येयम्।

**अतएवेति**। शक्त्यादित्रयाणां परस्परसहकारित्वेन त्रितयपर्याप्तसमुदायत्वस्य प्रयोजकतावच्छेदकत्वादेवेत्यर्थः। **तृणारणिमणिन्यायेनेति**। तृणारणिमणीनधिकृत्य प्रवृत्तो न्यायः। न्यायश्चात्र परस्परनैरपेक्ष्येण प्रत्येकधर्म-

पुरस्कारेण कारणत्वसाधिका युक्तिः, तयेत्यर्थः। प्रयोज्यत्वं तृतीयार्थः। तस्य-हेतुत्वेऽन्वयः। तथाचोक्तयुक्तिप्रयोज्यं यद्धेतुत्वं तच्छङ्कानिरास इति भावः। **तथासति**। तृणारणिमणिन्यायेन शक्त्यादीनां कारणत्वे सति। **एषां**। शक्ति-निपुणताऽभ्यासानां। **एकैकसमवधानदशायां**। एषां मध्ये एकैकसत्वकाले। **कार्योत्पत्तेरावश्यकतया**। काव्योत्पत्तेरावश्यकतया। तथा च शक्तित्वादिक-मेव कार्योत्पादप्रयोजकततावच्छेदकं स्यादिति भावः। **प्रयोजकतानवच्छेद-कतयेति**। प्रयोजकतातिप्रसक्तत्वादिति भावः। **तेषां त्रयाणां**। शक्त्यादीनां-त्रयाणां। **तथाविधेति**। कार्योत्पादप्रयोजकतावच्छेदकेत्यर्थः। **एकसमुदाय-त्वाश्रयत्वानुपपत्तेरिति**। तथा च शक्तित्वादीनां प्रत्येकस्य हेतुतावच्छेदकत्वे हेतुतावच्छेदकभेदेन हेतुताया अपि भिन्नत्वात्तत्रस्वर्थैकत्वस्यान्वयासंभवाद-विवादात्तत्वेन "त्रयः समुदिताहेतुरित्यत्राऽसमानवचनकत्वानुपपत्तेरिति भावः।

विशेष्यविशेषणवाचकपदयोः समानलिङ्गकत्वेपि न समानवचनकत्वमुक्त-नियमानाक्रान्तत्वादित्याह। **एवमिति**। **त्रितयनिष्ठस्य**। जात्याकृतिव्यक्ति-निष्ठस्य। **तत्र**। जात्याकृतिव्यक्तयःपदार्थ इत्यत्र। **विशेष्यपदस्य**। विशेष्य-वाचकजात्यकृतिव्यक्तिपदस्य। **विशेषणपदस्य**। विशेषणवाचकपदार्थपदस्य। **एकवचनान्ततोपपत्तिरिति**। उक्तनियमानाक्रान्तत्वादितिभावः। तथाचात्र-विशेष्यवाचकं जात्याकृतिव्यक्तिपदं एवं जात्याकृतिव्यक्तयइत्यत्र त्रितयंनिष्ठस्य पदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तत्र विशेष्यपदस्य बहुवचना-न्तत्वेपि विशेषणपदस्यैकवचनान्ततोपपत्तिः। तदुत्तरजसविभक्तितात्पर्यविषय-बहुत्वसंख्याविरुद्धैकत्वसंख्या विशेषणवाचकपदार्थपदोत्तरसुविभक्त्याविवक्षि-तैवेति न विशेष्यविशेषणवाचकपदयोःसमानवचनकत्वम्। तथा च एकत्वविशिष्टं यत्पदशक्तिरूपपदार्थत्वं तद्वदभिन्नाः जात्याकृतिव्यक्तय' इति बोधः।

---

१ घटत्वजातौ समवाये घटव्यक्तौ च घटपदनिरूपिता एकैवशक्तिः, तत्रैवै-कत्वान्वयः तथा च पदार्थेषु एकत्वबाधेपि न क्षतिः। अथेश्वरेच्छारूपायाः शक्तेः सकलपदार्थविषयिण्याः समूहालंबनरूपायाः एकत्वेन तत्र एकत्वान्वयसंभवेपि जात्याकृतिव्यक्तयः पदार्थ इतिवत्, घटपटमठाः पदार्थ इत्यपि स्यात्, एवं पद-शक्तिरित्यस्य पदनिरूपिता पदनिष्ठावा शक्तिरित्यर्थद्वयस्यापि न संभवः, ईश्वरेच्छा-रूपायाः शक्तेः पदनिरूपितत्वाभावात्, पदनिष्ठत्वाभावाच्च। ईश्वरेच्छीय-विषयतायाः शक्तिरूपत्वे जात्याकृतिव्यक्तयः पदार्थ इत्यपि न स्यात्, तस्याः

एवं पितरोदेवताः इत्यत्रापि पितृपितामहत्वादिना पृथगेव त्यागोद्देश्यत्वरूपदेवतात्वम्। उद्देश्यतावच्छेदकभेदेनैवोद्देश्यताभेदात्, तत्रैकत्वस्याऽविवक्षया देवतापदस्य बहुवचनान्तेति दिक्।

---

पदार्थतत्त्वावच्छेदकादिभेदेन भिन्नत्वादिति चेन्न। पदजन्यबोधीयविषयतायाः शक्तिपदार्थत्वात्। तद्वत्ता च स्वनिष्ठाऽऽश्रयत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्व-स्वनिष्ठाऽवच्छेदकत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्व-स्वनिष्ठाऽवच्छेदकतावच्छेदकत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वान्यतमसं०। शक्तेरैक्यप्रवादस्तु तादृशविषयतानिरूपकबोधनिष्ठविषयताया ऐक्यादिति ध्येयम्।

अथवा पदजन्यबोधविषयत्वप्रकारता शक्तिः। तन्नियामकसंबन्धश्च स्वनिरूपितविशेष्यत्व स्वावच्छेद्य"विशेष्यता"निरूपिताऽवच्छेद्यत्वनिष्ठविषयतानिरूपिताऽवच्छेदकत्वनिष्ठविषयतावत्त्वान्यतरसं०। "पदजन्यबोधविषयत्वनिष्ठयोः प्रकारता" घटत्वावच्छिन्नत्वप्रकारतानिरूपितविशेष्यतयोरवच्छेद्यावच्छेदकभावात्। एकज्ञानीयसमानाधिकरणविषयतयोरिवैकेच्छीयसमानाधिकरणविषयतयोरप्यवच्छेद्यावच्छेदकभावात्"। विषयतावत्त्वं च स्वनिरूपिताऽऽधेयत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितसंसर्गत्वनिष्ठविषयतानिरूपितविषयतावत्त्वान्यतरसं०। स्वं प्रकारता आश्रयतासंबन्धावच्छिन्नतन्निरूपितविशेष्यत्वं घटे। स्वं प्रकारता तदवच्छेद्या या विशेष्यता तन्निरूपितावच्छेद्यत्वनिष्ठविषयतानिरूपिताऽवच्छेदकत्वनिष्ठविषयतावत्त्वस्य स्वनिरूपिताऽऽधेयतासंबन्धावच्छिन्नावच्छेदकतावत्त्वरूपाऽऽद्यसंबन्धेन घटत्वे, स्वनिरूपितसंसर्गत्वनिष्ठविषयतानिरूपितविषयतावत्त्वरूपद्वितीयसंबन्धेन समवाये च सत्त्वम्। घटो घटपदजन्यबोधविषयोभवतु इतीच्छायां घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां बोधविषयत्वांशे समवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वस्य भानादिति। तथा चेश्वरेच्छीयपदजन्यबोधविषयत्वनिष्ठप्रकारताया ऐक्यात्तत्रैवैकत्वान्वयः। इत्थं च एकत्वविशिष्टप्रकारतावदभिन्नाः जात्याकृतिव्यक्तय इति बोधः।

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि पितरोदेवताः इत्यादौ उक्तां प्रमाणपद-देवतापदोत्तर बहुवचनानुपपत्तिं समाधत्ते। प्रत्यक्षानुमानादिसूत्रेइति। अत्र विशेष्यवाचकं प्रत्यक्षानुमानोपमानशब्दपदं पितृपदं च तदुत्तरजसविभक्तितात्पर्यविषयबहुत्वसंख्याविरुद्धसंख्यायाः प्रमाण देवतापदोत्तरजसविभक्त्या अविवक्षितत्वात्समानवचनकत्वोपपत्तिः।

अथ पूर्वोक्तरीत्या एकत्वसंख्या कथं न विवक्षिता, तस्याश्च प्रकृत्यर्थतावच्छेदकी-

**स्वप्रकृतिकत्वं च स्वाव्यवहितोत्तरत्वेनाऽनुसन्धीयमानत्वम्। तेन दधि सुन्दरमित्यादौ विशेष्यपदानन्तरं विभक्तेरसत्वेपि न क्षतिः। एवं तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यव्यवहितपूर्ववर्त्तितया प्रतिसंधीयमानत्वम्, तेनेदं दधीत्यादौ विशेषणपदानन्तरं विभक्तेरसत्वेपि न क्षतिः।**

---

अथ प्रमात्वन्यूनवृत्तिवर्मावच्छिन्नकारणत्वं प्रमाणत्वं, प्रमात्वं च प्रमाइत्यनुगतप्रतीतिसिद्धम् तत्रैवैकत्वान्वयाय विभक्त्यर्थैकत्वविवक्षास्तु इति चेन्न। प्रमात्वे एकत्वबोधं प्रति प्रमाणमित्वस्यनिराकांक्षत्वात्, प्रवृत्तिनिमित्ततदाश्रयान्यरस्मिन्नेकत्वप्रकारकबोधंप्रत्येव प्रकृतिप्रत्ययानुपूर्वीरूपाऽऽकाङ्क्षात्वाभ्युपगमात्।

**तत्र**। देवतात्वे। **वहुवचनान्ततेति**। तथा च पितृपितामहादौ त्यागोद्देश्यत्वरूपदेवतात्वं भिन्नमेव, पितृत्वपितामहत्वादिरूपोद्देश्यतावच्छेदकभेदेनोद्देश्यताभेदाद्देवतात्वे एकत्वान्वयस्य वाधितत्वाद् वहुवचनमिति भावः।

**स्वप्रकृतिकत्वंचेति**। स्वप्रकृतिकविभक्तिसजातीयेत्यत्र स्वप्रकृतिकत्वं चेत्यर्थः। **तादृशेति**। स्वप्रकृतिकेत्यर्थः। **तथाविधेति**। विशेष्यवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्तिसजातीयेत्यर्थः। **न क्षतिः**। न समानवचनकत्वानुपपत्तिः। तथा च स्वप्रकृतिकत्व न स्वाव्यवहितोत्तरत्वम्। तादृशविभक्तिकत्वमपि न तादृशविभक्त्यव्यवहितपूर्वत्वमितिभावः।

**अथेति**। **पदार्थोपस्थित्यादीति**। नीलपदजन्यनीलोपस्थिति घटपदन्यघटोपस्थित्यादीत्यर्थः। आदिना अभेदसंसर्गक नीलप्रकारकघटविशेष्यकयोग्यताज्ञानपरिग्रहः।

**अभेदाऽन्वयबोधइति**। अभेदसंवन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिवोधः। कथं न जायते इति भावः।

---

**भूतप्रमाणत्वेऽन्वयोस्तु इत्यत आह। प्रकृत्यर्थतावच्छेदकस्येति। एकताया-बाधितत्वेनेति। प्रत्यक्षादिचतुर्णां प्रमाणानां यदि चतुष्टे नैकरूपेण प्रमाकरणत्वं स्यात्तदा एकैकस्मात्कार्यानुत्पादप्रसंगात्। यदिचाऽन्यतमत्वेन तेषां कारणत्वं तदा प्रत्यक्षादनुमितिःस्यात्, अतः प्रत्यक्षादिप्रमांप्रति प्रत्यक्षत्वादिना पृथक् पृथगेव कारणता वाच्या, तथाचाऽवच्छेदकभेदात्कारणताया भिन्नत्वात्प्रमाणत्वे नैकत्वान्वयः संभवति बाधित्वादिति भावः।**

**अथ नीलस्य घट इत्यादावपि पदार्थोपस्थित्यादिकारणसमवधान-संभवात्कथं न नीलघटाद्योरभेदान्वयबोधः, सामग्र्याः कार्यजनने उक्तनियमभङ्गप्रसंगरूपबाधकस्याऽकिंचित्करत्वादिति चेत्। तथाविधा-न्वयबोधौपयिकाकाङ्क्षाविरहात् तथा हि तादृशाऽन्वयबोधे प्रथमा-विभक्त्यन्तघटादिपदसमभिव्याहृतप्रथमान्तनीलादिपदत्वमेवाऽसमस्तनी-लघटपदाद्याकाङ्क्षा।**

---

**सामग्र्या कार्यजनने।** उपस्थितियोग्यताज्ञानादिना शाब्दबोधजनने। **उक्तनियमभङ्गेति।** स्वसमानविभक्तिकेनस्वाव्यहितपूर्ववर्त्तिना च पदेनोपस्था-पितस्यैवाऽभेदान्वयबोध इति नियमभङ्गेत्यर्थः। **अकिञ्चित्करत्वादिति।** अप्रतिबन्धकत्वादित्यर्थः, फलानुसारित्वात्कल्पनाया इति भावः। समाधत्ते **तथाविधान्वयबोधोपयिकेति।** अभेदसंसर्गकनीलप्रकारकघटविशेष्यकान्वय-बोधजनकेत्यर्थः। **आकाङ्क्षाविरहादिति।** विशेष्यविशेषणवाचकपदयोः समानविभक्तिकत्वरूपाऽऽकाङ्क्षाविरहादिति भावः। आकाङ्क्षां दर्शयति। **तथाहीत्यादिना। तादृशान्वयबोधे।** अभेदसंसर्गकनीलप्रकारकघटविशेष्यक-बोधे। **प्रथमाविभक्त्यन्तेति।** इदमुपलक्षणम्। सुविभक्त्यन्तघटादिपद-समभिव्याहृतस्वन्तनीलादिपदत्वं बोध्यम् एवमाबन्तघटपदसमभिव्याहृतेत्या-दिक्रमेणैकविंशतिआकाङ्क्षाबोध्या। विनिगमनाविरहेण स्वन्तनीलपदसम-भिव्याहृतेत्यादिक्रमेण एकविंशति आकाङ्क्षा अथापिबोध्या। एवं रीत्या-व्यासस्थले द्वाचत्वारिंशदाकाङ्क्षा भवन्ति।

**अत्रेदंबोध्यम्।** अत्र प्रथमान्तत्वेन न प्रवेशः, प्रथमात्वाऽज्ञानेपि शाब्द-बोधोदयात्। नापि सुत्वादिना, घट इत्यानुपूर्वीमात्रज्ञानेपि शाब्दबोधोदयात्। किन्तु नीलइत्यानुपूर्वीविशिष्टस्य घटइत्यानुपूर्वीविशिष्टस्य च समभिव्याहार-रूपाऽऽकाङ्क्षाज्ञानं कारणम्। एवं नीलौ घटौ नीलाः घटा इत्यादावपि बोध्यम्। समभिव्याहारश्च पदविशिष्टपदत्वम्। वै० समासस्थले च घटपदाद्य-व्यवहितपूर्वर्त्तिनीलादिपदत्वं, नीलादिपदाऽव्यवहितोत्तरवर्त्तिघटादिपदत्वं वा आकाङ्क्षा।

स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोज्यत्व स्वभिन्नत्वोभयसं०। उक्तग्रन्थस्तु शिष्यव्युत्पादनार्थः। नीलश्चैत्रस्य घट इत्यादौ नीलोघट इत्या-नुपूर्वीमद्वाक्यं कल्पयित्वैवाऽकाङ्क्षा संपादनीया। अत एवाऽऽसत्तिरप्यु-पपद्यते।

**समासस्थले च घटपदाद्यव्यवहितपूर्ववर्त्तिनीलादिपदत्वम्, नीलादिपदाऽव्यवहितोत्तरवर्त्तिघटादिपदत्वं वा आकाङ्क्षा।**

---

विनिगमकाभावात्समासस्थले आकाङ्क्षाद्वयमाह। **समासस्थले चेति।** अथ, समासस्थले नीलपदाव्यवहितोत्तरवर्त्तिघटपदत्वादेराकाङ्क्षात्वे पदार्थोपस्थित्यादिकारणकलापसत्वे निर्विभक्तिक"नीलघट"इत्येतावन्मात्रज्ञानेपि अभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधापत्तिः। नीलपदाऽव्यवहितोत्तरघटपदत्वरूपाऽऽकाङ्क्षाज्ञानस्य सत्वात्। **एतेन** नीलघटः नीलघटौ नीलघटाः इत्यादिविभक्त्यन्तसमुदायपर्याप्तानुपूर्वीणां कारणतावच्छेदकत्वापेक्षया समासस्थले नीलघटत्वरूपाऽऽनुपूर्वीप्रकारकज्ञानत्वेनैव कारणत्वे लाघवम्। उक्तं च "नीलपदाव्यवहितोत्तरवर्तिघटपदत्वं घटापदाऽव्यवहितपूर्ववर्त्तिनीलपदत्वं वा आकाङ्क्षे" ति निरस्तम्। तथा सति निर्विभक्तिकनीलघटेति समुदायाच्छाब्दबोधापत्तेरिति चेन्न। अनुमिताविव शाब्दबोधेपि विधेयताया भाननियमेन समासस्थले नीलप्रकारकशाब्दबोधो न भवति उपसर्जनीभूतनीलादिपदप्रयोज्यविषयतायाः विधेयत्वाऽसंभवात्। विधेयीभवदेकत्वादिप्रकारकनीलघटविशेष्यकशाब्दबोधादेरेव समासोत्तरं प्रसिद्धतया तत्सामग्र्याः सविभक्तिकनीलघटादिपदघटितत्वेन निर्विभक्तिकनीलघटादिपदस्थले तादृशसामग्र्याअभावेनाऽऽपत्त्यभावात्। विधेयीभवन्नीलादिप्रकारकस्य घटविशेष्यकशाब्दबोधस्य च व्यासस्थले एव प्रसिद्धत्वेन तत्सामग्र्याश्चापि उक्तस्थलेऽभावात्।

ननु उपस्थित्यादिकारणकलापसत्वे नीलपदाऽव्यवहितोत्तरवर्त्तिघटपदत्वरूपाऽऽकाङ्क्षाज्ञानादभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधापत्तिरिति चेन्न। व्यापकधर्मावच्छिन्ने कार्येजननीये व्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षिततया नोक्तापत्तिः। व्याप्यधर्मश्च नीलघट इति ज्ञानाव्यवहितोत्तरनीलघटविशेष्यकैकत्वप्रकारकशाब्दबुद्धित्वम्। व्यापकधर्मश्च नीलघटपदज्ञानाव्यवहितोत्तरनीलप्रकारकघटविशेष्यकबुद्धित्वम्।

**उक्तस्थले**। नीलस्य घट इत्यत्र च। **तादृश्याः**। समासव्यासस्थलीयोभयविधायाः। **एकस्याअप्याकाङ्क्षाया विरहादिति**। चतुश्चत्वारिंशदाकाङ्क्षासु मध्येइत्यादिः। **नापत्तिरिति**। नाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दापत्तिरित्यर्थः।

ननु नीलोघटः इत्याकाङ्क्षाज्ञानविरहेपि नालौ घटौ इत्याकाङ्क्षाज्ञानादभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधोत्पत्तेः। एवं नीलाघटा

उक्तस्थले च तादृश्या एकस्या अप्याकाङ्क्षाया विरहान्नापत्तिः। कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नोक्ताऽऽकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचारः।

---

इत्यादितोपि। तथा च परस्परजन्ये व्यतिरेकव्यभिचार इत्यत आह। कार्यतावच्छेदककोटाविति। अव्यवहितोत्तरत्वनिवेशादिति। तथा च नीलोघट इत्याकाङ्क्षाज्ञानाऽव्यवहितोत्तराऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधं प्रत्येव नीलोघट इत्याकाङ्क्षाज्ञानं कारणमतो न व्यभिचारः। एवं च नीलोघट इत्याकाङ्क्षाज्ञानविशिष्टशाब्दबोधं प्रति नीलोघट इत्याकाङ्क्षाज्ञानं कारणम्। वै०स्वाव्यवहितोत्तरत्व-स्वसामानाधिकरण्योभयसं०। द्वितीयसंबन्धनिवेशादेकस्याकाङ्क्षानसत्वेऽपरस्य न शाब्दबोधः[1]।

---

१ मथ तादृशाऽऽकाङ्क्षाज्ञानविशिष्टं प्रति नीलोघट इत्याकाङ्क्षाज्ञानं कारणमित्यस्यैव सम्यक्त्वे कार्यतावच्छेदककोटौ अभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दत्वनिवेशो व्यर्थः। वै० उक्तोभयसं। न च यत्र चैत्रस्य नीलोघट इत्याकाङ्क्षाज्ञानं ततोऽपेक्षाबुद्धया द्वित्वोत्पत्तिः, तत्र द्वित्वे व्यभिचारः, तस्य मैत्रेपि सत्वात्। तावतापि तादृशाकाङ्क्षाज्ञानविशिष्टबुद्धित्वं शाब्दबुद्धित्वमेव वा कार्यतावच्छेदकमस्तु किं प्रकारताविशेष्यतानिवेशेन। नचाऽप्रामाण्यज्ञानास्कन्दितनीलोघट इत्याकाङ्क्षाज्ञानादभेदसंसर्गकनीलप्रकारकघटविशेष्यकबोधवारणाय कारणतावच्छेदककोटौ अप्रामाण्यज्ञानानास्कन्दितत्वं निवेशनीयम्, एवं च यत्र नीलोघटःघटवद्भूतलमितिसमूहालंबनमाकाङ्क्षाज्ञानं नीलघटांशेऽप्रामाण्यज्ञानास्कन्दितं ततो घटवद्भूतलविषयकबोधे व्यभिचारः, अप्रामाण्यज्ञानानास्कन्दिततादृशाकाङ्क्षाज्ञानरूपकारणाभावात्, तद्वारणाय कार्यतावच्छेदककोटौ विषयनिवेशआवश्यकः तथा च नीलोघट इत्याकाङ्क्षाज्ञानविशिष्टनीलप्रकारकाऽभेदसंसर्गकघटविशेष्यकशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दितनीलोघट इत्याकांक्षाज्ञानस्य कारणत्वान्न व्यभिचारः, घटवद्भूतलविषयकबुद्धित्वस्य कार्यतावच्छेदकाऽनाक्रान्तत्वादिति वाच्यम्। कार्यतावच्छेदककोटावपि अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशादेव व्यभिचारवारणात्।

इदन्तुबोध्यम्। कार्यतावच्छेदककोटौ विषयनिवेशेपि अप्रामाण्यज्ञानानास्कन्दितत्वनिवेश आवश्यकः अन्यथा नीलोघटःश्यामःकलशःइतिपर्यायशब्दानां समूहालंबनमाकाङ्क्षाज्ञानंनीलोघटइत्यंशेऽप्रामाण्यज्ञानास्कन्दितं-ततोऽभेदसंसर्गकनीलप्रकारतोकघटविशेष्यकबोध उत्पद्यते तत्र व्यभिचारः अप्रामाण्यज्ञानानास्कन्दिताऽऽकाङ्क्षाज्ञानरूपकारणाभावात्।

एतेन बोधे शाब्दत्वानिवेशे यत्र नीलोघटइत्याकाङ्क्षाज्ञानमप्रामाण्यज्ञानास्कन्दितं नीलोघटइत्यनुमितिसामग्री च ततोऽनुमितौ व्यभिचारः, तत्र निरुक्ताकाङ्क्षाज्ञानविशिष्टबुद्धित्वस्य सत्त्वात्, अथ चाऽप्रामाण्यज्ञानानास्कन्दिताऽऽकाङ्क्षाज्ञानरूपकारणाभावादतः शाब्दत्वनिवेश इति परास्तम्। कार्यतावच्छेककोटौ अप्रामामाण्यज्ञानानास्कन्दितत्वनिवेशेनैव वारणात्। तथाहि तादृशानुमितित्वस्याऽप्रामाण्यज्ञानानास्कन्दिताकाङ्क्षाज्ञानविशिष्टत्वाभावेन कार्यतावच्छेदकानाक्रान्तत्वात्।

एवं कार्यतावच्छेदककोटौ विषयनिवेशोपि व्यर्थ एव। घटवद्भूतलविषयकबोधस्यापि अप्रामाण्यज्ञानानास्कन्दिताऽऽकाङ्क्षाज्ञानविशिष्टत्वाभावादिति चेन्न।

अप्रामाण्यग्रहधर्मिकाऽप्रामाण्यग्रहे कार्यमुत्पद्यते तत्रापि अप्रामाण्यग्रहे नोत्पद्यते इति रीत्याऽनन्ताऽप्रामाण्यज्ञानव्यक्तीनामभावसमुदायस्य कार्यतावच्छेदककोटौ निवेशे महागौरवमतो विषयनिवेश इति ध्येयम्।

वस्तुतस्तु प्रवृत्तिं प्रति इष्टसाधनताज्ञानं हेतुः। इष्टश्चाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधः। तत्साधनत्वस्य नीलोघटइतिवाक्येऽग्रहे तत्र प्रवृत्तिर्न स्यादतो विषयनिवेश आवश्यकः।

ननु कार्यतावच्छेदककोटौ कारणानन्तर्यनिवेशापेक्षया आकाङ्क्षाज्ञानानामन्यतमत्वेनैककार्यंकारणभावोस्तु इतिचेत्—अन्यतमत्वं हि भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्वम्। प्रकृते च प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानप्रतियोगिकभेदविशिष्ट द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानप्रतियोगिकभेदविशिष्टेत्यादिरीत्या सप्तम्यन्तनीलपदसमभिव्याहृतसप्तम्यन्तघटपदत्वरूपाऽऽकाङ्क्षाज्ञानप्रतियोगिकभेदकूटावच्छिन्नप्रतियोगिताकभेदवत्वम्। तत्र विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तकारणताबाहुल्यं तदवस्थमेव, अथ च कारणतावच्छेदकगौरवमतिरिच्यते।

न च तत्तदाकाङ्क्षाज्ञानानां यावन्तोभेदाः तद्गतसमुदायत्वावच्छिन्नप्रतियोगिताकाभावोऽन्यतमत्वम्। अत्र वैशिष्ट्यस्याऽप्रवेशेन न कारणताबाहुल्यम् विनिगमनाविरहप्रयुक्तमिति वाच्यम्। समुदायत्वस्याऽपेक्षाबुद्धिविशेषविषयत्वस्याऽपेक्षाबुद्धिभेदेन नानात्वात्। कारणताबाहुल्यात्, अवच्छेदकगौरवतादवस्थ्याच्च।

अत्रेदंबोध्यम् शाब्दबोधं प्रति शाब्देच्छाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री प्रतिबन्धिका। अन्यतमत्वेन कारणतापक्षेऽन्यतमाकाङ्क्षाज्ञानं "अन्यतमाकाङ्क्षाज्ञानाधीनशाब्देच्छाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्रीविरहविशिष्टं" अभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दं प्रति कारणमिति कार्यकारणभावे समानविषयकप्रत्यक्षसामग्र्यां सत्यां कस्माच्चिदन्यतमाकाङ्क्षाज्ञानादन्यतमाकाङ्क्षाज्ञाना-

**उक्ताऽऽकाङ्क्षाज्ञानयोरिति** । समासव्यासस्थलीयोक्ताऽऽकाङ्क्षाज्ञानयोरित्यर्थः । **परस्परबोधे** । समासस्थलीयबोधे व्यासस्थलीयाऽऽकाङ्क्षानस्य व्यासस्थलीयबोधे समासस्थलीयाऽऽकाङ्क्षाज्ञानस्येत्यर्थः । **नव्यभिचारः** । न व्यतिरेकव्यभिचारः । कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशादित्यस्याऽन्वयः । इदमुपलक्षणम् । समासस्थलेपि नीलघटः-कृष्णघटः-श्यामकलशः-इत्यादिपर्यायवाचकशब्दघटिताऽऽकाङ्क्षाज्ञानजन्यशाब्दबोधे परस्परव्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वंनिवेश्यम् । एवं नीलोघटः-श्यामःकलशः—इत्यादिपर्यायवाचकवाक्यघटिताऽऽकाङ्क्षाज्ञानजन्यशाब्दबोधे व्यभिचारवारणाय, तथा नी लोघटः नीलौघटौ—नीलाघटाः इत्याद्याकाङ्क्षाज्ञानजन्यशाब्दबोधे परस्परव्यभिचारवारणाय च स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तराऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधं प्रति तादृशाकाङ्क्षाज्ञानं कारणम् । एवमावन्तनीलपदसमभिव्याहृताऽऽवन्तघटपदत्वरूपाऽऽकाङ्क्षाज्ञानाऽव्यवहितोत्तराऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधं प्रति तादृशाकाङ्क्षाज्ञानत्वेनेत्यादिरीत्या एकविंशतिसंख्याका अपराश्च स्वन्तघटपदसमभिव्याहृतस्वन्तनीलपदत्वेनेत्यादिरीत्या एकविंशतिसख्याकाःकार्यकारणभावाःव्यासस्थलेबोध्याः[1] ।

———

धीनशाब्देच्छायां शाब्दापत्तिः । तथाहि यत्र नीलोघटइत्याकाङ्क्षाज्ञानं समानविषयकप्रत्यक्षसामग्री च द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाऽऽकाङ्क्षाज्ञानजन्यबोधोजायतामितीच्छातः शाब्दापत्तिः, अन्यतमाऽऽकाङ्क्षाज्ञानाधीनशाब्देच्छाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्रीविरहविशिष्टान्यतमाऽऽकाङ्क्षाज्ञानसत्त्वात् ।

तत्तद्रूपेणाऽऽकाङ्क्षाज्ञानस्य कारणत्वे तु प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाऽऽकाङ्क्षाज्ञानाव्यवहितोत्तराऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधं प्रति तादृशाकाङ्क्षाज्ञानाधीनशाब्देच्छाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्रीविरहविशिष्टतादृशाऽऽकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावे नापत्तिः । अन्यादृशाऽऽकाङ्क्षाज्ञानेऽन्यादृशाऽऽकाक्षाज्ञानाधीनशाब्देच्छासत्त्वेपि समानविषयकप्रत्यक्षसामग्र्या बलवत्त्वात् ।

१ इदमत्रतत्त्वम् । सामान्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्नकार्योत्पादकसामग्री अपेक्षिता, तेन नीलस्य घट इति वाक्यादापाद्यमानशाब्दबोधस्योक्तचतुश्चत्वारिंशदाकाङ्क्षाज्ञानकार्यताच्छेदकानाक्रान्ततया सामान्यसामग्रीतो नापत्तिः । उक्ताकाङ्क्षाज्ञानघटितविशेषसामग्र्यभावादिति ।

यत्तु समासव्याससाधारणं विशेषणपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाऽऽकाङ्क्षा। विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाऽप्रकृतिकविभक्त्यप्रकृतित्वं च न तथा। नीलघटमानयेत्यादावसंभवादिति।

समस्ताऽसमस्तोभयसाधारणैकामाकाङ्क्षामाह। यत्त्विति। समासव्याससाधारणमिति। समस्ताऽसमस्तोभयवृत्तीत्यर्थः। विशेषणपदस्येति। विशेषणवाचकपदस्येत्यर्थः। निष्ठत्वं षष्ठ्यार्थः। विरुद्धविभक्तिराहित्यमेवेति। विशेष्यवाचकपदोत्तरविभक्तिविरुद्धविभक्तिराहित्यमेवेत्यर्थः। एवकारेणोक्तचतुश्चत्वारिंशदाकाङ्क्षाणां व्यवच्छेदः। विरुद्धविभक्तिराहित्यं परिष्करोति। विशेषणपदस्येति। विशेषणवाचकपदस्येत्यर्थः। निष्ठत्वं षष्ठ्यर्थ। अन्वयश्चास्याऽप्रकृतित्वे। विशेष्यवाचकपदं अप्रकृतिर्यस्याः—एवं भूता या विभक्तिस्तदप्रकृतित्वमर्थः। तादृशान्वयबोधौपयिकेति। अभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधजनिका इत्यर्थः। तथा च विशेषणवाचकपदनिष्ठविशेष्यवाचकपदाऽप्रकृतिकविभक्त्यप्रकृतित्वं तादृशशाब्दबोधजनिका आकाङ्क्षेति समुदितार्थः। नीलो घट इत्यत्र विशेष्यवाचकं घटपदं तदप्रकृतिका या द्वितीयादिविभक्तिः तदप्रकृतित्वं विशेषणवाचकनीलपदेऽस्ति। एवं नीलघट इत्यत्रापि विशेष्यवाचकं घटपदं तदप्रकृतिका द्वितीयादिविभक्तिस्तदप्रकृतित्वं नीलपदेऽस्ति, नीलपदोत्तरविभक्तेरभावात्। नीलस्य घट इत्यादौ तु विशेष्यवाचकघटपदाऽप्रकृतिका या षष्ठीविभक्तिस्तत्प्रकृतित्वस्यैव नीलपदे सत्वान्नाऽऽकाङ्क्षा।

न चाऽत्र नञ्द्वयोपादानं किमर्थम्। विशेष्यवाचकपदप्रकृतिकविभक्तिप्रकृतित्वस्यैव सम्यक्त्वादिति वाच्यम्। नीलघट इत्यादौ आकाङ्क्षाविरहप्रसंगात्।

ननु विनिगमनाविरहाद्विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपापि आकाङ्क्षा वक्तुं शक्यते, नीलो घट इत्यत्र विशेषण-

---

अथ सामग्री कारणकूट एव, कारणसमुदाय इति यावत्। तथा च व्यापकधर्मावच्छिन्ने कार्येजननीये व्याप्यधर्मावच्छिन्नकार्यस्य कारणसमुदाय अपेक्षित इति फलम्। एवं च कारणसमुदायस्यैकत्राऽसंभवेन कुत्रापि शाब्दबोधो न स्यादितिचेन्न। विशेषधर्मावच्छिन्नकार्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नोऽपेक्षित इति तदर्थात्। एकैकाऽऽकाङ्क्षाज्ञानघटितसमुदायत्वस्यैव तथात्वेन तदवच्छिन्नस्य नीलो घट इत्यादौ सुलभत्वान्नानुपपत्तिः। एतेनाऽपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वस्याऽननुगतत्वेपि न क्षतिः कार्योत्पत्तिप्रयोजकतावच्छेदकत्वेनानुगमादिति ध्येयम्।

**तदसत्। विशेष्यवाचकपदाप्रकृतिकत्वस्य तादृशपदानुत्तरत्वस्य— तदुत्तरत्वेनाऽप्रतिसंधीयमानत्वरूपस्य वा नीलोघटइत्यादौ नीलपदसमभिव्याहृतविभक्तौ घटपदसमभिव्याहृतविभक्तिभिन्नतया सत्वात्।**

---

वाचकनीलपदाप्रकृतिका या द्वितीयादिविभक्तिस्तदप्रकृतित्वं विशेष्यवाचकपदेऽस्ति। तथा च न परस्परजन्ये व्यभिचारवारणाय कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशआवश्यक इत्यत आह। **विशेष्यवाचकपदनिष्ठेति। न तथा।** नाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधजनिका आकांक्षा इत्यर्थः। **असंभवात्।** अभावात्। नीलघटमित्यादौ विशेषणवाचकनीलपदाऽप्रकृतिका या द्वितीयाविभक्तिस्तत्प्रकृतित्वस्यैव घटपदे सत्वादिति भावः। विशेषणवाचकपदाऽप्रकृतिकेत्यस्य विशेषणवाचकपदोत्तरत्वेनाऽप्रतिसन्धीयमानेत्यर्थकरणेन नीलघट इत्यत्रानुपपत्तिविरहात् द्वितीयान्तानुसरणम्। तदपि प्रथमान्तेन कर्मधारय इति मतेन। तेन नीलघटमानयेत्यत्रापि नीलं च तं घटं चेति समासाश्रयणेऽ नुपपत्तिविरहेपि नासंगतिः।

यत्तु मतं निरस्यति। **तदसदिति। तादृशेति।** विशेष्यवाचकेत्यर्थः। तथा च विशेषणवाचकपदनिष्ठविशेष्यवाचकपदानुत्तरविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमाकाङ्क्षेति भावः। ननु तस्या न संभवः, विशेष्यवाचकघटपदानुत्तरा नीलपदोत्तरसुविभक्तिः तत्प्रकृतित्वस्यैव नीलपदे सत्वात्, उच्चारणभेदेन नीलपदोत्तरसुविभक्तेर्घटपदोत्तरसुविभक्तिभिन्नत्वात्, सुन्दरंदधीत्यादौ विशेष्यवाचकदधिपदोत्तरविभक्तेरप्रसिद्धेश्चाह। **तदुत्तरत्वेनेति।** विशेष्यवाचकपदोत्तरत्वेनेत्यर्थः। **अप्रतिसन्धीयमानत्वस्येति।** अस्य नीलादिपदसमभिव्याहृतविभक्तौ सत्वादित्यनेनाऽन्वयः। तत्र हेतुमाह। **घटपदसमभिव्याहृतविभक्तिभिन्नतयेति।** तथा च विशेष्यवाचकपदोत्तरत्वेनाऽप्रतिसन्धीयमानविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमपि नीलोघट इत्यादौ न संभवति विशेष्यवाचकघटपदोत्तरत्वेनाऽप्रतिसन्धीयमाननीलपदोत्तरसुविभक्तिप्रकृतित्वस्यैव नीलपदे सत्वादसंभवइति भावः। **एतेन** वेदाः प्रमाणमित्यत्रैव विशेष्यवाचकवेदपदाप्रकृतिकसुविभक्तिप्रकृतित्वस्य प्रमाणपदे सत्वादाकाङ्क्षानुपपत्तिः कथंनोक्तेति शंकासमाहिता। असंभवेन तस्या अपि संग्रहात्।

विभक्तीनां भेदेपि विभक्तिविभाजकप्रथमात्वादीनामभेदात्तद्घटितस्यैवाऽऽकाङ्क्षात्वे नोक्तानुपपत्तिरित्याशंकते। **अथेति।** विशेष्यवाचकपदोत्तरस्मिन्नवृत्तिर्योविभक्तिविभाजकोधर्मस्तद्वती या विभक्तिः स्वाव्यवहितपूर्वत्वसं-

**अथ विशेष्यवाचकपदोत्तराऽवृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य विवक्षणान्न दोष इति चेत्—तर्हि विभक्तित्वादिकमजानतः पुरुषस्य तादृशधर्मज्ञाना संभवाच्छाब्दबोधानुपपत्तिः।**

वन्धेन तद्राहित्यस्य विशेषणवाचकपदे विवक्षणादित्यर्थः। **न दोषः**। नोक्तापत्त्यनुपपत्ती। **तथा हि**—नीलोघट इत्यत्र विशेष्यवाचकं घटपदं तदुत्तरस्मिन्नवृत्तिर्योविभक्तिविभाजकोधर्मोद्वितीयात्वादिस्तद्वद्द्वितीयादिविभक्तिराहित्यं नीलपदे। नीलघटमानयेत्यादौ अपि विशेष्यवाचकघटपदोत्तरस्मिन्नवृत्तितृतीयात्वरूपविभक्तिविभाजकधर्मवत्तृतीयाराहित्यं नीलपदे। नीलस्य घट इत्यादौ तु विशेष्यवाचकघटपदोत्तरस्मिन्नवृत्तिषष्ठीत्वरूपविभक्तिविभाजककधर्मवत्षष्ठीविभक्तिराहित्यस्य नीलपदेऽसत्वान्नापत्तिरभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधस्येति।

समाधत्ते। **विभक्तित्वादिकमजानत इति**। विभक्तित्वादिज्ञानशून्यस्येत्यर्थः। विभक्तित्वज्ञानविरहेपि आनुपूर्वीज्ञानवतः शाब्दबोधोभवति स न स्यादितिभावः। **तादृशधर्मज्ञानाऽसंभवादिति**। विभक्तित्वज्ञानाभावेन विभक्तित्वघटितविशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मज्ञानाऽसंभवादित्यर्थः। **शाब्दबोधानुपपत्तिरिति**। आकाङ्क्षाज्ञानाभावादिति भावः।

न च विशेष्यवाचकपदोत्तराऽवृत्तित्वेनैव धर्मः प्रवेश्यतां किं विभक्तिविभाजकत्वनिवेशेन, तथा च न विभक्तित्वज्ञानापेक्षेति वाच्यम्। नीलादिपदोत्तरस्वादिनिष्ठतद्व्यक्तित्वमादायाऽऽकाङ्क्षानुपपत्तेः। नीलादिपदोत्तरस्वादिनिष्ठतद्व्यक्तित्वस्य घटापदोत्तरस्वादिव्यक्तौ अवृत्तित्वात्।

न च विशेष्यवाचकपदोत्तरावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्विभक्तिराहित्यमेवोच्यताम्, तद्व्यक्तित्वस्य श्रावणप्रत्यक्षविषयतानवच्छेदकत्वाद्वारणम्। विभक्तित्वाद्यप्रवेशाच्च तदज्ञानदशायां नानुपपत्तिरिति वाच्यम्। नीलोघट इत्यत्र सुपदयोस्तारमन्दरूपत्वे श्रावणप्रत्यक्षविषयतावच्छेदकतारत्वजातिमादायाऽऽकाङ्क्षानुपपत्तेः।

अथ विशेष्यवाचकपदोत्तराऽवृत्तिविभक्तिविभाजकत्वोपलक्षितधर्मवद्विभक्त्यभावज्ञानस्य विशेष्यवाचकपदोत्तरावृत्तिनिष्ठा या विभक्तिविभाजकत्वसमानाधिकरणविषयता तन्निरूपितविभक्तिनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपितविशेषणवाचकपदनिष्ठविषयताकज्ञानत्वेन कारणत्वमस्तु—एवं च विभक्तित्वाज्ञानेपि न शाब्दबोधानुपपत्तिरिति चेन्न। ईदृशाऽभावाऽ-

ज्ञानेपि केवलानुपूर्व्यवच्छिन्नज्ञानेपि शाब्दबोधोत्पत्तेः। अत एव विभक्तित्वादिकमित्यत्राऽऽदिपदमुपात्तम्[1]।

---

१ किं च विशेष्यवाचकपदोत्तरावृत्तियत्किञ्चिद्धर्मवद्विभक्त्यभावः तादृशधर्मसामान्यवद्विभक्त्यभावः विशेष्यवाचकपदोत्तराऽवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यभावो वा विषयतया कारणतावच्छेदकः। नाद्यः नीलं घट इत्यत्रापि टात्वादियत्किञ्चिद्धर्मवद्विभक्तिराहित्यस्य सत्वेनाऽऽकाङ्क्षापत्तेः। न द्वितीयः नीलोघट इत्यत्रापि घटपदोत्तरत्वाद्यवृत्तिनीलपदाव्यवहितोत्तरत्वविशिष्टसुत्वादिमद्विभक्तिमत्वस्यैव नीलपदे सत्वेनाऽऽकाङ्क्षानुपपत्तेः। न तृतीयः मूलोक्तविभक्तित्वादिकमजानत इत्यादिदोषतादवस्थ्यात्।

अथ विशेष्यवाचकपदानां विशेष्यवाचकपदत्वेन प्रवेशः, विशेष्यवाचकघटपदत्वेन वा तत्तद्व्यक्तित्वेन वा। नाद्यः सर्वस्यैव सुत्वादिधर्मस्य तत्तत्स्थलभेदेन विशेष्यवाचकपदोत्तरवृत्तित्वेन विशेष्यवाचकपदोत्तराऽवृत्तिविभक्तिविभाजकधर्माऽप्रसिद्धेः। न द्वितीयः अप्रसिद्धिदोषतादवस्थ्यात्। तथा हि विभक्तित्वस्य सुप्तिङ्साधारणत्वेन सुत्वादेर्विभक्तिविभाजकत्वाभावाद् विभक्तिविभाजकपदेन सुत्वौत्वादेरेव वर्तव्यतया सर्वस्यैव तत्तत्स्थलभेदेन घटपदोत्तरवृत्तित्वात्। न तृतीयः नीलोघट इति वाक्यघटकघटपदोत्तरावृत्तीति क्रमेण तत्तत्पदानां विशिष्य निवेशे एकाकाङ्क्षाऽसंभवप्रसंगात्।

एवं द्वितीयेऽपि घटपदोत्तरत्ववन्निरूपितवृत्तित्वसामान्याभावो निवेश्यते यत्किंचिन्निरूपितवृत्तित्वाभावो वा। नाद्यः नीलस्य घट इत्यत्राऽऽकाङ्क्षाप्रसंगात् ङस्त्वादिष्वपि घटपदाव्यवहितोत्तरनिरूपितवृत्तित्वसामान्याभावविरहात्, ङस्विभक्तेरपि प्रातिपदिकादुत्पत्तेः। न द्वितीयः नीलोघट इत्यत्राऽऽकाङ्क्षानुपपत्तिप्रसंगात्। घटपदत्वादिना घटपदाव्यवहितोत्तर"यत्किंचित्"द्वितीयादिनिरूपितवृत्तित्वसामान्याभावस्य प्रथमात्वेपि सत्वात्।

एवं तृतीयेपि यत्किंचिद्विभक्तिराहित्यं विवक्षणीयम्, विभक्तिसामान्याभावः विभक्त्यभावकूटो वा। नाद्यः नीलस्य घट इत्यत्रापि आकाङ्क्षाप्रसंगात्, नीलपदे यत्किंचिद्विभक्तिराहित्यसत्वात्। न द्वितीयः प्रथमाभिन्नविभक्तित्वापेक्षया तादृशधर्मवद्विभक्तित्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्धेः। न तृतीयः कूटत्वस्यैकविशिष्टापरत्वरूपतयाऽभावव्यक्तीनामानन्त्येन कारणतावच्छेदकाऽनन्त्यप्रसंगात्।

नच नीलादिपदे घटादिपदवत्त्वमेवाऽऽकाङ्क्षा। पदवत्ता च स्वाभाववत्व सं०। अभावश्च स्वोत्तरत्ववन्निरूपितवृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्विभक्ति-

नीलोघट इत्यादावपि सुपदस्याऽम्पदत्वभ्रमदशायां तादृशबोधस्यानुदयात्। नीलस्य घट इत्यादावपि षष्ठ्यादेःसुपदत्वादिभ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतोविभक्तिराहित्यस्याऽप्रयोजकत्वात्।

---

अथोक्तविभक्तिराहित्यज्ञानं नापेक्षणीयम्, येन विभक्तित्वज्ञानाऽपेक्षा स्यात्, किन्तु वस्तुतो विभक्तिराहित्यमपेक्षणीयम्, तथाच नोक्तानुपपत्तिरित्यतोदोषान्तरमाह। **नीलोघट इत्यादावपीति**। **सुपदस्येति**। नीलादिपदोत्तरेत्यादिः। **तादृशबोधस्येति**। अभेदसंसर्गकनीलप्रकारकघटविशेष्यकबोधस्येत्यर्थः। **अनुदयात्**। अनुत्पादात्। अन्वयव्यभिचारादिति शेषः। अस्य स्वरूपतोविभक्तिराहित्यस्याप्रयोजकत्वादित्यनेनाऽन्वयः। आपत्तिमुक्त्वाऽनुपपत्तिमाह। **नीलस्य घट इत्यादाविति**। **शाब्दबोधोत्पत्त्या**। अभेदसंसर्गकनीलप्रकारघटविशेष्यकशाब्दबोधोत्पत्त्या। व्यतिरेकव्यभिचारादिति शेषः। **स्वरूपतः**। वस्तुतः। अज्ञातस्येति यावत्। **विरुद्धविभक्तिराहित्यस्येति**। उक्ताऽऽकाङ्-

---

विभाजकधर्मवत्त्वसंबन्धावच्छिन्नप्रतियोगिताकः। स्वं घटादिपदम्। धर्मवत्ता च स्वाव्यवहितपूर्वत्वसं०। स्वं०धर्मः, नीलोघट इत्यादौ घटपदवत्त्वं नीलपदे, स्वं-एतद्वाक्यघटकघटपदं तदुत्तरसुविभक्तिनिरूपितवृत्तित्वं सुत्वे तादृशवृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकघटपदाभाववान् विभक्तिविभाजकोधर्मः औत्वादिः तदाश्रयाऽव्यवहितपूर्वत्वं न नीलपदे।

नीलस्य घट इत्यादौ तु घटपदवत्त्वं नीलपदे तद्वाक्यघटकघटपदोत्तरसुनिरूपितवृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकघटपदाऽभाववत्त्वस्य ङस्त्वे सत्त्वात्तादृशङस्त्वधर्मवत्त्वस्यैव स्वाश्रयाऽव्यवहितपूर्वत्वसंबन्धेन नीलपदे सत्वात्। तथा च नीलपदं घटवदित्याकारकं नीलपदधर्मिकघटपदवत्त्वावगाहिम्राकाङ्क्षाज्ञानं नीलोघट इति शाब्दबोधे कारणम्। नापि विभक्तित्वादिकमजानत इत्यादिदोषाऽसंगतिः, अनुपस्थितस्यापि संसर्गतया भानाभ्युपगमात्, अन्यथाऽन्वये शक्तिखण्डनमसंगतं स्यादिति वाच्यम्। यत्र घटपदे एवाऽव्यवहितोत्तरत्वमात्रेण नीलादिपदवत्त्वग्रहस्तत्रापि शाब्दबोधस्याऽनुभविकतया तत्र नीलपदं घटपदवदितिज्ञानाभावादनुपपत्तौ तात्पर्यात्।

अत्र स्वसमभिव्याहृतत्व—स्वाभाववत्त्वोभयसंबन्धेन घटपदवत्त्वं वाच्यम्। तेन नीलस्य घट इत्यादौ नोलपदे घटस्ये तिषष्ठोविभक्त्यन्तघटपदवत्त्वस्य स्वभाववत्त्वसंबन्धेन सत्वेपि नक्षतिरितिध्येयम्। उक्तविभक्ति राहित्येत्यत्र विभक्तिपदप्रयोजनं न पश्यामः।

**अथ नीलोघटः नीलघट इत्यादि द्विविधबोधसाधारणं स्वोत्तरसुपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसंबन्धेन नीलादिपदवत्स्वन्तघटादिपदत्वमेव तथास्तु इति चेत् ।**

---

ङ्क्षायाइत्यर्थः । **अप्रयोजकत्वात्** । अकारणत्वात् । इत्थं च विरुद्धविभक्तिराहित्यज्ञानस्यैव कारणत्वे विभक्तित्वादिकमजानतः पुरुषस्य विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मज्ञानाऽसंभवात् नीलोघट इति वाक्याद- भेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधानुपपत्ति र्दुर्वारैवेति ध्येयम् ।

विरुद्धविभक्तिराहित्यज्ञानस्य कारणत्वेपि नोक्तशाब्दबोधानुपपत्तिरित्याशंकते । **अथेति** । **द्विविधबोधसाधारणमिति** । समासव्याससाधारणमित्यर्थः । तथा च पृथक् पृथगाकाङ्क्षाभ्युपगमे गौरवमिति भावः । स्वोत्तरेति । स्वं विशेष्यवाचकपदं । वै० सामानाधिकरण्यसं० । तथा च नीलादिपदविशिष्टस्वन्तघटादिपदत्वमाकाङ्क्षा । वै० स्वोत्तरसुपदभिन्नपदानुत्तरत्व— स्वोत्तरत्वोभयसं० । तथा नीलोघट इत्यत्र स्वं नीलपदं तदुत्तरसुपदभिन्नं पदं- घटपदं तदनुत्तरत्वं स्वोत्तरत्वमपि घटपदेऽस्ति । नीलोघट इत्यत्रापि स्वपदग्राह्यनीलपदोत्तरसुपदभिन्नं घटपदं तदनुत्तरत्वं घटपदे । नीलौघटौ इत्यादौ च स्वोत्तरौपदभिन्नपदानुत्तरत्व स्वोत्तरत्वोभयसंबन्धेन नीलादिपदविशिष्टआवन्तघटपदत्वं घटपदे । एवमन्यत्राप्यूह्यम् । नीलस्य घट इत्यत्रस्वपदग्राह्यनीलपदोत्तरङसपदभिन्नपदानुत्तरत्व स्वोत्तरत्वोभयसंबन्धेन नीलपदविशिष्टङसन्तघटपदत्वरूपाऽऽकाङ्क्षाविरहान्नापत्तिः ः

अत्र स्वोत्तरसुपदभिन्नपदानुत्तरत्वानुक्तौ नीलः पटः पीतोघट इत्यादौ नीलघटयोराङ्क्षापत्तिः । स्वोत्तरत्वानुक्तौ उक्तस्थले पीतपटयोराकाङ्क्षापत्तिः । घटपदे स्वन्तत्वानुक्तौ नीलोघटा इत्यादौ आकाङ्क्षापत्तिरतस्तदुपादानम्[१] ।

---

१ अथ-घटोनील इत्यत्राऽऽकाङ्क्षानुपपत्तिः, स्वोत्तरत्वघटितोभयसंबन्धेन घटपदे नीलपदवत्त्वाभावात् । न च स्वोत्तरत्वं नोपादेयमिति वाच्यम् । घटस्य नील इत्यत्राऽऽकाङ्क्षाप्रसंगात्, नीलपदोत्तरसुपदभिन्नपदानुत्तरत्वस्य घटपदे सत्वात् । न च नीलोघट इति व्यासमात्रसाधारणाऽऽकाङ्क्षैव विवक्षितेति वाच्यम् । एवं सति समाससाधारण्यसंपादने आयासो वृथैव, आकाङ्क्षाधिक्यस्य वक्तव्यत्वात् । न च घटोनील इत्यत्र नीलोघट इति योजनया शाब्दबोधः सुलभ इति वाच्यम् । नीलादेर्विधेयतया बुबोधयिषितत्वे उद्देश्यवचनं पूर्वमिति न्यायेन

घटादेर्नीलादिपूर्वत्तित्वज्ञानस्यैव शाब्दबोधप्रयोजकत्वात्। अतएव पर्वतोवह्निमानित्यादिकमेव प्रतिज्ञावाक्यं प्रयुञ्जते अभियुक्ताः।

किं च नीलोस्ति घट इत्यत्राऽऽकाङ्क्षानुपपत्तिः। नीलपदोत्तरसुपदभिन्नाऽस्त्यादिपदाव्यवहितोत्तरत्वस्यैव घटपदे सत्वात्। नीलपदाऽव्यवहितोत्तरसुपदभिन्नपदानुत्तरत्वोक्तौ तु नीलोघट इत्यादावप्रसिद्धिः, सुपा व्यवधानादिति चेन्न। आकाङ्क्षायाः समाससाधारणीकरणमेव पूर्वपक्ष्यभिप्रेतमित्यभिप्रायेणैव समासस्थले एव आकाङ्क्षान्तरानुसरणं नीलघटरूपमित्यादौ दर्शितम्। वस्तुतो व्यासस्थलेपि आकाङ्क्षान्तरानुसरणस्योपलक्षणं बोध्यम्।

अथ नीलादिपदविशिष्टस्वन्तघटादिपदत्वमेवाऽऽकाङ्क्षास्तु। वै० स्वाभाववत्व स्वोत्तरत्वोभयसं०। स्वाभावश्च स्वाव्यवहितोत्तरसुपदभिन्नविभक्त्यव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रतियोगिताकः। नीलोऽस्ति घट इत्यत्र घटपदे स्वपदग्राह्यनीलपदोत्तरसुपदभिन्नविभक्त्यव्यवहितोत्तरत्वाभावात्तादृशाऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रतियोगिताकनीलपदाभावस्य सत्वान्नानुपपत्तिः।

न च वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वे तत्संबन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धिरिति वाच्यम्। स्वाव्यवहितोत्तरसुपदभिन्नविभक्त्यव्यवहितोत्तरत्वसंबन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावस्य तदर्थत्वात्। विशेष्यत्वाभावश्च प्रमीयविशेष्यताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः। अमीयविशेष्यतामादायानुपपत्तिवारणाय प्रमापदम्।

यत्तु नीलोस्ति घट इत्यत्र नीलोघटोस्तीति योजनयैव शाब्दबोध इति। तन्न। अभ्रान्तस्याऽश्रुततादृशसमभिव्याहारस्यापि उक्तवाक्याच्छाब्दबोधस्याऽनुभवसिद्धत्वादिति संक्षेपः।

अथ नीलपदार्थस्याऽभेदेन घटीयरूपेऽन्वये घटरूपपदस्यैव विशेष्यवाचकत्वात्तत्र च नीलपदोत्तरसुपदभिन्नपदानुत्तरत्वस्य सत्वान्नानुपपत्तिः। न च नीलश्चासौ घटश्चेति नीलघटः नीलघटस्य रूपमिति नीलघटरूपमिति विग्रहे नीलघटयोराकाङ्क्षानुपपत्तिः, घटपदस्य स्वन्तत्वविरहात्। यद्यपि सुन्दरं दधीत्यत्राकाङ्क्षात्वोपपत्तये स्वन्तत्वमित्यनेनाऽनुसन्धीयमानस्वन्तत्वं विवक्षणीयम्। तथापि तादृशवाक्यज्ञानोत्तरं रूपं नीलमन्यद्वेति संशयानुच्छेदप्रसंगात्। न च स्वन्तत्वमिह सुभिन्नविभक्त्यव्यवहितपूर्वत्वाभावरूपं वाच्यं, तावतैव नीलोघटमित्यस्य वारणात्, नीलघटरूपमित्यत्र च नानुपपत्तिरिति वाच्यम्। नीलोघटरूपमित्यादौ घटपदे सुभिन्नविभक्त्यव्यवहितपूर्वत्वाभावस्य सत्वादाकाङ्क्षापत्तिरिति चेन्न। नीलश्चासौ

न, नीलघटरूपमित्यादिवाक्यसाधारण्याऽनुरोधेनाऽन्यादृश्या अपि आकाङ्क्षायाः समासस्थले उपगन्तव्यतया उपदर्शितसमासव्यास-साधारणानुगताऽऽकाङ्क्षानुसरणस्याऽप्रयोजकत्वादिति ।

---

समाधत्ते नेति । नीलघटरूपमित्यादीति । घटस्य रूपं घटरूपमिति-षष्ठीतत्पुरुषोत्तरं नीलं च तद्घटरूपं चेति कर्मधारयः । अत्र नीलरूपपदयो-राकाङ्क्षानुपपत्तिः, स्वं नीलपदं तदुत्तरं सुपद्भिन्नं घटपदं तदुत्तरत्वस्यैव रूप-पदे सत्वात् । अन्यादृश्या अप्याकाङ्क्षाया इति । स्वोत्तरसुपद्भिन्ने निराकाङ्क्षत्वं विशेषणीयमिति भावः । घटपदं तु रूपपदसाकाङ्क्षमेवेति नानुपपत्तिः ।

---

घटश्चेति नीलघटः नीलघटस्य रूपमिति नीलघटरूपमिति विग्रहे निपातातिरिक्त-नामार्थयोः साक्षाद्भेदेनाऽन्वयस्याऽव्युत्पन्नतया घटपदस्य घटीये लक्षणाया रूप-पदार्थेन सहाऽभेदान्वयार्थमावश्यकतया नीलपदार्थस्य घटीयैकदेशे घटेऽन्वये एक-देशान्वयापत्त्या घटपदस्यैव नीलघटीये लक्षणा नीलपदं तात्पर्यग्राहकमित्येव युक्तम्, तथा च घटपदस्यैव विशेषणवाचकत्वाद् घटपदोत्तरसुपदभिन्नपदानुत्तरत्वविशिष्ट घटपदोत्तरत्वस्य स्वन्तत्वस्य च रूपपदे सत्वेनाऽनुपपत्त्यभावात् । यदि च स्तोक नम्रेत्यादाविवाऽत्रापि एकदेशान्वयस्य प्रामाणिकत्वे उक्तस्थले आकाङ्क्षानुपपत्तिः सम्भवत्येवेति ध्येयम् ।

एवं यत्र घटीये लाक्षणिकघटशब्देन सह नीलपदस्य कर्मधारयः, ततो नीलघटस्य रूपेण सह कर्मधारयः तत्र चाभेदेन नीलविशिष्टं यद्घटीयमभेदेन तद्विशिष्टं रूपमिति वाक्यार्थः तत्रैव विशेषणवाचकनीलपदोत्तरसुपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्व-संबन्धेन घटपदे सत्वेपि घटपदस्य स्वन्तत्वविरहादाकाङ्क्षानुपपत्तिर्बोध्या ।

इदमुपलक्षणम् । नीलो घटो नीलाः घटाः इत्यादि सर्वविभक्त्यन्तवाक्यानां नीलघटौ नीलघटाः इत्यादिसमस्तवाक्यानां चैकविधाऽऽकाङ्क्षाविरहो बोध्यः । अथ स्वोत्तरसुप्पदभिन्नपदानुत्तरत्व-स्वोत्तरत्वोभयसंबन्धेन नीलपदविशिष्टसुबन्तघटपदत्व-रूपाऽऽकाङ्क्षात्वोक्तौ नैकविधत्वानुपपत्तिः, सर्वत्र सुबन्तघटपदत्वसत्वात् । स्वोत्तर-सुप्पदभिन्नेत्यस्य विशेष्यवाचकपदोत्तरविभक्तिवृत्तिविभक्तिविभाजकधर्मावच्छिन्न-भिन्नेत्यर्थः । तेन नीलस्य घट इत्यादेर्न साकाङ्क्षत्वम् । नीलपदोत्तरषष्ठ्याः प्रथमात्वावच्छिन्नभिन्नत्वादिति चेन्न । एवमपि नीलोघटाः इत्यादेः साकाङ्क्षत्वा-पत्तेः । घटो नीलः नीलोऽस्ति घट इत्यादौ आकाङ्क्षान्तरानुसरणस्याऽऽवश्यकत्वा-दिति संक्षेपः ।

**अथ नीलं घटमानयेत्यादौ नीलादेर्घटादावन्वयोपगमे नीलपदोत्तरविभक्त्यर्थकर्मत्वादेः कुत्राऽन्वय इति चेत्, न कुत्रापि। विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते।**

---

तथा च स्वोत्तरसुपदभिन्नं यन्निराकाङ्क्षपदं तदुत्तरभिन्नत्व-स्वोत्तरत्वोभयसंबन्धेन नीलपदविशिष्टघटपदत्वरूपाऽऽकाङ्क्षाया उपगन्तव्यतयेतिभावः। **उपदर्शितेति**। नीलपदविशिष्टघटपदत्वरूपेत्यर्थः। वै० स्वोत्तरसुपदभिन्नपदानुत्तरत्व-स्वोत्तरत्वोभयसं०। **आकाङ्क्षानुसरणस्येति**। त्वदुक्ताऽऽकाङ्क्षानुसरणस्येत्यर्थः। **अप्रयोजकत्वादिति**। न च नीलादिपदविशिष्टस्वन्तघटपदत्वमेवाऽऽकाङ्क्षास्तु वै० स्वोत्तरसुपदभिन्ननिराकांक्षपदानुत्तरत्व-स्वोत्तरत्वोभयसं० इति वाच्यम्। स्वोत्तरसुपदभिन्नं यन्निराकांक्षपदं तदुत्तरंयत्तद्भिन्नत्वरूपस्य भेदकूटनिवेशेन गौरवाद् दुर्ज्ञेयत्वाच्च।

नीलं घटमानयेत्यादौ घटपदोत्तराऽम्विभक्तेरिव नीलपदोत्तराऽम्विभक्तिरपि कारकविभक्तिः, अनुशासनान्तराऽभावात्, कारकस्य क्रियान्वयित्वनियमेन तस्याः धातुसाकाङ्क्षत्वम्, एवं च कर्मत्वमेव तस्या अर्थः। अर्थान्तरबोधनेऽनुशासनविरहात्। तथा च नीलकर्मताकं घटकर्मताकं चाऽऽनयनमिति मीमांसकमते बोधः। तन्मतेनाऽऽशंकते। **अथेति**। **नीलादेर्घटादावन्वयोपगमे इति**। अभेदसंबन्धेन नीलादेर्घटादावन्वयोपगमे इत्यर्थः। **विभक्त्यर्थकर्मत्वादेः कुत्रान्वय इति**। अभेदसंबन्धेन नीलादेर्घटादावन्वयोपगमे-केवलकर्मत्वस्य क्रियायामन्वयो न संभवति, **प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति** व्युत्पत्तेः। नीलस्य कर्मत्वेन सहान्वये तु सर्वानुभवसिद्धस्य नीलघटयोरभेदान्वयबोधस्यापलापप्रसंगात्। नापि नीलस्योभयत्राऽन्वयः, **सकृदुच्चरित इति** न्यायविरोधात्। न च प्रकृत्यर्थे नीले एव कर्मत्वान्वयोस्तु तथा च न न्यायविरोधोपीति वाच्यम्। **संख्यातिरिक्तप्रत्ययार्थस्य प्रकृत्यर्थविशेष्यत्वनियमभंगापत्तेरिति** कुत्रान्वय इत्यस्य तात्पर्यं वोध्यम्। तथा च नीलकर्मताकं घटकर्मताकं चाऽऽनयनमिति बोधः। अभेदान्वयबोधस्तु तदुत्तरकालीनो मानस इति **मीमांसकमतमेव** ज्यायइति भावः। विशेषणवाचकपदोत्तरविभक्तेर्न कर्मत्वमर्थः सर्वानुभवसिद्धस्याऽभेदसंसर्गकशाब्दबोधस्यापलापप्रसंगात्। न वाऽनुभवविरुद्धं कर्मत्वद्वयमानमुचितं प्रतिभाति। न च न केवलंप्रत्ययः प्रयोक्तव्यः नापि केवलाप्रकृतिरित्यनुशासनाद्विभक्तेरावश्यकत्वे औत्सर्गिकी प्रथमैव किमिति न प्रयुज्यते इति वाच्यम्। अभेदसंसर्गकशाब्दबोधं प्रति समानविभक्तिकपदज्ञानस्य कारणतया समान-

**अभेद एव वा विशेषणविभक्त्यर्थः। अभेदस्य संसर्गतया भानं तु समासस्थले एव तत्र लुप्तविभक्त्यनुसन्धानं विनापि शाब्दबुद्धेरानुभविकत्वादिति वदन्ति।**

---

विभक्तिकत्वरूपाऽऽकाङ्क्षासंपादनार्थं द्वितीयाया एव आवश्यकत्वात्। तथा च साधुत्वार्थमेव विशेषणवाचकपदोत्तरविभक्तिरित्याशयेनाह। **न कुत्रापीति**। अन्वय इत्यनुषज्यते। तदुक्तं विभक्तिपदमित्यादिना। **साधुत्वार्थमेवेति**। एवकारेण कर्मत्वव्यवच्छेदः। तथा च तत्र यदि कर्मत्वाद्यर्थः प्रतीयेत तदा स्यादपि कुत्रान्वयः अत्र तु कर्मत्वस्य भानमेव नास्तीति भावः।

पदसाधुत्वार्थं प्रयुक्तस्य द्वितीयादेरर्थानवभासकत्वान्निरर्थकत्वमेवेत्यतः समाधानान्तरमाह। **अभेदएवेत्यादिना वदन्तीत्यन्तेन**। एवकारेण कर्मत्वस्य निरर्थकत्वस्य वा व्यवच्छेदः। तथा चाऽभेदस्य पदार्थतया प्रकारतयैव भानम्। एवमपि न कारकविभक्तिरिति हृदयम्। **समासस्थले एवेति**। तेननाऽभेदश्च प्रातिपदिकार्थे संसर्गतयैव भासते ग्रन्थविरोधः। समासस्थले अभेदोपस्थापक पदाभावादभेदस्य प्रकारतया भानासंभवात्, संसर्गस्याऽनुपस्थितस्यापि मानसंभवादिति भावः। ननु समासस्थलेपि विभक्त्यनुसन्धानेनाऽभेदोविभक्त्यर्थ एवास्तु इत्यत आह। **तत्रेति**। समासे इत्यर्थः। **लुप्तविभक्त्यनुसन्धानं विनापीति**।

अभेदोपस्थापकलुप्तविभक्तिप्रतिसन्धानविरहेपीत्यर्थः। सन्निहितप्रातिपदिकाल्लक्षणयाऽभेदस्योपस्थितत्वेपि नामार्थतया नामान्तरार्थे साक्षादन्वयाऽयोग्यतया समासस्थले नाऽभेदप्रकारकशाब्दबोधसंभव इति भावः। **शाब्दबुद्धेरानुभविकत्वादिति**। अभेदसंसर्गकशाब्दबोधोदयादित्यर्थः।

संसर्गतावादी शङ्कते। **अथेति**। **एतन्मते**। प्रकारतावादिमते। **भेदत्वावच्छिन्नाभाव इति**। भेदत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाव इत्यर्थः। तेन नीलभेदाभावस्यापि भेदत्वावच्छिन्नाभावस्वरूपस्य प्रसिद्धत्वेपि न क्षतिः। भेदत्वगतैकत्ववृत्तिप्रतियोगिताकाभाव इत्यर्थः। वृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसं०। स्वं प्रतियोगिता। विस्तरस्तु

**अथैतन्मते अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः, यदि च भेदप्रतियोगिकोऽभावस्तदा नीलं जलमित्यादिवाक्यस्यापि प्रामाण्यापत्तिः, जले द्वित्वादिना नीलभेदाद्यभावस्य सत्वात्। नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे नीलादिपदार्थानन्वयप्रसङ्गः।**

---

माथुरीगंगायाम्। **तदा**। अभेदस्य भेदत्वावच्छिन्नाभावरूपत्वे। **अप्रसिद्धिः**। भेदस्य केवलान्वयित्वादिति भावः। अप्रसिद्धिरित्यस्य अभावे भेदत्वावच्छिन्नप्रतियोगिताकत्वस्याप्रसिद्धिरित्यर्थः। तेन भेदत्वावच्छिन्नप्रतियोगिताकाभावप्रसिद्धिरूपप्रतियोग्यप्रसिद्धावपि न क्षतिः। भेदत्वावच्छिन्नप्रतियोगिताकत्वस्य भेदे एव प्रसिद्धत्वात्। एवं भेदनिष्ठप्रकारतायां प्रसिद्धस्य भेदत्वावच्छिन्नत्वस्याऽत्यन्ताभावीयप्रतियोगितायामप्रसिद्धिरित्यर्थोपि बोध्यः। **यदि चेति**। अभेदोयदीत्यर्थः। तथा च यत्किंचिद्भेदसत्वेपि तत्तद्व्यक्तित्वेन भेदाभावस्यापि सत्वान्नाऽप्रसिद्धिरिति भावः। नीलोघट इत्यादौ स्वनिष्ठप्रतियोगिताकत्वसंबन्धेन नीलस्य विभक्त्यर्थभेदाभावैकदेशेभेदेऽन्वयः। भेदस्य चोक्तसंबन्धेनाभावे ऽन्वयः! अभावस्य च स्वरूपसंबन्धेन घटेऽन्वयः। तथा च नीलविशिष्टभेदविशिष्टाऽभाववान् घट इति बोधः। **तदा**। अभेदस्य भेदप्रतियोगिकाभावरूपत्वे। **प्रामाण्यापत्तिरिति**। प्रमाकरणत्वापत्तिरित्यर्थः। ननु जले नीलभेदाभावविरहात्कथं प्रामाण्यापत्तिः, तत्र नीलभेदस्यैव सत्वादित्यत आह। **जले द्वित्वादिनेति**। नीलभेदघटोभयाभावस्य जले सत्वादित्यर्थः। भेदत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावत्वोक्तौ अप्रसिद्धिरुक्तैव। नचाऽभावे स्वप्रतियोगिवैयधिकरण्यनिवेशेनोभयाभाववारणम्, तस्य भेदरूपप्रतियोगिसमानाधिकरणत्वादिति वाच्यम्। तस्य स्वत्वघटितत्वेनाऽननुगमात्। न च तथापि भेदनिष्ठप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं निवेशनीयम्। एवं च पृथिवीवृत्तित्वविशिष्टभेदाभावस्यापि वारणमिति वाच्यम्। घटत्वेन भेदाभावमादाय प्रामाण्यापत्तेर्दुर्वारत्वात्। नचाऽभावे प्रतियोगिताविशिष्टान्यत्वं निवेशनीयम्। वै० स्वनिरूपकत्व स्वाश्रयसामानाधिकरण्योभयसं०। तथा च नोक्तप्रामाण्यापत्तिरिति वाच्यम्। प्रतियोगिताविशिष्टान्यत्वं हि प्रतियोगिताविशिष्टभेदवत्वं प्रतियोगिताविशिष्ट घटोभयभेदवत्वमपि तथा। तस्य द्वित्वादिना नीलभेदाभावेपि सत्वात्प्रामाण्यापत्तेर्दुर्वारत्वात्। यदि प्रतियोगिभूतवैशिष्ट्यनिष्ठावच्छेदकतायाः पर्याप्तिर्निवेश्यते तदा महागौरवम्। एवं नीलभेदः स्वाभाववत्वसंबन्धेन नीलत्वसमनियतत्वान्नीलत्वरूपः, तथा च नीलभेदाभावस्य नीलभेद इव नीलत्वमपि

**न च भेदप्रतियोगिकाभाव एव विभक्त्यर्थः । नीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम् ।**

---

प्रतियोगि तत्समानाधिकरण एव नीलभेदाभाव इति प्रतियोगिताविशिष्टान्योनीलभेदाभावोऽप्रसिद्धि एवेत्यपि बोध्यम् ।

**नीलभेदत्वावच्छिन्नाभावस्येति ।** नीलभेदत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्येत्यर्थः । तेननाऽप्रसिद्धिर्नवोक्तप्रामाण्यम् । नचैवं पीतोघटः-शुक्लोघट इत्यादौ पीतभेदत्वादितत्तद्धर्मावच्छिन्नप्रतियोगिताकाभावानां विभक्त्यर्थतया शक्त्यानन्त्यप्रसंग इति वाच्यम् । तदादिसर्वनामवदुपलक्षणीभूतेन प्रकृत्यर्थतावच्छेदकत्वेन नीलत्वपीतत्वादिधर्माननुगमय्य स्वप्रकृत्यर्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नाऽभावत्वस्यैक्याच्छक्तेरैक्यात् । **नीलपदार्थानन्वयप्रसंग इति ।** प्रकृत्यर्थनीलस्य विभक्त्यर्थैकदेशेनीले नाऽन्वयसंभवः । तद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणतया विशेष्यतावच्छेदके प्रकारतावच्छेदकभेदविरहात् । एकदेशान्वयप्रसंगाच्च । नापि नीलभेदे स्वनिष्ठप्रतियोगिताकत्वसंबन्धेन नीलस्यान्वयसंभवः उद्देश्यतावच्छेदकविधेययोरैक्यात् । प्रकृत्यर्थनीलस्याऽऽधेयतया विभक्त्यर्थनीलत्वेऽन्वये एकदेशान्वयविरहेपि आकाङ्क्षाविरहादिति भावः । तच्चाग्रेस्फुटीभविष्यति ।

शंकते । नचेति । **भेदप्रतियोगिकाभाव एवेति ।** प्रतियोगितासंबन्धेन भेदविशिष्टाभावः इत्यर्थः । तेन भेदरूपदार्थतावच्छेदकस्येत्यादिग्रन्थसंगतिः । एवकारोभेदत्वावच्छिन्नाभावं व्यवच्छिनत्ति—पूर्वोक्तिंद्रढयति च । नीलंजलमितिवाक्स्य प्रामाण्यापत्तिं निराकरोति । **नीलपदसमभिव्याहारादिति** नीलभेदत्वाच्छिन्नप्रतियोगितासंबन्धेन भेदविशिटोऽभावः प्रतीयते इत्यर्थः । अभावे सामान्यतः प्रतियोगितासंसर्गत्वस्य क्लृप्ततया समभिव्याहारबलेन नीलभेदत्वावच्छिन्नप्रतियोगितासंसर्गो बोध्यः । एवं च नीलत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावस्य जलेबाधितत्वान्न नीलं जलमित्यस्य प्रामाण्यापत्तिरिति भावः । अत्र नीलभेदत्वावच्छिन्नप्रतियोगितासंसर्गस्याऽऽकाङ्क्षया भानं न सभवतीत्याह । **पदार्थद्वयसंसर्गभानस्यैवाऽऽकाङ्क्षानियम्यत्वादिति ।** एवकारेणपदार्थतत्वावच्छेदकयोः संसर्गव्यावृत्तिः । भेदश्चात्र पदार्थतावच्छेदक एव । अभावपदार्थे तस्य यो नीलभेदत्वावच्छिन्नप्रतियोगित्वरूपः संसर्गस्तस्य व्यावृत्तिरिति भावः ।

**पदार्थद्वयसंसर्गस्यैवाऽऽकाङ्क्षानियम्यत्वान्नीलभेदत्वावच्छिन्नप्रतियोगितान्तर्भावेण वृत्तिं विना भेदरूपपदार्थतावच्छेदकस्याभावे तादृशसंबंधेन भानाऽसंभवात्। नैवम् भेदोऽभावश्च विशेषणविभक्तेरर्थः। विशिष्टलाभस्तु आकाङ्क्षावशात्। एतेन भेदे नीलादिपदार्थाऽन्वये एकदेशान्वयप्रसङ्ग इत्यपि निरस्तम्।**

**न च विशेषणविभक्तेरभेदार्थकत्वे नीलं घट इत्यादावप्यभेदान्वया-**

---

वृत्ति विनेति। शक्तिं विनेत्यर्थः। **तादृशसंबन्धेन**। नीलभेदत्वावच्छिन्नप्रतियोगित्वसंबन्धेन। **भानाऽसंभवादिति**। शक्तिस्तु भेदप्रतियोगिकाभावे एवेति भावः। समाधत्ते। **भेदोऽभावश्चेति**। तथा च तयोःसंसर्गस्याकाङ्क्षाभास्यतया नीलत्वावच्छिन्नप्रतियोगित्वसंबन्धेन नीलस्य भेदे नीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नप्रतियोगित्वसंबन्धेन भेदस्याऽभावेऽन्वयान्नोक्तस्थले प्रामाण्यापत्तिरितिभावः। **विशिष्टलाभस्त्विति**। नीलभेदत्वावच्छिन्नप्रतियोगिताकाभावलाभस्तु इत्यर्थः। **एतेन**। भेदेअभावे च पृथक्शक्तिस्वीकारेण। **निरस्तमिति**। भेदस्यापि पदार्थत्वादिति भावः। अत्र भेदस्याऽव्याप्यवृत्तित्वे कपिसंयोगवान् वृक्ष इत्यत्राऽभेदानुपपत्तिः, कपिसंयोगवद्भेदस्यैव सत्वादिति वाच्यम्। भेदस्याऽव्याप्यवृत्तित्वे भेदाभावस्याप्याव्याप्यवृत्तितया वृक्षे सत्वात्।

अथ नीलोघट इत्यादौ अभेदानुपपत्तिः, कालिकेन नीलभेदस्यैव घटे सत्वात्। न च भेदनिष्ठप्रतियोगितायाँ स्वरूपसंबन्धावच्छिन्नत्वं विवक्षणीमिति वाच्यम्। पर्वतीवन्ह्यभाववानितिप्रयोगस्य प्रामाण्यापत्तेः। वन्ह्यभाववद्भेदस्य वन्हिस्वरूपतया स्वरूपेण तदभावस्य पर्वते सत्वात्। न च भेदनिष्ठप्रतियोगितायां स्वरूप-संयोगान्यतरसंबन्धावच्छिन्नत्वं निवेशनीयमिति वाच्यम्। घटो घटत्वाभाववानिति प्रयोगस्य प्रामाण्यापत्तेः। घटत्वाभाववद्भेदस्य घटत्वरूपतयाऽन्यतरसंबन्धेन तदभावस्य घटे सत्वात्। न च समवायघटिताऽन्यतमसंबन्धेन सा निवेशनीयेति वाच्यम्। घटाभाववद्भूतलमितिप्रयोगस्यप्रामाण्यापत्तेः। घटाभाववद्भेदस्य घटस्वरूपतयाऽन्यतमसंबन्धान्तर्गतसमवायेन तदभावस्य भूतले सत्वादिति चेन्न। स्वप्रतियोगिमत्ताग्रहप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्धावच्छिन्नत्वस्य भेदनिष्ठप्रतियोगितायां निवेशनीयत्वात्। स च संबन्धः भावप्रकारकस्थले स्वरूपः। अभावप्रकारकस्थले यथायथं संयोगसमवायादिः।

पत्तिर्धान्येन धनवानित्यादौ तृतीयया ऽभेदबोधनात्, अभेदप्रकारकबोधे विरुद्धविभक्तिराहित्यस्याऽनपेक्षणादिति वाच्यम्। द्वि[1]तीयादिनाऽभेद-बोधने द्वितीयाद्यन्तविशेष्यकवाचकपदसमभिव्याहारस्य प्रयोजकत्व-मित्युपगमात्।

---

शंकते नचेति। विशेषणविभक्तेरभेदार्थकत्वेइति। विशेषणवाचकप-दोत्तरविभक्तेरभेदार्थकत्वे इत्यर्थः। अभेद एव वा विशेषणविभक्तेरर्थ इति मते इति यावत्। तृतीययाऽभेदबोधनादिति। तृतीयाविभक्तिजन्याऽभेदप्रकारक-बोधदर्शनादित्यर्थः। बोधश्च धान्याभिन्नधनवानित्याकारकः। अनपेक्षणा-दिति। समानविभक्तिकत्वस्याऽतन्त्रत्वादिति भावः।

विशेषणविभक्तेरभेदार्थकत्वे इत्यनेनाऽभेदस्य संसर्गतामते नीलंघट इत्यादौ नाऽभेदसंसर्गकबोधापत्तिरिति सूचितम्, तत्र समानविभक्तित्वस्य तन्त्रत्वात्। नचाऽभेदस्य संसर्गतामते धान्येन धनवानित्यादावपि अभेदसंसर्गकबोधस्यैव स्वीकर्तव्यतया संसर्गतामतेपि समानविभक्तिकत्वस्याऽ प्रयोजकतया तन्मतेपि नीलं घट इत्यादावापत्तिस्तुल्यैवेति "विशेषणविभक्तरभेदार्थकत्वे" इत्युक्तिर-संगतैवेति वाच्यम्। धान्येन धनवानित्यादौ अभेदप्रकारकबोधस्यैव संसर्ग-तावादिनापि स्वीकारात्। तथा च संसर्गतावादिमते नोक्तनियमव्यभिचारः। अभेदसंसर्गकबोधे एव विशेष्यविशेषणवाचकपदयोःसमानविभक्तिकत्वस्य तन्त्रत्वात्। एवं च नीलं घटइत्यादौअभेदप्रकारकबोधापत्तिरित्यत आह। द्वि[1]तीयादिनेति। विशेषणवाचकपदोत्तरद्वितीयादिनेत्यर्थ। प्रयोजकत्वमिति। तथा च समानविभक्तिकत्वं तन्त्रमित्यर्थः। अभेदसंसर्गक एव बोधस्तत्रेति भावः। तादृशबोधतात्पर्येण नीलं घट इति प्रयोगोऽसाधुरिति यावत्।

---

१ द्वितीयादिनेति। अथाऽऽदिना तृतीयापरिग्रहे धान्येन धनवान् प्रकृत्या चारुरित्यादिप्रयोगानुपपत्तिः, विशेष्यवाचकपदस्य विशेषणपदसमानविभक्तिकत्वा-भावात्। अपरिग्रहे तु सुन्दरेण घट इत्यादावभेदान्वयापत्तिरिति चेन्न। प्रकृत्यादिशब्दोत्तरतृतीयातिरिक्तातृतीयाविभक्तिरादिपदेन ग्राह्येति नानुपपत्तिः। न च प्रकृत्यादिगणस्याऽकृतिगणत्वात्सुन्दरेण घट इति प्रयोगापत्तिरिति वाच्यम्। यत्र सूत्रेण तृतीया न प्राप्ता प्रयोगश्च प्रामाणिकस्तस्य प्रकृत्यादिगणत्वम्, तत्र च तृतीयायाः साधुत्वार्थं भगवता कात्यायनेन वार्तिककृता प्रोक्तं प्रकृत्यादिभ्यः उपसंख्या-नमिति। सुन्दरेणघट इति न प्रामाणिकः प्रयोगः इति तत्र न तृतीयायाः संभवः। प्रयोगप्रामाण्येनाऽनुमीयते प्रकृत्यादिगणीयत्वमस्येति ध्येयम्।

**अथ प्रमेयो घट इत्यादौ प्रमेयत्वावच्छिन्नभेदाऽप्रसिद्ध्या लघुधर्मसमनियतगुरुधर्मस्याऽभावप्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमान् घटइत्यादावपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्धया विशेषणविभक्तेरभेदार्थकत्वाऽसंभवः। एवं नीलपटादिपरनीलादिपदघटितस्य नीलोघट इति वाक्यस्यापि प्रामाण्यापत्तिः, नीलत्वादिना पटादेर्भेदाभावस्य नीलघटादौ सत्वात्। एतेन विशेषणतावच्छेदकीभूतनीलत्व-प्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः, नीलत्वादेर्नीलत्वावच्छिन्नभेदाभावरूपतयाऽभेदार्थकत्वप्रवादोपपत्तिरित्यपि निरस्तम्।**

---

**अयंभावः।** विशेषणविभक्तेरभेदार्थे संकेतग्राहकं यत्रास्ति तत्राऽभेदप्रकारकोबोधो भवति। यथा कर्मत्वग्राहकं "कर्मणिद्वितीत्येत्यनुशासनम् प्रकृत्यादिभ्य उपसंख्यानमित्यपि तृतीया विधायकम्, अर्थान्तराऽयोग्यत्वात्, लाघवाच्चाभेदे संकेतग्राहकमिति धान्येन धनवानित्यादौ अभेदः प्रकारतया भासते। नीलं घट इत्यादौ विशेषणविभक्तेरभेदबोधकविधायकानुशासनाभावान्नाऽभेदो विशेषणविभक्तेरर्थः। किन्तु संसर्गविधया तस्य भानमिति ससर्गतावादिनामाशयः।

प्रमेयो घट इत्यत्र विभक्त्यर्थे भेदे प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रमेयस्याऽन्वयोवाच्यः स च न संभवतीत्याह। **प्रमेयत्वावच्छिन्नभेदाऽप्रसिद्ध्येति।** प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्ध्येत्यर्थः। भासमानवैशिष्ट्यप्रतियोगित्वस्य प्रकारतारूपत्वे प्रमेयवानितिज्ञानीयप्रमेयनिष्ठप्रतियोगितायाः, एवं संयोगेन प्रमेयाभावीयप्रतियोगितायाः प्रमेयत्वावच्छिन्नतया प्रमेयत्वावच्छिन्नप्रतियोगित्वस्य नाप्रसिद्धिरतो भेदपर्यन्तानुसरणम्। **अभावप्रतियोगितानवच्छेदकत्वेइति।** कम्बुग्रीवादिमानितिप्रतीत्यनुरोधेन-कम्बुग्रीवादिमत्वरूपधर्मस्य विषयतावच्छेदकत्वमावश्यकम् इत्यत उक्तम्, **प्रतियोगितानवच्छेदकत्वे इति।** भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमितिमते गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वात्प्रतियोगितायामभावीयत्व-

---

**शब्दरत्ने तु सर्वविभक्त्यपवाद इत्युक्तं—तथा हि–प्रकृत्या चारुरित्यत्र षष्ठ्याः, सुखेन यातीत्यत्र द्वितीयायाः, गोत्रेण गार्ग्यं इत्यत्र प्रथमायाः, बाधिकातृतीया। प्रकृतेश्चारुः-सुखं याति–गोत्रो गार्ग्यः इत्यादि प्रयोगादर्शनात्। प्रकृत्यादिगणशब्दाद्यत्रतृतीया तत्र न विभक्त्यन्तरसंभवः। दृश्यते च सुन्दरो घट इति प्रयोगः। अतो न तत्र तृतीया विभक्तिरिति संक्षेपः।**

नीलत्वादौ नीलत्वादिमतः स्ववृत्तित्वसंबन्धेनाऽन्वये आकाङ्क्षाविरहात्। यथाहि तद्विशिष्टे अधिकरणेऽआश्रयतया तदन्वयोऽनुभवविरुद्धः, तथा तद्धर्मेऽआधेतया तद्धर्मवदन्वयोपि। अत एव कर्मगच्छतीतिवाक्यस्य निराकाङ्क्षता।

---

विशेषणम्। दोषान्तरमाह। एवमिति। नीलत्वादिना पटादेर्भेदाभावस्येति। निरवच्छिन्ननीलत्वनिष्ठावच्छेदकताकनीलनिष्ठावच्छेदकताकपटनिष्ठप्रतियोगिताको यो भेदःनीलोनेत्याकारकस्तदभावस्येत्यर्थः। एतेन। नीलपटपरनीलघटितस्य नीलोघट इति वाक्यस्य प्रामाण्यप्रसङ्गेन। नीलत्व-प्रमेयत्वादि कमेवेति। एवकारेणाऽभेदव्यावृत्तिः। विशेषणविभक्त्यर्थ इति। विशेषणवाचकपदोत्तरविभक्त्यर्थं इत्यर्थः। तथा च प्रमेयो घट इत्यत्र प्रमेयवृत्तिप्रमेयत्ववान् घट इति बोधः। कम्बुग्रीवादिमान् घट इत्यत्र कम्बुग्रीवादिमद्वृत्तिकम्बुग्रीवादिमत्त्ववान् घट इति बोधः।

नीलत्वावच्छिन्नेति। नीलत्वावच्छिन्नप्रतियोगिताकेत्यर्थः। नीलभेदाभावरूपतयेति यावत्। भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वादिति भावः। अभेदार्थकत्वप्रवादोपपत्तिरिति। न च प्रमेयत्वावच्छिन्नभेदाऽप्रसिद्ध्या-प्रमेयत्वस्याऽभेदानात्मकतया प्रमेयोघट इत्यादिस्थलीयविशेषणविभक्तेरभेदार्थकत्वानुपत्तिरिति वाच्यम्। अभेदशब्दस्य क्वचिन्मुख्योर्थो यथा नीलोघटइत्यादौ, क्वचिद्गौणः यथा प्रमेयोघट इत्यादौ प्रमेयत्वमित्याशयात्। निरस्तमिति। उक्तवाक्यस्य प्रामाण्यापत्तेः। उपलक्षणमेतत्। नीलपटादिपरद्रव्यपदघटितस्य द्रव्यंघट इति वाक्यस्य प्रामाण्यापत्तिर्बोध्या। घटवृत्तिद्रव्यत्वस्य घटेपि सत्वात्। एतेन घटपदसमानाधिकरणस्य नीलपदस्य गुणिपरत्वेन नीलत्वमत्र नीलरूपमेव, एवं च कथं पटवृत्तिनीलत्वं घटे इति शंका समाहिता। यद्वा नीलत्वजातेः स्वाश्रयाश्रयत्वसंबन्धेन घटे पटे च सत्वाद् ग्रन्थसंगतिः। नीलत्वजात्यवच्छिन्नाधिकरणत्वनीलत्वं तच्चानुगतमधिकरणताया ऐक्यात्तद्विशिष्टपरमेव नीलपदमित्युक्तप्रयोगप्रामाण्यापत्तिर्बोध्या। विशेषणविभक्तेरभेदार्थकत्वे दोषान्तरमप्याह। नीलत्वादाविति। तथा च नीलोघट इत्यत्र विशेषणवाचकनीलपदोत्तरविभक्त्यर्थे नीलत्वे प्रकृत्यर्थस्य नीलत्ववतः स्ववृत्तित्वसंबन्धेनान्वयो वाच्यः, स च न संभवति आकाङ्क्षाविरहादित्यर्थः। आकाङ्क्षाविरहमेवोपपादयति। यथाहीत्यादिना। तद्विशिष्टे। नीलत्वविशिष्टे। अधिकरणे। नीले। आश्रयतया। समवा-

न चैवं संसर्गतामतेप्यनिस्तारः, नीलोघटइत्यादौ स्ववृत्तिनीलत्वादेः संसर्गतास्वीकारे उक्तस्थले प्रामाण्यापत्तेर्दुर्वारत्वादिति वाच्यम्। स्ववृत्ति-नीलत्वादेः स्वस्मिन्संबन्धतोपगमेन पटादिवृत्तिनीलत्वादेर्घटादौ घटादि-संबन्धताविरहेण तादृशातिप्रसंगाभावात्।

वस्तुतस्तु तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादिप्रकारेण-भासमानां तत्तद्व्यक्तीनां स्वस्मिन्संबन्धतया भासते इति न काप्यनुप-पत्तिः। संबन्धता च तस्य भेदप्रतियोगिताकाभावत्वेन तत्तद्व्यक्तिभेद-प्रतियोगिताकाभावत्वेन वा इत्यन्यदेतत्।

---

यादिसंबन्धेन। **तदन्वयः**। नीलत्वान्वयः। **अनुभवविरुद्धः**। नीलत्ववान्नी-लत्ववानितिबोधाभावात्। उद्देश्यतावच्छेदकविधेययोरैक्यादिति भावः। **तथा तद्धर्मे**। नीलत्वे। **आधेयतया**। स्ववृत्तित्वसंबन्धेन। **तद्धर्मवतः**। नीलत्ववतः। **अन्वयोपि**। अनुभवविरुद्ध इत्यनुवर्तते। नीलत्ववतिनीलत्व-मित्यनुभवाभावात्। एवं च प्रकृते विशेष्यवाचकनीलपदोत्तरविभक्त्यर्थ-नीलत्वे प्रकृत्यर्थनीलत्ववतः (नीलस्य) अन्वयो न संभवति आकाङ्क्षा-विरहादिति भावः। **अतएव**। तद्धर्मे तद्धर्मवत आधेयतयाऽन्वयविरहादेव। **निराकाङ्क्षतेति**। द्वितीयार्थे कर्मत्वे प्रकृत्यर्थस्य कर्मत्ववतः (कर्मणः) आधे-यतयाऽन्वय निराकाङ्क्षतेत्यर्थः।

ननु अभेदस्य संसर्गतामतेपि अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽ-प्रसिद्धिः, यदि भेदप्रतियोगिकाभावस्तदा नीलं जलमित्यस्य प्रामाण्यापत्तिः, अतो विशेषणतावच्छेदकीभूतनीलत्व-प्रमेयत्वादिकमेव संसर्गो वाच्यः, तथासति नीलपटपरनीलपदघटितस्य नीलोघट इतिवाक्यस्य प्रामाण्यापत्तिर्दु-र्वारैवेत्याशङ्कते। **नचेति**। **एवं**। नीलत्वादिना पटादेर्भेदाभावस्य घटादौ-सत्वेन। **उक्तस्थले**। नीलपटपरनीलपदघटितनीलोघट इति वाक्ये। **दुर्वारत्वादिति**। नीलपटवृत्तिनीलत्वस्य घटेपि सत्वादिति भावः। समाधत्ते। **स्ववृत्तिनीलत्वादेरिति**। स्ववृत्तित्वविशिष्टनीलत्वादेरित्यर्थः स्वं॰ नीलप-दार्थोनीलपटः। वृत्तित्वं विशेषणम्, नोपलक्षणम्। अतः स्ववृत्तित्वविशि-ष्टनीलत्वादिमत्वसंबन्धस्य स्वस्मिन्पटे एव सत्वाद् घटेऽसत्वाच्च नोक्तवाक्यस्य प्रामाण्यापत्तिः। प्रकारतावादिमते तु नीलत्वमात्रं विभक्त्यर्थः। वृत्तित्वं संसर्गः। न च प्रकार-संसर्गविधया भासमानयोर्विशेष्यविशेषणभाव इति। प्रकारताया नीलत्वत्वमात्रावच्छिन्नत्वे वृत्तित्वस्योपलक्षणत्वे प्रामाण्यापत्तेर्वार-णायोगादिति ध्येयम्।

**न चैवं विशेषणविभक्तेरभेदार्थकत्वमतेपि तत्तद्व्यक्तित्वावच्छिन्नाऽभेद एव विभक्त्यर्थो वाच्य इति वाच्यम्। तथासति अपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वस्य कथंचिदपि भानासंभवेन तदवच्छिन्नभेदाभावे शक्तिग्रहासंभवेनाऽपूर्वव्यक्तीनामभेदान्वबोधानुपपत्तेः। संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेनाऽनुपस्थितस्यापि संसर्गतया भानसंभवेन संसर्गतामतेऽनुपपत्त्यभावात्।**

---

विशेषणतावच्छेतकीभूतनीलत्वादेः संसर्गत्वे भेदस्य पारिभाषिकत्वापत्तिरतोभेदाभावत्वेनैव संसर्गतामाह। **वस्तुतस्त्विति**। **तत्तद्व्यक्तित्वावच्छिन्नभेदाभावएवेति**। अस्य संबन्धतया भासते इत्यनेनाऽन्वयः। नीलोघट इत्यत्र नील (घट) निष्ठतत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एवेत्यर्थः। एवकारेण नीलत्वावच्छिन्नप्रतियोगिताकभेदाभावव्यावृत्तिः। **तत्तद्व्यक्तीनां**। नीलादिव्यक्तीनां। **स्वस्मिन्**। घटे। तथा च तत्तद्व्यक्तिनिष्ठप्रतियोगितानिरूपिता घटादितत्तद्व्यक्तिनिष्ठानुयोगितानिरूपिता या संसर्गता तद्वान्तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव इत्यर्थः। नीलपटपरनीलपदघटितनीलोघट इति वाक्यस्यापि नीलपटपरनीलव्यक्तिगततत्तद्व्यक्तित्वावच्छिन्नभेदस्यैव घटे सत्वान्न प्रामाण्यापत्तिः। **तस्य**। तत्तद्व्यक्तित्वावच्छिन्नभेदाभावस्य। **अन्यदेतदिति**। तत्तद्व्यक्तित्वावच्छिन्नाभेदाभावनिष्ठसंसर्गता-भेदप्रतियोगिताकाभावत्वावच्छिन्ना-तत्तद्व्यक्तित्वावच्छिन्नभेदाभावत्वावच्छिन्ना वा भवतु उभयथापि उक्तप्रयोगप्रामाण्यापत्तिनिरासादिति भावः।

न च भेदत्वावच्छिन्नाभावत्वस्याऽप्रसिद्धिः, भेदप्रतियोगिताकाभावत्वस्य प्रसिद्धत्वेपि तद्व्यक्तिभेदघटोभयाभावादिसाधारणतया उक्तरीत्या नीलंजलमिति प्रयोगस्याऽप्रामाण्यापत्तिरिति वाच्यम्। भेदप्रतियोगिताकाभावत्वावच्छिन्नापि ससर्गता तत्तद्व्यक्तित्वावच्छिन्नभेदाभावनिष्ठैवेत्याशयात्। अतिप्रसक्तधर्मस्य प्रतियोगितानवच्छेदकत्वेपि विषयतावच्छेदकत्वं स्वीक्रियते। अत एव समवायेन द्रव्यवत्कपालमितिज्ञानेऽतिप्रसक्तमपि द्रव्यत्वं प्रकारतावच्छेदकं न तु घटत्वं, द्रव्यवत्कपालं- घटवत्कपालमिति प्रतीत्योरविशेषप्रसंगात्। इत्थं चाऽतिप्रसक्तेनापि भेदप्रतियोगिताकाभावत्वेनावच्छिन्ना संसर्गता विषयतारूपा तत्तद्व्यक्तित्वावच्छिन्नभेदाभावनिष्ठैव न तु नीलभेदघटोभयाभावनिष्ठेति न नीलंजलमित्यस्य प्रामाण्यापत्तिः।

**शंकते। नचेति। एवं।** तत्तद्व्यक्तित्वावच्छिन्नभेदाभावस्य संसर्गत्वे।

**न च विभक्त्यर्थेपि भेदे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नीलत्वादिना तत्तद्व्यक्तीनामन्वयः। तादृशभेदानामपि तत्तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽभावेऽन्वय उपेयते, तावतैव तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इति न किञ्चिदनुपपन्नमिति वाच्यम्। विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया अभावे प्रतियोगिनः संबन्धतया भानात्।**

---

**तत्तद्व्यक्तित्वावच्छिन्नाऽभेद एवेति।** तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभाव एवेत्यर्थः। एवकारेण विशेषणतावच्छेदकीभूतनीलत्वप्रमेयत्वव्यावृत्तिः। तेन नीलपटपरनीलपदघटितनीलोघट इति वाक्यस्य प्रामाण्यम्। समाधत्ते। **तथा सति।** तत्तद्व्यक्तित्वावच्छिन्नाऽभेदस्य विभक्त्यर्थत्वे सति। **अपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वस्येति।** नीलोघटो भविष्यतीत्यत्र तत्तद्व्यक्तित्वावच्छिन्नभेदाभावो नीलपदोत्तरसुविभक्त्यर्थः, तदेकदेशे तद्व्यक्तित्वे प्रकृत्यर्थस्य नीलादेरन्वयः। तथा च भविष्यतीया नीलव्यक्तिस्तन्निष्ठतत्तद्व्यक्तित्वस्येत्यर्थः। **कथंचिदपि भानाऽसंभवेनेति।** तद्व्यक्तित्वस्य विशेषधर्मतया सामान्यलक्षणारूपभासकविरहादिति भावः। **तदवच्छिन्नेति।** अपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वावच्छिन्नेत्यर्थः। **अपूर्वव्यक्तीनामभेदान्वयबोधानुपपत्तेरिति।** इदमुपलक्षणम्। विभक्त्येकदेशे तद्व्यक्तित्वेऽपूर्वव्यक्तीनामेकदेशान्वयोपि बोध्यः। अभेदस्य संसर्गतामते नानुपपत्तिरित्याह। **संसर्गज्ञानस्येति।** **अनुपस्थितस्यापीति।** अभेदस्येति शेषः। **अनुपपत्त्यभावादिति।** अपूर्वव्यक्तीनामभेदान्वयबोधे इत्यादिः।

अथ शाब्दबोधे तत्तद्व्यक्तित्वावच्छिन्नभेदाभावसंसर्गस्य संसर्गमर्यादया भानेपि "नीलोघट इति वाक्ये तत्तद्व्यक्तित्वावच्छिन्नभेदाभावसंबन्धावच्छिन्ननीलनिष्ठप्रकारताकबोधेच्छयोच्चरितमिति तात्पर्यज्ञानेऽवच्छिन्नत्वांशे प्रकारतयैव संसर्गस्य भानेन तद्घटिततात्पर्यज्ञाने तस्य हेतुत्वमावश्यकमिति चेन्न। नीलोघट इति वाक्यं नीलविषयताविशिष्टबोधेच्छयोच्चरितमिति तात्पर्यज्ञानस्य कारणत्वात्। वै० स्वनिरूपितसांसर्गिकविषयतानिरूपितघटविषयताकत्वसं०। एवं च तत्तद्व्यक्तित्वोपस्थितेर्नापेक्षेति ध्येयम्।

भेदोऽभावश्च विशेषणविभक्त्यर्थ इत्यभिप्रायेण पुनः शंकते। **नचेति।** **नीलत्वादिनेति।** तृतीयार्थो वैशिष्ट्यम्। नीलत्वादिविशिष्टतत्तद्व्यक्तीनामित्यर्थः। तेन कम्बुग्रीवादिमान् घट इत्यत्र कम्बुग्रीवादिमत्त्वरूपेण कम्बुग्रीवादि-

**अन्यथा विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेः। प्रतियोगिविशेषिताऽभावज्ञानं च विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इति दर्शनात्, केवलं विशेष्ये विशेषणमिति रीत्या न कश्चिदभ्युपैतीतिचेत्—सत्यम्।**

---

मद्व्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदेऽन्वयान्न गुरुधर्मावच्छिन्नप्रतियोगित्वाऽप्रसिद्धिनिबन्धनाऽनुपपत्तिः। प्रमेयोघटइत्यादौ प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वस्याऽप्रसिद्धावपि प्रमेयनिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धर्बोध्या। **तादृशेति**। तत्तद्व्यक्तिविशिष्टेत्यर्थः। **तावतैव**। उक्तरीत्याऽन्वयाङ्गीकारेणैव। **न किंचिदनुपपन्नमिति**। नाऽपूर्वव्यक्तीनामभेदान्वयबोधानुपपत्तिः। नापि नीलपटपरनीलपदघटितस्य नीलोघट इति वाक्यस्य प्रामाण्यापात्तिः, तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नीलविशिष्टभेदस्यैव घटे सत्वात्। आशङ्कां निरस्यति। **विशेषणतावच्छेदकावच्छिन्नाया एवेति**। विशेषणतावच्छेदकं नीलत्वं न तु नीलनिष्ठं तत्तद्व्यक्तित्वं तदवच्छिन्नाया एवेत्यर्थः। एवकारेण विशेषणतानवच्छेदकीभूततत्तद्व्यक्तित्वादेर्व्यवच्छेदः। **अभाव**। भेदे। **प्रतियोगिनः**। नीलस्य। **संबन्धतया भानादिति**। तथा च नीलत्वावच्छिन्नभेदाभावस्य घटे सत्वान्नीलपटपरनीलोघट इति वाक्यस्य प्रामाण्यापत्तिरितिभावः। **अन्यथा**। विशेषणतावच्छेदकीभूतनीलत्वावच्छिन्नप्रतियोगितायाः संसर्गत्वविरहे। विशेषणतानवच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितायाः संसर्गत्वे इति यावत्। **विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेरिति**। **अयंभावः**। बोधोद्विविधः। विशिष्टस्य वैशिष्ट्यमितिरीत्या–विशेष्ये विशेषणमितरीत्या च। आद्यः विशिष्टवैशिष्ट्यावगाहीत्युच्यते। तत्वं च विशेषण-विशेषणतावच्छेदकोभयप्रतियोगिकसंबन्धावगाहित्वम्। अभावस्थले अभावे विशेषणस्य प्रतियोगित्वं संबन्धः। विशेषणतावच्छेदकस्य स्वावच्छिन्नप्रतियोगित्वं संबन्धः। विशेषणे विशेषणतावच्छेदकवैशिष्ट्योक्तौ प्रतियोगितायां स्वसामानाधिकरण्य निवेशे वा घटवति घटोनास्तीति प्रतीत्यापत्तेः। विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणतावच्छेदकप्रकारकज्ञानं कारणम्। यच्च ज्ञानं विशेष्ये विशेषणं तत्रापि विशेषणमिति रीत्या जायते, तदुपलक्षितवैशिष्ट्यावगाहीत्युच्यते यथा गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति ज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वे भ्रमत्वम्। यतोऽत्र गुणे भासमानसत्तायां यद्विशेषणं गुणकर्मान्यत्वं तदपि गुणे भासते तच्च न गुणवृत्ति किन्तु द्रव्यधर्मिकमेवैतादृशं ज्ञानं प्रमा।

**अभेदस्तादात्म्यम्। तच्च स्ववृत्ति असाधारणोधर्मः। असाधारण्यं च एकमात्रवृत्तित्वम्। तच्च स्वसामानाधिरण्य स्वप्रतियोगिवृत्तित्वोभय-संबन्धेन भेदविशिष्टं यत्तदन्यत्वम्। इति एकमात्रवृत्तिधर्म एव विशेषण विभक्तेरर्थः।**

---

उपलक्षितवैशिष्ट्यावगाहि तु तद्ज्ञानं प्रमैव, यतोऽत्र गुणे भासमानसत्तायां गुणकर्मान्यत्वं भासते न तु गुणे। उपलक्षितवैशिष्ट्यावगाहिज्ञाने तु विशेषण-ज्ञानमेव कारणमिति लाघवं बोध्यम्। अभाववोधस्य विशिष्टवैशिष्ट्यावगा-हित्वे गमकमाह। **प्रतियोगिविशेषिताभावज्ञानं चेति।** प्रतियोगिना विशेषितं प्रतियोगिविशेषितम्, प्रतियोगिविशेषितं च तदभावज्ञानं चेति तत्। प्रतियोगिप्रकारकमित्यर्थः। **अभावज्ञानं चेति।** अभावप्रत्ययोहीत्यर्थः। मर्यादाम्, रीतिम्। **नातिशेते** न जहातीत्यर्थः। तथा च तद्विशिष्टवैशिष्ट्या-वगाहिबोधे तत्प्रकारकं ज्ञानं कारणमिति भावः।

अभावप्रत्ययस्थले तु अभावांशे प्रतियोगितासंबन्धेन प्रतियोगी भासते प्रतियोगिनि भासमानं घटत्वादिकमपि स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽ-भावांशे भासते अतो घटोनास्तीति प्रत्ययो विशिष्टवैशिष्ट्यावगाही भवति। घटत्वस्याभावे भानानङ्गीकारे ( विशेष्येविशेषणमितिभानाङ्गीकारे ) स्वसमाना-धिकरणप्रतियोगिताकत्वसंबन्धेन भानाङ्गीकारे वा घटवति घटोनास्तीति प्रत्य-यस्य प्रामाण्यापत्तिः, द्वित्वावच्छिन्नाभावस्य तत्र सत्वात्। इत्थं च प्रतियो-गिनः अभावे प्रतियोगितामात्रसंबन्धावगाहनेपि न द्वित्वावच्छिन्नत्वस्य भानम्, एकस्मिन्नभावे विशेषणतावच्छेदकीभूतघटत्वावच्छिन्नप्रतियोगिताकत्व, द्वित्वा-वच्छिन्नप्रतियोगिताकत्वयोर्विरोधात्। प्रकृते नीलपटपरनीलपदघटितनीलोघट इत्यादावपि विभक्त्यर्थे भेदे नीलःप्रतियोगितासंबन्धेन, नीलत्वं च स्वावच्छि-न्नप्रतियोगिताकत्वसंबन्धेन भासेत न तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्व-संबन्धेनेति उक्तप्रयोगस्य प्रामाण्यापत्तिर्दुर्वारैवेति ध्येयम्।

अथ केवलं विशेष्ये विशेषणमितिरीत्या बोधस्वीकारे नोक्तप्रयोगप्रामा-ण्यापत्तिरतआह। **न कश्चिदभ्युपैतीति।** अभावप्रत्ययस्थले तादृशबोधो न भवतीत्यर्थः। विशेषणे प्रकारीभूतधर्मस्याऽभावेन सहाऽसंवद्धत्वमिह कैवल्यम्। अभावप्रत्यये तन्न स्वीक्रियते इति भाव।

इदमत्रावधेयम् प्रतीतिकालेप्रतियोगिनि विद्यमानस्य प्रकारस्य विशेषण-

**वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते। तादृशधर्मस्तत्तद्व्यक्तित्वादिरूप एव। अपूर्वव्यक्तिनिष्ठतादृशधर्मस्य विशिष्य ज्ञातुमशक्यत्वेपि एकमात्रवृत्तिधर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव।**

---

त्वम्। तत्स्थलीयाऽभावप्रत्ययो हि विशिष्टवैशिष्ट्यावगाहीत्युच्यते। प्रतीतिकाले प्रकारस्याऽविद्यमानत्वे तु उपलक्षणत्वम्। तत्स्थलीयाऽभावप्रत्ययः उपलक्षितवैशिष्ट्यावगाहीत्युच्यते। अत एव गन्धप्रागभाववान्नास्ति रक्तदण्डोनास्तीत्यादौ गन्धप्रागभावत्व रक्तत्वादेरुपलक्षणता। अत एव च अभावबोधो विशिष्टवैशिष्ट्यावगाह्येव भवतीत्यनभिधाय विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इत्युक्तम्। **मर्यादा**·रीतिः, सा च विशेषण-विशेषणतावच्छेदकोभयप्रतियोगिकसंबन्धावगाहित्वलक्षणतां न जहातीत्यर्थः।

परन्तु तद्व्यक्तिर्नास्तीत्यभावीयप्रतियोगितावच्छेदकीभूततद्व्यक्तित्वे भासमानं घटत्वसमानाधिकरणोभयावृत्तित्वमुपलक्षणमेव अभावांशेऽप्रकारत्वादितिध्येयम्।

प्रकारतावादीसिद्धान्तयति–**अभेद** इति। **तच्च**। तादात्म्यं च। **स्ववृत्तीति**। स्वं प्रकृत्यर्थः-वृत्तित्वं संसर्गः-आकाङ्क्षया भासते, अनुपदमेव वक्ष्यति। **वृत्तिश्च तत्र संसर्गमर्यादया** भासते इति। **तत्र**। प्रत्ययार्थेऽसाधारणधर्मे। असाधारणधर्ममात्रं विभक्त्यर्थः। **एकमात्रवृत्तित्वमिति**। तच्च एकेतरावृत्तित्वे सति एकवृत्तित्वम्, यथाश्रुतमप्रसिद्धमेव, एकत्वस्य केवलान्वयित्वादित्यत आह। **तच्चेति**। एकमात्रवृत्तित्वं चेत्यर्थः **स्वं**-तद्घटभेदस्तद्वैशिष्ट्यं घटत्वे, तथाहि तद्घटभेदसामानाधिकरण्यस्य तद्घटभेदप्रतियोगिवृत्तित्वस्य च तत्र सत्वात् तदन्यत्वं घटगततद्व्यक्तित्वे। **एकमात्रवृत्तिधर्म एवेति**। तद्व्यक्तित्वरूपधर्म एवेत्यर्थः। एवकारेण सामान्यधर्मव्यवच्छेदः। वक्ष्यति च तादृशोधर्मस्तत्तद्व्यक्तित्वादिरूप एवेति।

अत्र स्वसामानाधिकरण्यमात्रोक्तौ स्वपदग्राह्यपटभेदसामाधिकरण्यस्य घटगततद्व्यक्तित्वे सत्वेन पटभेदवैशिष्ट्यमेवाऽतः **स्वप्रतियोगिवृत्तित्वनिवेशः**। तथा च स्वपदग्राह्यपटभेदप्रतियोगिनि पटे घटगततद्व्यक्तित्वस्य वृत्तित्वविरहाद्विशिष्टान्यत्वमक्षतमेव घटगततद्व्यक्तित्वे। तन्मात्रोक्तौ च स्वपदग्राह्यतद्व्यक्तिभेदप्रतियोगिनि तद्घटव्यक्तौ तद्व्यक्तित्वस्य वृत्तित्वाद् तद्व्यक्तिभेदवैशिष्ट्यमेव स्यादतः स्वसामानाधिकरण्यनिवेशः। तथा

अभेदस्य संसर्गतामतेपि एतादृशाऽनुगताऽभेदस्यैव तथात्वमुचितम्। तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशिष्य तथात्वे घटो न नील इति वाक्यजन्यबोधे प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ इति न्यायेन तादृशाननुगतसंबन्धावच्छिन्नप्रतियोगिताका अननुगता अभावा एव भासेरन्, न तु नीलवृत्तिरेकोऽभावः, तथा सति यत्किञ्चित्तादृशाभाव-तात्पर्येण प्रयुक्तस्य नीलेपि न नील इत्यादिवाक्यस्य प्रामाण्यं स्यात्।

---

च स्वपदग्राह्यतद्व्यक्तिभेदसामानाधिकरण्यविरहात्तद्व्यक्तिभेदविशिष्टान्यत्वं सुलभम्[1]।

---

१ अथ सामानाधिकरण्यघटकवृत्तित्वं स्वप्रतियोगिवृत्तित्वं च "वृत्तित्वद्वयं" संबन्धसामान्येन-स्वरूपसंबन्धेन-कालिकान्यसंबन्धेन वा। नाद्यः—तद्व्यक्तित्वेपि भेदविशिष्टान्यत्वविरहप्रसंगात्। तद्व्यक्तिभेदाधिकरणपटे कालिकेन तद्व्यक्तित्वस्य वृत्तित्वात्। न द्वितीयः—तद्घटभेदाधिकरणपटनिरूपितवृत्तित्वस्य स्वरूपेण तद्व्यक्तित्वे विरहेण तद्घटभेदविशिष्टान्यत्वसंभवेपि समवायेन वृत्तित्ववतां घटत्वद्रव्यत्वादीनां भेदविशिष्टान्यत्वापत्तिः। नचेष्टापत्तिः। नीलपटपरनीलोघट इति वाक्यप्रामाण्यापत्तिः। तत्तन्नीलव्यक्तिभेदविशिष्टान्यद्रव्यत्ववत्वस्य घटे सत्वात्। नापि तृतीयः—घटगततद्व्यक्तित्वस्यापि विशिष्टान्यत्वानुपपत्तिः, घटगततद्व्यक्तित्व विषयकज्ञानभेदविशिष्टत्वात्। घटगततद्व्यक्तित्वस्य स्वरूपेण तादृशभेदाधिकरण-वृत्तित्वात्, तादृशभेदप्रतियोगिवृत्तित्वाच्चेति चेन्न। भेदविशिष्टान्ये "असाधारधर्मे" प्रकृत्यर्थस्याधेयत्वसंसर्गेण न प्रकारत्वम्, किन्तु स्वरूपसंबन्धावच्छिन्नाऽऽधेयत्व-संबन्धेन, उक्तवृत्तित्वद्वयं स्वरूपेणैव, तथा च द्रव्यत्वादेरसाधारण्येपि शाब्दबोध-विषयत्वाऽसंभवादुक्तवाक्यस्य न प्रामाण्यापत्तिः, अथवा साधारणधर्ममात्र न विशेषणविभक्त्यर्थः, किन्तु स्वरूपेण वृत्तिमान् सः। तत्रापि द्रव्यत्वादेर्वारणात्।

अथ घटभेदाभावनिष्ठतद्व्यक्तित्वस्य घटभेदविशिष्टत्वादसाधारण्यानुपपत्तिः। तस्य घटभेदाधिकरणघटभेदाभाववृत्तित्वात्, घटभेदात्मकघटभेदाभावाभावप्रतियोगि-वृत्तित्वाच्च। न च स्वनिरूपितप्रतियोगितासामानाधिकरण्यं विवक्षणीयम्, तथा च घटभेदनिरूपितप्रतियोगितासामानाधिकरण्यविरहान्नानुपपत्तिरिति वाच्यम्। एव-मपि घटभेदत्वाभावनिष्ठतद्व्यक्तित्वस्य घटभेदविशिष्टत्वादसाधारण्यानुपपत्तिः, तस्य घटभेदसामानाधिकरण्यात्, घटभेदत्वरूपानुयोगितात्मकघटभेदत्वाभावाभावनिरूपित प्रतियोगितासामानाधिकरण्याच्चेति चेन्न। स्वनिरूपितप्रतियोगितावन्निरूपित-वृत्तितानवच्छेदकानुयोगिताविशिष्टान्यत्वनिवेशे तात्पर्यात्। वै० स्वावच्छिन्न-

इदन्तु बोध्यम् । विशेषणविभक्तेरभेदार्थकत्वे घटो न नील इत्यादौ नञा नीलाद्यभेदाभाव एव प्रत्याययिष्यते, न तु नीलादिभेदः, यादृशसमभिव्याहारस्थले येन संबन्धेन यत्र धर्मिणि येनरूपेण यद्वत्त्वं नञसत्त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृशसंबन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकतदभावस्य व्युत्पत्तिसिद्धत्वात् । प्रतियोग्यभावान्वयौ चेत्यादेरप्ययमेवार्थः । एवं च नञोभेदबोधकत्वं कुत्रापि न संभवति । अनीलंघटमानयेत्यादौ घटपदसामानाधिकरण्यानुरोधेनाऽनीलपदस्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात् ।

---

तादृशधर्मः । भेदविशिष्टान्यरूपोधर्मः । तत्तद्व्यक्तित्वादिरूपएवेति । तथा च नीलोघट इत्यत्र तद्व्यक्तित्वं विशेषणविभक्त्यर्थः । तत्र स्वरूपसंबन्धा-

---

वद्वृत्तित्व, स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितासामानाधिकरण्योभयसं० । आद्ये तत्तद्भेदनिरूपितप्रतियोगिताया इव तत्तद्भेदनिष्ठानुयोगित्वमपि अखण्डोपाधिरूपं भिन्नमेव तस्यैव परिग्रहणं न घटभेदत्वाभावाभावत्वरूपानुयोगिताया इति तन्निरूपितप्रतियोगितावद्वृत्तित्वेपि नाऽसाधारण्यक्षतिः । घटभेदनिष्ठानुयोगितानिरूपितप्रतियोगितावद्वृत्तित्वाभावात् । द्वितीये घटभेदत्वेन घटभेदत्वाभावनिष्ठप्रतियोगित्वेन निरूप्यनिरूपकभावविरहेण (किन्तु घटभेदत्वेन घटनिष्ठप्रतियोगित्वेनैव निरूप्यनिरूपकभावात्) घटभेदत्वरूपानुयोगितात्मकघटभेदत्वाभावाभावनिरूपितघटभेदत्वाभावनिष्ठप्रतियोगित्वस्य घटभेदत्वाभावे सत्वेपि नासाधारण्यक्षतिः ।

न च एकमात्रवृत्तित्वं एकत्वविशिष्टान्यत्वं यथाश्रुतमेवास्तु वै० स्वसामानाधिकरण्य स्वावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्योभयसं० । तच्च तद्व्यक्तित्वेऽप्रसिद्धमिति वाच्यम् । संख्यारूपैकत्वस्य गुणादावभावेन गुणगततद्व्यक्तित्वस्यैव तद्गतगुणत्वादिजातेरपि असाधारण्यापत्तेः । अपेक्षाबुद्धिविशेषविषयत्वस्य चाननुगमकाभावात् । एवं धर्मविशिष्टान्यत्वमपि उदक्षरत्वाद्धेयम् ।

अथ भेदस्तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकः, तादात्म्यं चोक्तोभयसंबन्धेन भेदविशिष्टान्यत्वमित्यन्योन्याश्रय इति चेन्न । उक्तोभयसंबन्धेनाऽभावविशिष्टान्यत्वस्य तादात्म्यरूपत्वात् । तद्व्यक्तित्वाभावमादाय समन्वयः । अभावत्वस्येव भेदत्वमपि अखण्डोपाधिः, तेनान्यत्वमादाय नोक्तदोषः ।

वच्छिन्नाधेयतासंबन्धेन प्रकृत्यर्थनीलस्याऽन्वयः। विभक्त्यर्थस्य च स्वरूपेण-घटेऽन्वयः। तथा च नीलवृत्तितद्व्यक्तित्ववान् घट इतिबोधः।

नीलोघटो भविष्यतीत्यत्र घटनिष्ठतद्व्यक्तित्वस्य कथंचिदपि भानाऽसंभवेन तद्व्यक्तित्वे शक्तिग्रहाभावात्तदनुपस्थित्यापि शाब्दबोधविषयत्वमुपपादयति। **अपूर्वव्यक्तिनिष्ठेति**। **तादृशधर्मस्य**। तद्व्यक्तित्वस्य। **विशिष्य**। तद्व्यक्तित्वत्वेन। **ज्ञातुमशक्यत्वेपीति**। तस्य भावित्वादिति भावः। **एकमात्रवृत्तिधर्मत्वादिनेति**। भेदविशिष्टान्यत्वेनेत्यर्थः। **सामान्यप्रत्यासत्तितः**। सामान्यलक्षणाप्रत्यासत्तितः। **सुग्रहत्वमेवेति**। तथा च भेदविशिष्टान्यत्वेन रूपेण निखिलैकमात्रवृत्तिधर्माः सुग्रहा इति भावः। **एतादृशानुगताऽभेदस्यैवेति**। भेदविशिष्टान्यस्यैवेत्यर्थः। **तथात्वं**। संसर्गत्वम्। एवकारव्यवच्छेद्यमाह। **तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्येति**। विशिष्य। तादृशकूटत्वेन। **तथात्वे**। संसर्गत्वे। **घटो न नील इति वाक्यजन्यबोधे इति**। अस्य तादृशाननुगतसंबन्धावच्छिन्नप्रतियोगिताकाऽननुगता अभावा एव भासेरन्नित्यनेनाऽन्वयः। नीलोघट इत्यत्र तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभाव एव नीलस्य घटे संसर्गः। नीलो न घट इत्यत्रापि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावसंबन्धावच्छिन्नप्रतियोगिताकनीलाभाव एव घटे बोध्येतेति भावः। तत्र हेतुमाह। **प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ इति न्यायेनेति**। अस्यार्थः "प्रतियोग्यभावान्वयौचेत्यादेरयमेवार्थ" इति ग्रन्थेन स्वयमेव वक्ष्यति। अक्षरार्थस्तुयोगः प्राप्तिः, क्षेमः लब्धपरिरक्षणम्। तुल्यौ योगक्षेमौ यस्येति व्युत्पत्तिः। तुल्यत्वं च न अर्थतत्संसर्गपरिहारेण सर्वथैकविषयत्वम्। एवकारव्यवच्छेद्यमाह। **नत्विति**। **नीलवृत्तिः**। नील घटवृत्तिः। **एकोऽभावः**। अनुगतोऽभावः। **अयंभावः**—नीलोघट इति वाक्यजन्यबोधे तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेन एका संसर्गता एवमपरेण तादृशाभावत्वेनाऽपरा एवं क्रमेणाऽनन्ताः संसर्गताः कल्पनीयाः नत्वेकेति यावन्तस्तद्व्यक्तित्वावच्छिन्नभेदाभावा भासेरन्, तावतामेकरूपेण संसर्गत्वाऽसंभवः। तत्तद्व्यक्तिभेदाभावकूटत्वेन संसर्गता न संभवति तद्व्यक्तिभेदाभावस्य तद्व्यक्तित्वरूपतया तादृशाभावकूटाधिकरणाऽप्रसिद्धेः। किन्तु अननुगतेनैव तत्तद्व्यक्तिभेदाभावसंसर्गेण नीलादिपदार्थानां घटादिपदार्थेष्वन्वयो वाच्यः, तदाऽऽपत्तिमाह—**नीलेऽपि न नील इति वाक्यस्य प्रामाण्यं स्यादिति**। उक्तन्यायेन तत्तद्व्यक्तिभेदाभावसंबन्धावच्छिन्नप्रतियोगिताकनीलाभावस्यैव प्रत्येतव्यतया स्वेतरनीलगततद्व्यक्तित्वघटितोक्तसंबन्धस्याभावेन

**इदन्तु तत्त्वम्। असमस्तनीलोघटइत्यादिस्थलेऽभेदस्य संसर्गतोपगमेपि गौरवविरहात्तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितम्।**

---

तत्संबन्धावच्छिन्नप्रतियोगिताकनीलाभावस्य सत्वेन तेषांचाऽभावानां चालनीयन्यायेन नीलघटादिषु सत्वेन च नीलेऽपि न नील इति प्रयोगापत्तिरिति भावः। भेदविशिष्टान्यत्वेन संसर्गत्वे तेन रूपेण निखिल"नीलगत"तद्व्यक्तित्वानामनुगमसंभवेन अनुगतसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावस्यैकतया तस्य नीलघटादावसत्वान्नापत्तिः। एवकारव्यवच्छेद्यमाह। **नत्विति। नीलादिभेद इति।** नीलादिभेदत्वेन नीलादिभेद इत्यर्थः। तेन नीलभेद नीलतादात्म्याभावयोरैक्येपि न क्षतिः। **व्युत्पत्तिसिद्धत्वादिति।** प्रकृते नञसत्वे नीलाऽभेदः प्रतीयते, नञ्सत्वे नीलाऽभेदाभावबोधस्य व्युत्पत्तिसिद्धत्वादित्यर्थः। **एवं च।** नञो भेदाभावबोधकत्वेच। **घटपदसामानाधिकरण्यानुरोधेनेति।** पदसामानाधिकरण्यं च तदर्थयोरभेदः। **उपगन्तव्यत्वादिति।** तथा च भेदमुख्यविशेष्यकोपस्थितिजनकत्वं नञो व्याहतमिति भावः। अभेदस्य संसर्गत्वं व्यवस्थापयति। **इदन्तु तत्त्वमिति। असमस्तनीलोघट इत्यादिस्थले इति।** अथात्र नीलोघट इत्यादिस्थले इत्यस्यैव सम्यक्त्वे असमस्तेत्युक्तिर्व्यर्थैवेति चेन्न। नीलोघट इत्यादिस्थले इत्यत्राऽऽदिपदेन नीलः पट इत्यादिसंग्रहवत्समासस्यापि संग्रहनिराकरणाय तदुपादानात्। संग्रहे तु "अभेदस्य संसर्गतया भानं तु समासस्थले एवेतिग्रन्थेन पौनरुक्त्यं स्यात्। समासे विशेषणविभक्तेरभावेन तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितमिति ग्रन्थाऽसंगतिश्च स्यात्। **अभेदस्य संसर्गतोपगमेपीति।** अपिना प्रकारतोपगमस्य समुच्चयः। तथा च अभेदस्य प्रकारतापक्षे वृत्तिकल्पनागौरवातिरिक्तगौरवविरहः तथा संसर्गतापक्षेऽपीत्यर्थः। **गौरवविरहादिति।** इदं च भिन्नविषयकप्रत्यक्षे शाब्दसामग्रीप्रतिबन्धकतालाघवम्। कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वमात्रस्य प्रवेशमाहत्य। अग्रेचाऽव्यवहितोत्तरत्वनिवेशस्य निर्युक्तिकत्वं दर्शितम्। तथाहि-कार्यकारणभावस्य प्रवृत्तिनिवृत्तिफलकत्वेन प्रवृत्तेश्चेष्टसाधनताज्ञानजन्यत्वेन इष्टसाधनताज्ञानस्य च फलविशेषाऽनिर्णयेनाऽसंभवात्तदधीनप्रवृत्त्यनुपपत्तेः। एवं च फलविशेषज्ञानार्थं कार्यतावच्छेदककोटौ विषयनिवेशस्यावश्यकत्वे क्व लाघवम्।

किन्तु यत्र गत्यन्तरविरहस्तत्रैव कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशः। अत एव तृणादिजन्यवन्हौ वैजात्यं कल्प्यते। न चैवं "कार्यता-

**न च यत्राभेदे विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र सर्वमते एवाऽभेदप्रकारकबोधस्य नीलोघट इति वाक्यादुत्पत्त्या तादृशसमभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वयं कल्पनीयमभेदस्य संसर्गतावादिनेति गौरवम्। एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्याभिन्नयोग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिवन्धकतायाः अप्याधिक्यमिति वाच्यम्। अभेदस्य संसर्गतावादिनोक्तस्थलेपि तत्संसर्गकबोधस्यैवोपगमादिति दिक्।**

---

वच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशान्नोक्ताऽऽकाङ्क्षाज्ञानयोः परस्परजन्यबोधे व्यभिचार इतिग्रन्थविरोध इति वाच्यम्। शाब्दबोधे वैजात्यं स्वीकर्तुं न शक्यते साङ्कर्यात्। तथाहि एकैकाऽऽकाङ्क्षाज्ञानाऽव्यवहितोत्तरशाब्दबोधे तत्तद्वैजात्याभावसामानाधिकरण्यात्, आकाङ्क्षाज्ञानद्वयोत्तरशाब्दबोधे तयोः सामानाधिकरण्याच्च। तत्र। उक्तस्थले। **वृत्तिकल्पनमनुचितमिति।** वृत्तिश्च पदेन सह पदार्थस्य संवन्धः। तथा च विशेषणविभक्तिर्निरर्थिका प्रतिपत्सितार्थप्रतिपत्त्यनुपपत्तिरहितवाक्यघटकत्वे सति पदसंस्कारकत्वात् विकरणादिवदित्यनुमानं वोध्यम्। नच विशेषणविभक्तिरर्थवती विभक्तित्वादितरविभक्तिवदित्यनेन सत्प्रतिपक्ष इति वाच्यम्। पक्षे व्यभिचारसन्देहेन समानवलत्वाभावात्। न च तवाऽनुमानेपि सोऽस्तीति वाच्यम्। वृत्त्यकल्पनलाघवतर्केण वृत्तिकल्पनागौरवप्रतिकूलेन निरासात्।

संसर्गतावादिमते कार्यकारणभावे प्रतिबध्यप्रतिवन्धकभावे च गौरवमाशङ्कते। **नचेति।** **यत्र।** नीलोघट इत्यादौ। **विशेषणविभक्तेः।** नीलपदोत्तरसुविभक्तेः। **शक्तिभ्रमः।** अभेदः सुपदवाच्य इति भ्रमः। **स्वारसिकलक्षणाग्रहो वेति।** विवक्षितार्थतात्पर्यानुपपत्तिप्रतिसन्धानमूला लक्षणा **स्वारसिकलक्षणा तादृशसमभिव्याहारज्ञानस्य।** नीलोघट इतिसमभिव्याहारज्ञानस्य। **द्विविधबोधे।** अभेदप्रकारके अभेदसंसर्गके च बोधे। **हेतुताद्वयं कल्पनीयमिति।** नीलस्य घट इत्यादौ अभेदप्रकारकस्य अभेदसंसर्गकस्य च बोधस्य वारणाय संसर्गतावादिमते तत्तद्बोधे आकाङ्क्षाज्ञानस्य कारणताद्वयम्। एवं योग्यताज्ञानमपि अभेदसंसर्गकनीलप्रकारकं स्वरूपसंसर्गकाऽभेद प्रकारकं चेति योग्यताज्ञानस्य कारणताद्वयमिति भावः। प्रकारतावादिमते तु एकविधमेवाऽऽकाङ्क्षाज्ञानं योग्यताज्ञानं च कारणम्।

अथ नीलोघट इत्याकाङ्क्षाज्ञानं विनापि श्यामः कलशः इत्याकाङ्क्षा-

**स्तोकं पचति मृदुपचतीत्यादौ विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेर्धात्वर्थपाकादौ अभेदान्वयोऽव्युत्पत्तिसिद्धः, तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्यापि अभेदान्वयबोधौपयिकाऽऽकाङ्क्षात्वमुपगम्यते। क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते। क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्र कर्मत्वातिदेशात्।**

---

ज्ञानात्तथाविधशाब्दबोधस्य जायमानत्वेन व्यतिरेकव्यभिचारवारणाय कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशस्याऽऽवश्यकत्वेपि विषयनिवेशे प्रयोजनाभावात् क्व कार्यकारणभावद्वयम्। न च सकलाकाङ्क्षाज्ञानानामेकरूपेणैव हेतुत्वम्। एवं चाऽव्यवहितोत्तरत्वनिवेशस्याऽनावश्यकतया कार्यकारणभावद्वैविध्यापत्तिः। अभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधं प्रति उपस्थितिविशिष्टज्ञानं कारणम्। वै०स्वविशिष्टसुत्वावच्छिन्नविषय[1]ताकत्वसं०। वै०स्वीयनीलत्वावच्छिन्नविषयताप्रयोजकवृत्तिनिष्ठविषयतानिरूपितविषय[2]तावच्छेदकतापर्याप्त्यधिकरणानुपूर्व्यवच्छिन्नविषयतानिरूपितसुत्वावच्छिन्नविषयतानिरूपितत्व, स्वकालीनघटत्वावच्छिन्नविषयताप्रयोजकवृत्तिनिष्ठविषयतानिरूपितविषय[3]तावच्छेदकतापर्याप्त्यधिकरणानुपूर्व्यवच्छिन्नविषयतानिरूपितत्वोभयसंबन्धेनेतिवाच्यम्। तत्तद्वर्णत्वेन पदार्थान्तरावगाहिवृत्तिज्ञानीयविषयतावच्छेदकत्वस्य भ्रमात्मकाऽऽकाङ्क्षाज्ञानीयविषयतावच्छेदकत्वस्य च विशिष्टानुपूर्व्यामभावादिति चेन्न। कारणाव्यवहितोत्तरत्वमात्रस्य कार्यतावच्छेदकत्वे प्रवृत्त्याद्यनुपपत्तिरित्यनुपदमेवोक्तत्वात्।

तथापि संसर्गतावादिमते प्रतिबन्धकताद्वयकल्पनमावश्यकमित्याह। **एवमिति।** **तादृशसमभिहारज्ञानघटितसामग्र्याइति।** नीलोघटइत्यादौ प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदसमभिव्याहारज्ञानघटितसामग्र्या इत्यर्थः। भिन्नयोग्यताज्ञानघटितत्वेन। अभेदसंसर्गकयोग्यताज्ञानघटितत्वेन अभेदे शक्तिभ्रमे-लक्षणाग्रहे वा अभेदप्रकारकयोग्यताज्ञानघटितत्वेन च। **तादृशेति।** भिन्नयोग्यताज्ञानघटितेत्यर्थः। **शाब्दसामग्रीप्रतिबन्धकताया इति।** द्विविधशाब्दसामग्रीनिष्ठप्रतिबन्धकताया इत्यर्थः। **उक्तस्थलेपीति।**

---

१ घटपदोत्तरसुत्वावच्छिन्नविषयता।

२ नीलत्वश्यामत्वाद्यवच्छिन्नविषयता।

३ घटत्वकलशत्वाद्यवच्छिन्नविषयता।

यत्र सुपदे अभेदस्य शक्तिभ्रमो लक्षणाग्रहो वा तत्रेत्यर्थः । तत्संसर्गकबोधस्यैवेति । अभेदसंसर्गबोधस्यैवेत्यर्थः । एवकारेणाऽभेदप्रकारकबोधव्यवच्छेदः तथा च न कारणतायाः प्रतिबन्धकताया वा आधिक्यमिति भावः । अथ सामग्रीसत्वात्कथं नाऽभेदप्रकारको बोधः । न चाऽभेदसंसर्गकशाब्दबोधं प्रत्येवोक्तसमभिव्याहारस्य कारणत्वादभेदप्रकारकबोधे आकाङ्क्षाज्ञानविरहात्सामग्र्येव नास्तीति वाच्यम् । फलस्वरूपाऽनिर्णये कार्यकारणभावस्य निर्णेतुमशक्यत्वात् । विपरीते विनिगमकाभावाच्चेति चेन्न । अभेदस्य प्रकारत्वे तत्संसर्गान्तरोपस्थापकाऽपेक्षाप्रसंगात् । एवं विशेषणविभक्त्याऽभेदोपस्थापने यदि अनुशासनं स्यात्तदा विशेषणविभक्तिरभेदे शक्ता भवेत् गृहीतशक्तिश्च स्यात् । किन्तु निर्विभक्तिकप्रयोगस्याऽसाधुत्वादर्थविशेषस्यानुपस्थापनाद्विशेष्यवाचकपदोत्तरविभक्तिपरतन्त्रा विशेषणविभक्तिस्थितिः नार्थोपस्थापनपरतन्त्रा विकरणागमादिवदिति ध्येयम् ।

ननु स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना वा पदेनोपस्थापितस्यैवाऽर्थस्याऽभेदः संसर्गमर्यादया भासते इत्युक्ताऽकाङ्क्षयोरेकस्या अप्यभावात्कथं स्तोकं पचतीत्यादौ अभेदाऽन्वयबोध इत्यतो नामार्थधात्वर्थयोरन्वयबोधौपयिकमाङ्क्षान्तरं निर्वक्ति । **स्तोकं पचतीति । विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापीति ।** तिङ्विभक्तिविरुद्धसुब्विभक्तिमत्पदोपस्थापितस्यापीत्यर्थः । **अभेदान्वयः ।** स्तोकाभिन्न पाकः—मृद्वभिन्नः पाकः इत्याकारकः । **व्युत्पत्तिसिद्धः ।** कार्यकारणभावमूलकः । **तदनुरोधेन च ।** अभेदान्वयबोधानुरोधेन च । **उपगम्यते इति ।** तथा च नामार्थधात्वर्थयोरभेदाऽन्वयबोधं प्रति द्वितीयान्तनामपदसमभिव्याहृतप्रत्ययान्तधातुपदत्वरूपाऽकाङ्क्षाज्ञानं कारणमिति भावः । प्रकृते चाऽभेदसंबन्धावच्छिन्नस्तोकत्वावच्छिन्नप्रकारतानिरूपितपाकत्वावच्छिन्नविशेष्यताशालिबोध प्रति द्वितीयान्तस्तोकपदसमभिव्याहृतपचतिपदत्वरूपाऽऽकाङ्क्षाज्ञानं कारणम् । ननु क्रियाजन्यफलशालित्वरूपकर्मत्वाभावात्कथं स्तोकपदाद् द्वितीया स्तोकं स्थीयते इत्यत्र फलस्यैवाऽभावादित्यत आह । **क्रियाविशेषणानामिति । कर्मत्वमिति ।** नपुंसकत्वमित्यपि बोध्यम् । **कर्मत्वातिदेशादिति ।** कर्मत्वोपचारादित्यर्थः । धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वस्य बाधितत्वादिति भावः[1] ।

---

१ फलितार्थमिदं क्रियाविशेषणानां कर्मत्वम्, न तु स्वतन्त्रानुशासनमिति प्राचीनवैयाकरणमते हि तादात्म्यफलतावच्छेदकान्यतरसंबन्धेन धात्वर्थतावच्छेद-

न चैवं स्तोकः पाकः इत्यादावपि द्वितीयाप्रसंगः, तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वात्, भावक्तां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनादिति वाच्यम्। क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात्। स्तोकं स्थीयते इत्यादौ आख्यातस्यापि वर्तमानत्वार्थकतया सार्थकत्वात्। न च वर्तमानत्वाद्यविवक्षायां द्वितीयानुपपत्तिरिति वाच्यम्। वर्तमानत्वादिविवक्षास्थल इव अर्थबोधस्वरूपयोग्यताप्रयोजकाऽऽकाङ्क्षाशक्तित्वेनैव तदविवक्षास्थलेऽपि भावाख्यातस्याऽर्थवत्त्वात्।

---

एवं। क्रियाविशेषणानां कर्मत्वे। क्रियायामेवेति। एवकारेण प्रातिपदिकव्यावृत्तिः। व्यावृत्तिं स्पष्टयति। भावक्तामिति। भावार्थककृत्प्रत्यया-

---

कफलवत्त्वमेव कर्मत्वम्। एवं च स्तोकमृद्वादेस्तादात्म्येन धात्वर्थे फलेऽन्वयात्कर्मणि द्वितीयेति। सूत्रानुशिष्टैव द्वितीया। न च सर्वत्र फलस्य धात्वर्थघटकत्वे सकर्मकत्वाऽकर्मकत्वयो व्यवस्थानुपपत्तिरिति वाच्यम्। फलसमानाधिकरणव्यापारवाचकस्याऽकर्मकत्वात्। फलव्यधिकरणव्यापारवाचकस्य सकर्मकत्वात्। उक्तं च।

फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृत इति।

एतेनाऽकर्मकधातोर्व्यापारमात्रवाचित्वेन तद्विशेषणस्तोकादिपदाद् द्वितीयानुपपत्तिरिति निरस्तम्। तन्मते फलावच्छिन्नव्यापारस्यैव तदर्थत्वात्। तन्न सम्यक्। स्तोकादेर्मुख्यकर्मत्वे स्तोकः पच्यते स्तोकः स्थीयते इति प्रयोगापत्तेः। न च तादात्म्यातिरिक्तसंबन्धेन धात्वर्थतावच्छेदकफलवत्कर्मण्येव लकारो भवतीति नोक्तप्रयोगापत्तिरिति वाच्यम्। विशेष्यविशेषणभावं मुक्त्वा कर्तृकर्मलकारघटितवाक्ययोरनुभवसिद्धस्य समानविषयकत्वस्यापलापत्तेः, तादात्म्यातिरिक्तसंबन्धेन फलाश्रयस्य कर्मत्वात्, तादात्म्यघटितान्यतरसंबन्धेन फलाश्रयस्य द्वितीयार्थत्वात्।

यदपि द्वितीयाऽऽकाङ्क्षासंपादिका, व्रैहेयमोदनं पचतीत्यादौ व्रैहेयादिपदवदिति। तदपि न। विना विशेषविधिं प्रातिपदिकार्थमात्रे प्रथमात्यागायोगाद् द्वितीयानुपपत्तेः। तस्मात् "ततोऽन्यत्रापि दृश्यते" इत्यनेन क्रियाविशेषणं कर्म भवतीति कल्प्यते। तेन तत्राऽतिदिष्टं कर्म भवति। अतिदेशस्य द्वितीयैव फलं कर्मप्रवचनीयसंज्ञावत्। अतिदेशस्थले च सर्वमुख्यकार्याभावान्न कर्मणि लकार इत्यलम्।

केचित्तु धातोरिव घञन्तस्यापि पाकादौ शक्तिरुपेयते। अन्यथा सुविभक्त्यर्थसंख्याकर्मत्वादीनां तत्र पाकादावन्वयानुपपत्तेः।

---

नामित्यर्थः। धातुनैवेति। एवकारे कृदन्त व्यावृत्तिः। तत्र। पाक इत्यत्र। तत्र। क्रियाविशेषणानां कर्मत्वमित्यनुशासने। सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वादिति। तथा च सार्थकप्रत्ययान्तधातूपस्थाप्या या क्रिया तद्विशेषणानां कर्मत्वमित्यनुशासनार्थः। स्तोकः पाक इत्यत्र घञो निरर्थकतया सार्थकप्रत्ययान्तधातूपस्थाप्यत्वाभावात्पाकक्रियाविशेषणेपि स्तोके न कर्मत्वम्, न वा द्वितीयेति भावः। ननु स्तोकं स्थीयते इत्यत्रापि द्वितीया न स्यात्तिङो भावार्थकत्वादित्यत आह। स्तोकं स्थीयते इति। सार्थकत्वादिति। सार्थकत्वं च वृत्तिमत्त्वम्। अर्थबोधस्वरूपयोग्यत्वं च अर्थबोधजनकतावच्छेदकाऽनुपूर्वीमत्वम्। स्तोकं स्थीयते इत्यादौ वर्त्तमानत्वविवक्षायां स्तोकाऽभिन्ना वर्तमानस्थितिरित्याकारकबोधजनकतावच्छेदकीभूता या स्थाधातूत्तरयगुत्तरतेत्वरूपाऽऽकाङ्क्षाया अविवक्षास्थलेऽपि सत्वमित्याह। तदविवक्षास्थलेपीति। वर्तमानत्वाद्यविवक्षास्थलेपीत्यर्थः। न चाऽऽकाङ्क्षासत्वे कथं न बोध इति वाच्यम्। विवक्षारूपतात्पर्याभावात्। पाक इत्यादौ पचधातूत्तरघञत्वरूपाऽऽकाङ्क्षा नार्थबोधजनकतावच्छेदिका, अकर्तरि च कारके संज्ञायामिति सूत्रसहकारेण करणाधिकरणयोश्च सूत्रेण करणे अधिकरणे वा संज्ञायां घञो विधानात्। न च घञो भाव एवार्थोऽस्तु इति वाच्यम्। तस्य धातुत एव लाभात्। धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते इति वचनात्। अनन्यलभ्यो हि शब्दार्थ इति न्यायात्। धात्वर्थपाकप्रत्ययार्थपाकयोर्विरूपोपस्थितत्वाभावेनाऽन्वयबोधाऽसंभवाच्चेति ध्येयम्। अर्थबोधजनकतावच्छेदकाऽऽकाङ्क्षाज्ञानीयविषयतावच्छेदकानुपूर्वीमत्वं सार्थकत्वम्। यद्रूपावच्छिन्ने यद्रूपावच्छिन्नाव्यवहितोत्तरत्वमर्थबोधजनकतावच्छेदकं तद्रूपावच्छिन्नान्तत्वं तद्रूपावच्छिन्नस्य सार्थकप्रत्ययान्तत्वमिति निष्कर्षः[1]।

---

१ स्वोत्तरवर्त्तिप्रत्ययसजातीयप्रत्ययप्रयोज्यविषयतानिरूपितस्वार्थविषयताकशाब्दबोधजनकतावच्छेदकानुपूर्वीरूपाऽऽकाङ्क्षाश्रयप्रत्ययान्तत्वमेव सार्थकप्रत्ययान्तत्वम्। साजात्यं च स्ववृत्ति आनुपूर्वीविशिष्टभावविहितत्वतदभावान्यतररूपेण। एवं च स्थाधातूत्तरवर्त्ति अविवक्षास्थलीयभावाख्यातते प्रत्ययसजातीयविवक्षास्थलीयभावाख्यातते प्रत्ययार्थवर्तमानविषयतानिरूपितस्थाधात्वर्थविषयकबोधजनकतावच्छेदकीभूतस्थाधातूत्तरयगुत्तरतेत्वरूपानुपूर्वीमत्प्रत्ययान्तत्वस्य स्थाप्रभृतौ सत्वाद्

प्रकृत्यर्थान्वितस्वार्थबोधवत्त्वं प्रत्ययानामिति व्युत्पत्तेः, धातूनां च सुब्विभक्त्यप्रकृतित्वात् ।

---

तिङ्समभिव्याहारे धातोरिव भावार्थककृत्समभिव्याहारे समुदायस्यैव धात्वर्थपाकादौ शक्तिस्वीकर्तॄणां केषांचिन्मतमाह । केचित्त्विति । अन्यथा । समुदायशक्त्यस्वीकारे । कर्मत्वादीनामिति षष्ठ्यर्थः । प्रतियोगित्वम्, पाकादौ इत्यत्र सप्तम्यर्थोऽनुयोगित्वम् , तथा च पाक इत्यत्र सुबर्थसंख्याप्रतियोगिकपाकानुयोगिकान्वयबोधानुपपत्तेरित्यर्थः । ननु पाकमित्यत्र द्वितीयार्थकर्मत्वप्रतियोगिकपाकानुयोगिकान्वयबोधाभाव इष्ट एवेति चेन्न । प्रतियोगित्वानुयोगित्वसाधारणविषयतामात्रस्य तदर्थत्वात् सुप्पदं तिङोऽप्युपलक्षकम् । एवं च पाकोऽस्तीत्यादौ तिङर्थकर्तृत्वादेः पाकादौ अन्वयबोधानुपपत्तिरपि द्रष्टव्या । तिङर्थकर्तृत्वादेः प्रथमाविभक्तिप्रकृत्यर्थे एवान्वयात् ।

तत्र । घञन्तस्थले । अन्वयबोधानुपपत्तेरिति । तथा च पाकमित्यादौ कर्मत्वविषयतानिरूपितपाकनिष्ठविषयताशालिबोधानुपपत्तेरित्यर्थः । अनुपपत्तौ हेतुमाह । धातूनामिति । तत्रापि हेतुमाह । प्रकृत्यर्थान्वितेति । स्वप्रकृत्यर्थान्वितेति तदर्थः । तेन पचधातोर्घञः प्रकृतित्वेपि न क्षतिः, तस्य स्वपदग्राह्यसुपोऽप्रकृतित्वात् ।

स्वनिरूपितप्रकृतित्वं च स्वनिष्ठविधेयतानिरूपितोद्देश्यतावत्वम् । प्रकृतिमुद्दिश्य प्रत्यया विधीयन्ते । इति उद्देश्यविधेयभावोऽनुभवसिद्धः ।

---

द्वितीयाया उपपत्तिः । अत्र स्वोत्तरवर्त्तिप्रत्ययपदेनाऽविवक्षास्थलीयप्रत्ययो ग्राह्यः । अन्यथाऽविवक्षास्थलीयप्रत्ययविषयताप्रयोज्यत्वाऽप्रसिद्धिः स्यात् ।

अथवा भावविहितत्वेन प्रतिसन्धीयमानवृत्तित्वविशिष्टा अर्थबोधजनकतावच्छेदकाकाङ्क्षाज्ञानीयविषयतावच्छेदिका याऽऽनुपूर्वी तच्छून्यत्वं, किंचिदर्थनिष्ठविषयत्वाऽप्रयोजकत्वोभयाभाववत्वं सार्थकप्रत्ययत्वम् । भावाख्यातस्थले वर्तमानत्वरूपार्थबोधजनकतावच्छेदकानुपूर्वीमत्वादुभयाभावः । ल्युडादीनां भावविहितत्वेन प्रतिसन्धानदशायामर्थाबोधकत्वान्नोभयाभाव इति ध्येयम् ।

एवं चाऽर्थबोधजनकतावच्छेदकीभूताऽऽकाङ्क्षाज्ञानीयविषयतावच्छेदकानुपूर्वीमत्प्रत्ययप्रकृतिधातुवाच्यक्रियानिष्ठविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकपदाद् द्वितीयेति नियमो बोध्यः ।

प्रकृत्येकदेशार्थेपि प्रत्ययार्थान्वयोपगमे पचन्तं पश्यतीत्यादितः पचमानं पश्यतीत्यादितश्च पाकादौ द्वितीयाद्यर्थकर्मत्वाद्यन्वयबोधप्रसंगात्। एकत्र विशेषणत्वेनोपस्थितस्याऽन्यत्रविशेषणत्वेनाऽन्वयस्याऽव्युत्पन्नतया तत्र प्रत्ययार्थविशेषणपाकादेर्न कर्मत्वे विशेषणतयाऽन्वय इति चेत्।

---

स्वं— प्रत्ययः। न च स्वपूर्ववर्त्तित्वमेव तदस्तु इति वाच्यम्। पटो घटश्च इत्यादौ पटादेरपि घटपदोत्तरसुप्प्रकृतित्वापत्तेः। स्वाव्यवहितपूर्वत्वोक्तौ आपत्तिवारणेपि धातुप्रातिपदिकयोः प्रकृतित्वानुपपत्तिः, विकरणाऽऽगमादिना प्रत्ययव्यवधानात्। एवं बहुगुड इत्यादौ गुडस्य प्रकृतित्वानुपपत्तिः, प्रत्ययपूर्वत्वाभावात्। एवमव्ययसर्वनाम्नोः अकच्प्रत्ययाऽव्यवहितपूर्वत्वाभावात्प्रकृतित्वानुपपत्तिः, अकच्प्रत्ययस्य टिपूर्वविहितत्वात्। एतेनाऽऽगमादिभिन्नस्वपूर्वपूर्वत्व-शून्यत्व-स्वाव्यवहितोत्तरत्वान्यतरवत्वं तत्। चैत्रः पचतीत्यादौ पचधातोः स्वादिप्रकृतित्वापत्तिर्न शक्या। स्वपूर्ववर्त्तित्वे सतीत्यनेन विशेषणीयत्वादिति निरस्तम्। विभक्तिप्रकृतित्वस्यैव प्राकृतत्वात्प्रत्ययसामान्यप्रकृतित्वस्यानुपयोगाच्च।[1]

---

१ न चैवमपि घटपदोत्तरविभक्तिप्रकृतित्वं पटपदे दुर्वारम्, स्वनिष्ठसुप्त्वावच्छिन्नविधेयतानिरूपितोद्देश्यतायास्तत्र सत्वादिति वाच्यम्। स्ववृत्तित्वविशिष्टविधेयतात्वावच्छिन्ननिरूपकतानिरूपितानिरूप्यतावदुद्देश्यतावत्वस्य तत्प्रत्ययप्रकृतावेव सत्वोपगमात् तस्यैव च विवक्षितत्वात्।

यद्वा स्वविधायकशास्त्रजन्यबोधीयस्वनिष्ठविषयतानिरूपिताऽव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वान्यतरविषयतानिरूपितविषयतावत्वमेव स्वं प्रकृतित्वम्। प्रातिपदिकादेरसुपो विधानात् प्रातिपदिकत्वं च क्विबन्ते एवातो निरुक्तविषयता धातौ नास्तीति नोक्तदोषः। स्वं—प्रत्ययः।

प्रकृत्यर्थत्वं च प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतासमानाधिकरणनिरूपकतानिरूपितनिरूप्यतावद्वृत्तिप्रयोज्यविषयत्वम्। [ पदनिरूपिताशक्तिरित्यस्य पदनिष्ठनिरूपकतानिरूप्यतावती शक्तिरित्यर्थः ] यथा घटः इत्यादौ सुप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतासमानाधिकरणनिरूपकतानिरूपितनिरूप्यतावती शक्तिः "घटो घटपदनिरूपितवाच्यतावानित्याकारिका" तत्प्रयोज्यज्ञानविषयत्वस्य घटे सत्वाद् घटस्य प्रकृत्यर्थत्वम्। पाचक इत्यादौ सुप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताप्रातिपदिकनिष्ठा प्रातिपदिकत्वं च तत्तद्वर्णोत्तरतत्तद्वर्णत्वम्, तथा च प्रकृतिघटकच-र

ननु समुदाये शक्त्यनंगीकारेपि पचधातूपस्थाप्यपाकेन सहैव एकत्वा-न्वयान्न पाक इत्यादावनुपपत्तिः। धातूनां सुब्विभक्त्यप्रकृतित्वान्नाऽन्वयसंभव इति तु न शंक्यम्। प्रकृत्यर्थान्वितत्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तौ प्रकृत्यर्थत्वस्य प्रकृतिजन्यबोधविषयत्वरूपस्य प्रकृत्यर्थप्रकृत्येकदेशार्थसा-धारणत्वादित्याशकां निरस्यति। प्रकृत्येकदेशार्थेपीति। प्रकृत्यर्थे इव प्रत्य-यान्तपचधात्वर्थेपीत्यर्थः। प्रत्ययार्थान्वयोपगमे इति। तथा च प्रकृतितदे-कदेशार्थाऽन्यतरान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तौ तात्पर्योपगमे इत्यर्थः। पाकादौ द्वितीयार्थकर्मत्वाद्यन्वयबोधप्रसंगादिति। पाकादेः द्वितीयार्थकर्मत्वेऽन्वयबोधप्रसंगादित्यर्थः। सिद्धान्ते पाककर्तुः कर्मत्वेऽन्वयो भवतीति बोध्यम्। शंकते। एकत्रेति। शत्रर्थकर्त्तरीत्यर्थः। विशेषणत्वेनोप-

---

मवर्णनिष्ठा उद्देश्यताऽस्ति। एवं च पाचकपदघटकाऽकपदनिरूपिता या कर्तृ-निष्ठवृत्तिः तन्निष्ठनिरूप्यतानिरूपकताऽकपदे "अकपदत्वं अकारोत्तरककारोत्तर-अत्वम्। एवं च निरूपकताया अन्तिमवर्णे सत्वादुद्देश्यतासामानाधिकरण्या तादृश-निरूपकतानिरूप्यतावती या वृत्तिः "अकपदवाच्यः कर्ता" इत्याकारिका तत्प्रयोज्य-ज्ञानविषयत्वस्य कर्तृरूपार्थे सत्वात्, विशिष्टशुद्धयोरैक्यात्पाककर्तुः प्रकृत्यर्थत्वम्, न तु धात्वर्थमात्रस्य धातुवृत्तिनिष्ठनिरूप्यतानिरूपितनिरूपकतायास्तादृशोद्देश्यता-सामानाधिकरण्याभावात् नातिप्रसंगः।

न च प्रकृत्यर्थत्वं प्रकृतिवृत्त्युपस्थाप्यत्वमेवास्तु इति वाच्यम्। पाचकादिकृ-दन्तनाम्नां वाक्यतया वृत्तिविरहेण तदुपस्थाप्यार्थाऽप्रसिद्धेः। पाचकघटकाऽकप्रत्यय-वृत्तिमादाय प्रकृत्यर्थत्वोपपादने तु तद्घटकधातुवृत्तिमादाय धात्वर्थेपि प्रकृत्यर्थ-त्वापत्तेश्च।

न च भावार्थककृदन्तानामिव पाचकादिशब्दानामपि समुदाये शक्तिरस्तु इति वाच्यम्। एकैककृत्समभिव्याहृतानामनन्तधातुघटितकृदन्तसमुदायानुपूर्वीणां धातु-भेदेनाऽनन्तत्वेन तदवच्छिन्नानामनन्तशक्तिकल्पने गौरवात्, लाघवेन कृदन्तस्थलेऽपि धात्वर्थभागभानस्य क्लृप्तशक्तिकधातुत एव स्वीकरणीयत्वात्, अनुशासनबलेन कर्त्रादौ कृतां शक्तेरभ्युपगमाच्च। भावविहितकृतामपि भावरूपार्थः कुतो न स्वीक्रियते इति न शंक्यम्। दत्तोत्तरत्वात्।

अथ प्रकृतिप्रयोज्यशाब्दबोधविषयत्वमेव प्रकृत्यर्थत्वमस्तु इति चेन्न। पचन्तौ इत्यादौ शत्रन्तसमुदायप्रयोज्यविषयत्वस्य धात्वर्थेपि सत्वात्तस्यापि प्रकृत्यर्थ-त्वापत्तेः।

स्थितस्य । पाकस्य । अन्यत्र । कर्मत्वे । अव्युत्पन्नतयेति । सकृदुच्चरित इति न्यायादिति भावः । तत्र । पचन्तं पश्यतीत्यादौ । प्रत्ययार्थविशेषण-पाकादेरिति । शतृप्रत्ययार्थकर्तृविशेषणपाकादेरित्यर्थः ।

अथ विशेषणत्वेनोपस्थितस्येति न युक्तम्, पचन् पचमानेत्यादीनां वाक्यतया विशिष्टे शक्तिविरहेण न शत्राद्यर्थकर्तृविशेषणतया पाकस्योपस्थितिः किन्तु विशेष्यतयैव पाकस्योपस्थितिरिति पाकादीनामेकत्र विशेषणत्वेनोप-स्थितत्वविरहादिति चेत् । सत्यम् । अयमाशयः । एकत्रेति त्रलर्थो विशे-ष्यत्वम्, तस्य विशेषणत्वेऽन्वयः । तृतीयार्थः प्रयोजकत्वम्, तस्योपस्थिति-विषयतायामन्वयः । उपस्थितत्वं चोपस्थितिविषयत्वम् । अन्यत्रेति त्रलर्थः पूर्ववत् । तृतीयार्थः संबन्धित्वम् । तथा च एकनिष्ठविशेष्यतानिरूपितप्रकार-ताप्रयोजकोपस्थितीयविषयतावतावतोऽपरनिष्ठविशेष्यतानिरूपितप्रकारतायोगो न भवतीत्यर्थः । तथा च शत्राद्यर्थकर्तृनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोज-कोपस्थितीयविशेष्यतावतः पाकस्य कर्मत्वनिष्ठविशेष्यतानिरूपितशाब्दबोधीय-प्रकारतायोगो न स्यादिति । अत एव घटो जातिरित्यादयो न प्रयोगाः । घटे विशेषणत्वेनोपस्थितस्य घटत्वस्य जातावभेदेन विशेषणत्वायोगात्[1] ।

---

१ अथ विक्लित्तिं जानानस्तण्डुलं पचतीत्यादौ विक्लित्यनुक्तव्यापारस्य पाकपदार्थतया व्यापारविशेषणत्वेनोपस्थितताया विक्लतेः कर्मत्वविशेषणत्वादुक्तव्यु-त्पत्तिविरोध इति चेन्न । विषयताविशिष्टोपस्थितिविषयता—स्वविशिष्टान्यविशे-ष्यतानिरूपितप्रकारताप्रयोजकत्वाभाववतीत्यत्रोक्तव्युत्पत्तेस्तात्पर्यात् । विषयता वै० स्वतादात्म्य—स्वविशिष्टत्वोभसं० । स्वं पचधातुपदजन्य उपस्थितीयविक्लित्ति-निष्ठाप्रकारताख्यविषयता । स्ववै० स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयता-प्रयोज्यविशेष्यतानिरूपितत्व, स्वप्रयोज्यप्रकारतानिरूपितविशेष्यताप्रयोजकत्वस्वरू-पयोग्यपदघटितवृत्तिघटकपदप्रयोज्यत्वान्यतरसं० ।

स्वविशिष्टान्यत्वघटकस्ववै० स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयता-प्रयोज्यत्व, स्वप्रयोजकपदघटितवृत्तिघटकपदप्रयोज्यत्वान्यतरसं० ।

स्वं पचधातुजन्योपस्थितीयविषयतातद्विशिष्टा सैव, तत्र स्वपदग्राह्यतादृशविषय-ताप्रयोजकं विक्लित्यवच्छिन्नव्यापारः पचधातुवाच्यः इति वृत्तिज्ञानं तदीयवृत्तिनिष्ठ-विषयतानिरूपितव्यापारनिष्ठविषयताप्रयोज्यव्यापारविशेष्यतानिरूपितत्वस्य "अन्य-तरान्तर्गतस्य" स्वतादात्म्यस्य च सत्वात् । तादृशविक्लित्तिविषयताविशिष्टान्यत्वं कर्मत्वविशेष्यतायां नास्तीति नानुपपत्तिः । पचन्तं पश्यतीत्यादौ च उपस्थितीयपच-

तथापि पाकादिविशेषणतया सुबर्थसंख्याया अन्वयसंभवात् । यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितं पाकादेश्च तदबाधितं तत्र पचन्तौ पश्यति पचमानौ पश्यतीति प्रयोगापत्तेर्दुर्वारत्वात् । धातूपस्थाप्यार्थे सुबर्थान्वयबोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामुपगम्यैतादृशातिप्रसंगवारणे च गौरवात् ।

---

प्रकृत्येकदेशार्थपाकस्य विशेष्यत्वं दुर्वारमिति समाधत्ते । तथापीति । उक्तव्युत्पत्त्या शत्रर्थकर्तृविशेषणपाकस्याऽन्यत्र कर्मत्वादौ विशेषणतयाऽन्वयबोधाऽसंभवेपीत्यर्थः । अन्वयसंभवादिति । एकत्वविशिष्टपाकानुकूलकृतिमन्तं पश्येत्यन्वयबोधप्रसंगादित्यर्थः । न चेष्टापत्तिरित्याह । यत्रेति । स्थलविशेषे इत्यर्थः । द्वित्वादिकं बाधितमिति । एक एव पाककर्तेति भावः । तदबाधितमिति । द्वित्वादिकमबाधितमित्यर्थः । द्वौ पाकौ इति भावः । तत्र । स्थलविशेषे । दुर्वारत्वादिति । पाककर्तृरूपप्रकृत्यर्थैकदेशे पाके द्वित्वसंख्याया अन्वयसंभवादिति भावः । उपगम्येति । धात्वर्थविशेष्यकसुबर्थप्रकारकबोधं प्रति तत्तद्धातूत्तरप्रत्ययविशेष्यककिंचिदर्थविषयकबोधेच्छयोच्चरितत्वप्रकारकज्ञानस्य प्रतिबन्धकतां स्वीकृत्येत्यर्थः । एतादृशातिप्रसंगवारणे चेति । तथा च पचन्तौ पश्येत्यादौ शतृप्रत्ययधर्मिककर्तृपरत्वज्ञानस्य

---

धात्वर्थपाकनिष्ठविषयतावैशिष्ट्यस्य अन्यतरघटकद्वितीयसंबन्धेन—तादात्म्येन च पाकविषयतायां सत्वात् । तथाहि—स्वपदग्राह्योपस्थितीयपाकविषयताप्रयोज्यप्रकारतानिरूपितविशेष्यताप्रयोजकशतृपदघटितवृत्तिघटकपाकपदप्रयोज्यत्वसत्वात् । तादृशविषयताविशिष्टान्यकर्मत्वनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्यैव सत्वान्नापत्तिः । उपस्थितीयनीलादिविषयतायाः स्वविशिष्टान्यघटनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाद् व्यभिचारवारणाय विषयतावैशिष्ट्यं निवेशितम् ।

उपस्थितावेवास्वविशिष्टविषयताविशिष्टप्रकारताप्रयोजकत्वाभावो निवेशनीयः । स्ववै० स्वनिरूपितत्व-स्वविशिष्टत्वोभयसं० । स्ववै० स्वजनकवृत्तिज्ञानीयविषयताप्रयोज्यविशेष्यतानिरूपितत्व—स्वप्रयोजकपदघटितवृत्तिघटकपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वान्यतरसं० । स्वं—उपस्थितिः । प्रकारतायां विषयतावै० स्वसामानाधिकरण्य—स्वविशिष्टान्यविशेष्यतानिरूपितत्वोभयसं० । विशिष्टान्यत्वघटकवै० पूर्ववत् । स्वं—विषयता । स्वप्रयजोकपदघटितत्वं च स्वघटितवृत्त्यघटितत्वे सति स्वघटितत्वम् । तेन राजपुरुषधनमित्यादौ राज्ञो धनांशेऽन्वयेपि न क्षतिः । राजपुरुषात्मकवृत्तिघटितवृत्तिघटकत्वाद्धनपदस्य ।

एवं शोभनं पचनमित्यादौ धातुमात्रेण पाकाद्युपस्थितौ च तत्र शोभनाद्यभेदाऽन्वयबोधानुपपत्तिः। विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वात्। प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे ल्युडादेरधिकरणपरत्वेपि तथाविधान्वयबोधापत्तेः। कस्यचित्प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात्।

---

प्रतिबन्धकत्वान्नाऽऽपत्तिरिति भावः। पाकः इत्यादौ घञो निरर्थकत्वेन घञ्प्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानविरहात्पाकादौ सुबर्थान्वयबोधः[1]।

दोषान्तरमाह। एवमिति। भावविहितल्युडन्तसमुदायस्य शक्त्यकल्पने इत्यर्थः। धातुमात्रेणेति। मात्रपदेन। ल्युटो व्यावृत्तिः। तत्र। धात्वर्थपाके। अभेदान्वयबोधानुपपत्तौ हेतुमाह। विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वादिति। पाकस्येति शेषः। विशेषणविभक्तिः। विशेषणवाचकपदोत्तरविभक्तिः प्रकृते शोभनपदोत्तरसुविभक्तिः तत्सजातीयविभक्तिः—पचनपदोत्तरसुविभक्तिः तत्प्रकृतिभूतपचनानुपस्थाप्यत्वादित्यर्थः। पचधातुनैवोपस्थाप्यत्वादिति भावः। स्वसमानविभक्तिकपदोपस्थापितयोरेवार्थयोरभेदः। संसर्गमर्यादया भासते इति नियमादिति यावत्। ननु स्वसमानविभक्तिकपदविशिष्टपदोपस्थापितयोरेवाऽभेदः संसर्गमर्यादया भासते इति तदर्थः। वै० स्वतादात्म्य-स्वघटकत्वान्यतरसं०। प्रकृते पचनपदघटकत्वस्य पचपदे सत्वान्नोक्तानुपपत्तिरत आह। प्रकृत्येकदेशसाधारणेति। अस्य प्रकृतित्वेऽन्वयः। तादृशेति। विशेषणविभक्तिसजातीयेत्यर्थः। तत्र।

---

१ न च यत्र राजद्वयसंबन्धी एकः पुरुषः तत्र राजपुरुषौ पश्येति प्रयोगापत्तिः राजपदार्थस्य धातूपस्थाप्यत्वाभावेन प्रतिबध्यतावच्छेदकानाक्रान्तत्वाद्राजपदार्थे द्वित्वान्वयबोधसंभवादिति चेन्न। तत्तत्पदार्थे सुबर्थान्वयबोधं प्रति तत्तत्पदाव्यवहितोत्तरसुभिन्नपदधर्मिकतत्तत्पदार्थान्वितार्थपरत्वज्ञानस्य प्रतिबन्धकत्वे तात्पर्यात्। घट इत्यादौ घटे एकत्वान्वयबोधं प्रति सुधर्मिककत्वान्वयबोधपरत्वज्ञानस्य प्रतिबन्धकत्ववारणाय सुभिन्नेति। घटपटावित्यादिद्वन्द्वे घटे विभक्त्यर्थद्वित्वान्वयबोधार्थं तत्तत्पदार्थान्वितेति। न चैवमर्द्धकायादिपूर्वपदार्थप्रधानसमासस्थले विभक्त्यर्थान्वयानुपपत्तिः। अर्द्धपदाव्यवहितोत्तरकायपदधर्मिककिंचिदर्थपरत्वज्ञानरूपप्रतिबन्धकसत्वादिति वाच्यम्। पूर्वपदस्य तात्पर्यग्राहकत्वे दोषाभावात्। गौरवादिति। तथाचोक्तातिप्रसंगभिया प्रत्ययार्थानां प्रकृत्येकदेशार्थेऽनन्वयाद् घञन्तसमुदायस्यैव शक्तिः स्वीकार्या।

न चैवमुपकुम्भार्द्धपिप्पल्यादिरूपपूर्वपदार्थप्रधानसमासपदात्कुम्भसमीप-पीप्पल्यर्द्धादौ विभिक्त्यर्थान्वयस्य प्रातिपदिकान्तरार्थोऽभेदाऽन्वयस्य चानुपपत्तिः पूर्वपदस्य समासोत्तरविभक्त्यप्रकृतित्वादिति वाच्यम्। तदनुरोधेनैव तत्र कुम्भपिप्पल्यादिपदानामेव कुम्भसमीपपिप्पल्यार्द्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्रहमात्रोपयोगितायाश्च स्वीकारात्।

वस्तुतस्तु तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपाऽर्द्धादौ प्रत्ययार्थोऽन्वयबोधे तादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावोऽप्याकाङ्क्षा। एवं तत्र प्रातिपदिकान्तरार्थोऽभेदाऽन्वयबोधे समानविभक्तिकयोस्तादृशपदपदान्तरयोश्च समभिव्याहारोऽप्याकाङ्क्षा। तथा सति अतिप्रसंगविरहात्। धात्वर्थपाकादौ प्रत्ययार्थोन्वयबोधे प्रातिपदिकान्तरार्थोऽन्वयबोधे च ल्युट्घञाद्यन्तसमुदायप्रत्यययोरव्यवहितपूर्वापरीभावस्य समानविभक्तिकयोस्तादृशसमुदायपदपदान्तरयोः समभिहारस्याऽऽकाङ्क्षात्वोपगमे दर्शिताधिकरणार्थकल्युट्प्रत्ययस्थलीयातिप्रसंगस्य दुरुद्धरतया न तत्संभवः।

---

शोभनं पचनमित्यत्र। अधिकरणपरत्वेपीति। अधिकरणपरत्वग्रहेपीत्यर्थः। तथाविधान्वयेति। पाके अभेदेन शोभनान्वयेत्यर्थः। न चेष्टापत्तिः। ल्युडादेरधिरणपरत्वग्रहे पाकाधिकरणे एवाऽभेदेव शोभनान्वयात्। कस्यचित्प्रतिबन्धकतामिति। धातूपस्थाप्यार्थे द्वितीयाभिन्नसुबर्थप्रकारकान्वयबोधं प्रति तद्धातूत्तरप्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामित्यर्थः। स्तोकं पचतीत्यादौ सार्थकप्रत्ययान्तपचधातूपस्थाप्यपाकादौ अन्वयबोधोपपत्तये द्वितीयाभिन्नत्वोपादानम्। तथा च घञाद्यन्तसमुदाये एव शक्तिः स्वीकार्येति भावः।

एवं। प्रकृत्येकदेशार्थे विभक्त्यर्थानन्वये शोभनाद्यभेदाऽनन्वये च। कुम्भसमीप-पिप्पल्यर्द्धादाविति। कुम्भ-समीप पीप्पल्यर्द्धादिनेत्यर्थः। विभक्त्यर्थान्वयस्य। विभक्त्यर्थकर्मत्वाद्यन्वयस्य। प्रातिपदिकान्तरार्थोऽभेदान्वयस्य च। सुन्दरमुपकुम्भमित्यादौ सुन्दराऽभेदान्वयस्य च। पूर्वपदस्य। उपपदस्य—अर्द्धपदस्य च। अप्रकृतित्वात्। प्रकृत्येकदेशत्वादिति यावत्। तथा च प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिविरोध इति भावः। तदनुरोधेनैव। उक्तव्युत्पत्त्यनुरोधेनैव। तत्र। उपकुम्भं अर्द्धपिप्पलीत्यादौ। पूर्वपदस्य। उपपदस्य। अर्द्धपदस्य च। तथा च

नैकदेशान्वयः । नाप्युक्तव्युत्पत्तिविरोधः । एवं च विशिष्टेशक्तिर्न स्वीकरणीयेति ध्येयम् ।

पूर्वपदार्थप्रधानसमासस्थलेऽन्यादृश्या आकाङ्क्षाया एव कल्पनेन नोक्तव्युत्पत्तिविरोध इत्याह । **वस्तुतस्त्विति** । प्रत्ययार्थोऽन्वयबोधे । कर्मत्वं कुम्भसमीपवृत्तीति बोधे । **तादृशसमस्तपदप्रत्ययपदयोः** । उपकुम्भपदाऽम्पदयोः **अव्यवहितपूर्वाऽपरीभावोप्याकाङ्क्षेति** । तथा च कर्मत्वं कुम्भसमीपवृत्तीति बोधे उपकुम्भपदाव्यवहितोत्तराऽम्पदत्वरूपाऽऽकाङ्क्षेत्यर्थः । **तत्र** । सुन्दरमुपकुम्भमित्यादौ । **प्रातिपदिकान्तरार्थाऽभेदान्वयबोधे** । शोभनाभिन्नं कुम्भसमीपमितिबोधे । **तादृशपदपदान्तरयोश्चेति** । समस्तेत्यर्थः । **समभिव्यहारोप्याकाङ्क्षेति** । तथा च शोभनाभिन्नं कुम्भसमीपमिति बोधे द्वितीयान्तशोभनपदसमभिव्याहृतोपकुम्भपदत्वरूपाऽऽकाङ्क्षेत्यर्थः । **तथा सति** । उक्ताऽऽकाङ्क्षाया नियामकत्वे सति । **अतिप्रसंगविरहादिति** । अत्रानुपपत्तिविरहादित्येव पाठः सम्यक् प्रतिभाति ।

ननु समुदायशक्त्यनंगीकर्तृमतेपि पाकः—पचनमित्यादौ सुबर्थैकत्वादिप्रकारकधात्वर्थपाकविशेष्यकबोधे घञन्तपाकपदाव्यवहितोत्तरसुपदत्वरूपा एवं ल्युडन्तपचनपदाव्यवहितोत्तरसुपदत्वरूपा—एवमभेदेन शोभनप्रकारकधात्वर्थपाकविशेष्यकबोधे प्रथमान्तशोभनपदसमभिहृतप्रथमान्तपाकपदत्वरूपा—तथा प्रथमान्तशोभनपदसमभिव्याहृतप्रथमान्तपचनपदत्वरूपाऽऽकाङ्क्षा वाच्या तदभावादेव पचन्तमित्यादौ सुबर्थैकत्वादेर्न धात्वर्थेऽन्वय इत्याशंकां निराकरोति । **धात्वर्थपाकादावित‍ि** । **ल्युट्घञाद्यन्तसमुदायप्रत्यययोः** । पाकः—पचनमित्यनयोः । **समभिव्याहारस्येति** । शोभनः पाकः शोभनं पचनमिति समभिव्याहारस्येत्यर्थः । **अतिप्रसंगस्य दुरुद्धरतयेति** । अधिकरणार्थकल्युडन्तपचनपदस्थलेपि शोभनं पचनमित्यत्र धात्वर्थपाकादौ द्वितीयार्थसंख्याकर्मत्वादेः शोभनस्य चाऽतिप्रसंगस्य । दुर्वारतयेत्यर्थः । **न तत्संभवः** । न पाकपदाऽव्यवहितोत्तरसुप्पदत्व, एवं पचनपदाव्यवहितोत्तरसुप्पदत्व, एवं शोभनपदसमभिव्याहृतपचनपदसमभिव्याहाररूपाया आकाङ्क्षाया न संभवः । पाकाधिकरणे शोभनाऽभेदाऽन्वयेन धात्वर्थपाकेऽन्वयविरहादुक्ताऽऽकाङ्क्षाज्ञानस्य व्यभिचार इति भावः । तथा च घञन्तसमुदायस्य शक्तिः स्वीकार्येति ध्येयम् ।

घञन्तसमुदायस्य पाकादौ शक्तिस्वीकारे दीधितिविरोधमाशंकते । **अथेति घञन्तसमुदायस्य पाकाद्यर्थकत्वे इति** । अस्य संयोगविभागादिशब्दानां

**अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टाऽवाचकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां विरुद्धमिति चेत्–का क्षतिः–न हि कस्यचिद्ग्रन्थकृतो विपरीतलिखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम् ।**

---

नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां विरुद्धश्चेत्यनेनाऽन्वयः। नैमित्तिकसंज्ञा च जात्यवच्छिन्नसंकेतवती संज्ञा। घञोऽसत्वेऽपि संयुज्यते–विभजते इत्यादौ संयोगत्व विभागत्वजातिविशिष्टे क्लृप्तया धातुशक्त्यैव संयोगत्वविभागत्वविशिष्टबोधनिर्वाहे घञन्तसमुदायस्य शक्तिकल्पनमनुचितम् इति घञन्तसमुदायस्य संयोगत्वविभागत्वविशिष्टाऽवाचकत्वं प्रसाध्य संयोगविभागादिपदानां न नैमित्तिकसंज्ञात्वमित्याशयो दीधितिकृताम्। धातुमात्रस्य संयोगत्वरूपजात्यवच्छिन्नवाचकत्वस्याऽऽवश्यकत्वे प्रत्ययविशिष्टस्य जात्यवच्छिन्नवाचकत्वरूपनैमित्तकसंज्ञात्वं न संयोगादिपदानामिति दीधितिग्रन्थः। तद्विरुद्धश्चेति भावः। अस्तु विरोध इत्याह। का क्षतिरिति। विरोधे न क्षतिरित्यर्थः। क्षत्यभावे हेतुमाह। **न हि कस्यचिद्ग्रन्थकृतो विपरीतलिखनमिति**। अस्य च बाधकमित्यनेनाऽन्वयः। बाधकाभावे हेतुमाह। **युक्तिबलाद्वस्तुसिद्धौ इति**। स्तोकः पाकः शोभनं पचनमित्यत्र धातुमात्रेण पाकाद्युपस्थितौ स्तोकेन शोभनेन च सह पाकाद्यभेदाऽन्वयानुपपत्तिः विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वादित्युक्तहेतुना घञन्तसमुदायस्य वाचकत्वसिद्धौ इत्यर्थः। तथा च दीधितिग्रन्थो न बाधक इति भावः।

**एवं चेति**। घञन्तसमुदायस्य शक्तिसिद्धौ चेत्यर्थः। **धातुमात्रस्यैवेति**। एवकारेण घञादिव्यावृत्तिः। **तत्र**। स्तोकं पाक इत्यत्र। **तद्विशेषणवाचकपदात्**। क्रियाविशेषणवाचकस्तोकादिपदात्। **द्वितीयैवेति**। एवकारेण प्रथमाया व्यावृत्तिः। क्रियाविशेषणानां कर्मत्वमित्यनुशासनादिति भावः। अत्र सुवर्थसंख्यादेर्धात्वर्थपाकेऽन्वयानुपपत्त्या सुवर्थस्याऽविवक्षा बोध्या। **यत्र तु**। स्तोकः पाक इत्यत्र तु। **कृदन्तसमुदायस्य तात्पर्यमिति**। **तत्र**। स्तोकः पाक इत्यत्र। **तादृशपदं**। विशेषणवाचकस्तोकपदं। **तथाविधेति**। पाकाद्यर्थोपस्थापकेत्यर्थः। **कृदन्तसमुदायसमानविभक्तिकमेवेति**। विशेष्यवाचकपदसमानविभक्तिकमेवेत्यर्थः। अत्र सुबर्थस्य विवक्षा बोध्या। **धात्वर्थैकाधिकरण्ये त्विति**। धात्वर्थेन सहाऽभेदे विवक्षिते तु इत्यर्थः। धात्वैकाधिकरण्ये तु इति पाठे तु स्तोकपदस्येति शेषः। तथा च स्तोकपदस्य धातुप्रतिपाद्यप्रतिपादकत्वे तु इत्यर्थः। धातोरेव शक्तेः क्लृप्ततया तत एव विवक्षि-

एवं च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीयैव। यत्र कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकमेव। तदुक्तं कातन्त्रपरिशिष्टकृता—कथं स्तोकः पाक इति कृदन्तविशेषणत्वात्, धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति वदन्ति।

---

तान्वयबोधोपपत्तौ कृदन्तसमुदायस्य शक्तिकल्पने गौरवं वदन्तीत्यस्वरसबीजं बोध्यम्[1]।

---

१ न च समुदायशक्त्यस्वीकारे पाकमित्यत्र द्वितीयार्थकर्मत्वे धात्वर्थपाकादेरन्वयानुपपत्तिः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्। एवं शोभनं पचनमित्यादौ विशेष्यवाचकधातुपदस्य विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वात्तदर्थे प्रथमान्तशोभनपदार्थस्याऽन्वयानुपपत्तिश्च। प्रकृतिपदस्य तदेकसाधारणपरत्वे पचन्ती इत्यादौ धात्वर्थपाकादौ द्वित्वान्वयप्रसंगः तथा च प्रामाणिकं गौरवं न दोषायेति वाच्यम्। धात्वर्थप्रकारककर्मताविशेष्यकबोधे घञन्तपाकपदाव्यवहितोत्तराऽम्पदस्वरूपाऽऽकाङ्क्षात्वस्य एवं पाकादौ शोभनाद्यभेदान्वये स्वन्तशोभनपदसमभ्याहृतपचनपदस्वरूपाऽऽकाङ्क्षात्वस्य कल्पनेन पाकादौ द्वित्वप्रकारकबोधे पचन्तौ—पचमानौ इत्याकाङ्क्षात्वस्याऽकल्पनेनैव निर्वाहे गौरवस्याऽप्रामाणिकत्वात्।

न च पाकादौ शोभनाद्यभेदान्वयबोधे स्वन्तशोभनपदसमभिव्याहृतपचनपदस्वरूपाऽऽकाङ्क्षात्वोपगमे दर्शिताऽधिकरणार्थकल्युट्प्रत्ययस्थले पाके शोभनान्वयापत्तिरिति वाच्यम्। धात्वर्थे शोभनान्वयबोधे तत्तद्धातूत्तरप्रत्ययधर्मिकक्रियदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वात्।

अथ समुदायशक्त्यस्वीकारे प्रतिबन्धकताकल्पनागौरवम्। न च समुदायशक्तिस्वीकारेऽपि प्रतिबन्धकताकल्पनमावश्यकम्, अन्यथा ल्युडादेरधिकरणपरत्वाग्रहे शोभनाऽभिन्नपाकाद्यन्वयबोधं प्रति शोभनं पचनमिति समभिहारस्याकाङ्क्षात्वं स्वीकरणीयम्, एवं च तादृशाऽऽकाङ्क्षाज्ञानाल्युडादेरधिकरणत्वपरत्वग्रहे उक्तान्वयबोधापत्तेरवारणादिति वाच्यम्। उक्तान्वयबोधे निरुक्ताकाङ्क्षाज्ञानस्य समुदायशक्तिज्ञानजन्यपाकाद्युपस्थितेः सहकारित्वोपगमात्। ल्युडादेरधिकरणपरत्वग्रहकाले धातुशक्तिग्रहजन्यपाकोपस्थितेरेव सत्त्वान्नोक्तदोष इति चेन्न। यत्र यत्र समुदायशक्त्यभावपक्षे प्रतिबन्धकत्वकल्पनम्, तत्र तत्र समुदायशक्तिपक्षे तादृशशक्तिज्ञानजन्योपस्थितेरतिरिक्तकारणताकल्पने साम्यात्।

तदर्थकपदोत्तरविभक्त्या संख्याबोधनेऽभेदसंबन्धावच्छिन्नप्रकारताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्री अपेक्षिता।

ताद्दशश्च बोधस्तदर्थविशेष्यकः तदर्थनिरूपितभेदाऽन्वयविषयकश्च।

नीलौ घटौ इत्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते।

---

समानवचनकविशेषणवाचकपदोत्तरविभक्तिः साधुत्वार्थेत्युक्तम् "विभक्तपदं साधुत्वार्थमेव प्रयुज्यते" इतिग्रन्थेन। कार्यकारणभावमाह। तदर्थकेति। प्रकृत्यर्थकेत्यर्थः। तदर्थविषयतेति। प्रकृत्यर्थनिष्ठविषयतेत्यर्थः। सा च द्वयी—भेदसंबन्धावच्छिन्नप्रकारता एका, अपरा च विशेष्यता। तथा च तदर्थकपदोत्तरविभक्त्यर्थसंख्याविशेष्यकबोधं प्रति अभेदसंबन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठविषयताशालिशाब्दाबोधसामग्री कारणम्। नीलो घट इत्यादौ प्रकारीभूतनीलनिष्ठविषयता अभेदसंबन्धावच्छिन्नप्रकारतारूपैवेति न नीले संख्यान्वयः। तत्रैव घटनिष्ठविषयताविशेष्यतारूपा "अभेदसंबन्धावच्छिन्नप्रकारताभिन्ना एवं राज्ञः पुरुष इत्यादौ राजनिष्ठनिरूपितत्वसंबन्धावच्छिन्नप्रकारतापि अभेदसंबन्धावच्छिन्नप्रकारताभिन्नैवेति घटे राज्ञि चैकत्वसंख्याऽन्वयः तदेवाह। ताद्दशश्च बोध इति। अभेदसंबन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठविषयताशालिबोधश्चेत्यर्थः। तदर्थविशेष्यक इति। प्रकृत्यर्थविशेष्यक इत्यर्थः। तथा च नीलो घट इति वाक्याद् घटविशेष्यकस्ताद्दशो बोध इत्यर्थः। तदर्थनिरूपितेति। प्रकृत्यर्थनिरूपितेत्यर्थः। ताद्दशो भेदान्वयः। अभेदातिरिक्तः संसर्गः। तद्विषयक इत्यर्थः। यथा राज्ञः पुरुष इति वाक्यान्निरूपितत्वसंबन्धावच्छिन्नराजनिष्ठप्रकारताकस्ताद्दशो बोध इति भावः। तथा च विभक्त्यर्थसंख्याप्रकारकबोधेऽभेदसंबन्धावच्छिन्नप्रकारताश्रयत्वज्ञानं प्रतिबन्धकमितिभावः[1]।

प्रत्युदाहरणमाह। नीलौ घटौ इत्यादौ चेति। एकत्वस्य केवलान्वयितया

---

१ ननु पुरूरव आर्द्रवसो विश्वेदेवा इत्यादौ पुरूरव आर्द्रवः पदोत्तरविभक्त्या द्वित्वबोधनाद्व्यभिचारः, पुरूरव आर्द्रवोनिष्ठविषयतायाः अभेदसंबन्धावच्छिन्नप्रकारतात्मकत्वादिति चेन्न। अभेदसंबन्धावच्छिन्नप्रकारतायां विशेष्यान्वयिसंख्याविरुद्धसंख्याऽनवच्छिन्नत्वस्य विशेषणीयत्वात्। उक्तस्थले च ताद्दशप्रकारतायाः विशेष्यीभूतविश्वेदेवान्वयिबहुत्वसंख्याविरुद्धद्वित्वसंख्यावच्छिन्नत्वान्न व्यभिचारः।

एवं च क्रियाविशेषणवाचकपदोत्तरविभक्त्याऽबाधितयोरपि द्वित्व-बहुत्वयोः प्रत्यायनाऽसंभवात्तादृशपदोत्तरमौत्सर्गिकमेकवचनमेव भावाख्यातस्थलवदित्यवधेयम् ।

---

नीलेपि भानसंभवान्नीलौ घटौ इत्युक्तम् । विशेष्यवाचकपदोत्तरविभक्त्यैवेति । घटपदोत्तरविभक्त्यैवेत्यर्थः । एवकारेण विशेषणवाचकपदोत्तरविभक्तिव्यवच्छेदः । यतो नीलौ घटौ इत्यत्र विशेषणीभूतनीलनिष्ठविषयताऽभेदसंबन्धावच्छिन्नप्रकारतात्मिकैव न तद्भिन्नेति अभेदसंबन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठविषयताशालिशाब्दसामग्र्यभावान्ननीलपदोत्तरविभक्त्या संख्याबोधः तथा च समानवचनकविशेषणवाचकपदोत्तरविभक्त्या क्वापि संख्याबोधनाऽसंभवाद्विशेषणवाचकपदोत्तरविभक्तिः साधुत्वार्थिकैवेति ध्येयम्[1] ।

एवं चेति । संख्यान्वयबोधेऽभेदसंबन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठविषयताशालिशाब्दसामग्र्या अपेक्षणे चेत्यर्थः । क्रियाविशेषणवाचकपदोत्तरविभक्त्येति । स्तोकादिपदोत्तरविभक्त्येत्यर्थः । अबाधितयोरपि

---

१ अथ तथापि नीलौ घटौ इत्यत्र नीले विभक्त्यर्थद्वित्वान्वयापत्तिस्तदवस्थैव, नीलत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः तादात्म्यसंबन्धावच्छिन्नप्रकारतानात्मकत्वादिति चेन्न । अन्तराभासमानविषयतयोरभेदमते दोषाभावात् । तयोरवच्छेद्यावच्छेदकपक्षे—तदर्थकपदोत्तरविभक्त्यर्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यताशालिशाब्दबोधं प्रति अभेदसंबन्धावच्छिन्नप्रकारताविशिष्टान्यविषयताशालिशाब्दसामग्र्याः विवक्षणात् । वै० स्वप्रयोजकपदप्रयोज्योपस्थितीयविषयताप्रयोज्यत्वसं० । नीलौ घटौ इत्यादौ च तादृशोपस्थितीयविशेष्यता, नीलत्वनिष्ठप्रका तानिरूपितनीलनिष्ठविशेष्यता, तत्प्रयोज्यत्वस्यैव शाब्दबोधीयनीलत्वनिष्ठप्रकारतानिरूपितनीलनिष्ठविशेष्यतायां नीलत्वावच्छिन्नप्रकारतायां च सत्त्वेनोभयत्र वैशिष्ट्यसत्त्वान्न द्वित्वान्वयबोधापत्तिः । घटत्वावच्छिन्नविषयतायां प्रकारताविशिष्टान्यत्वसत्त्वान्नानुपपत्तिः ।

अथ नीलो घट इत्यत्र नीलपदार्थेपि विभक्त्यर्थैकत्वान्वयापत्तिः, नीलघटयोरभिन्नतया नीलपदार्थघटनिष्ठविषयतायामभेदसंबन्धावच्छिन्नप्रकारताभेदसत्त्वादिति चेन्न । तदर्थकपदोत्तरविभक्त्यर्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यताशालिशाब्दबोधं प्रति अभेदसंबन्धावच्छिन्नप्रकारताभिन्नतदर्थनिष्ठ तत्पदप्रयोज्यविषयताकशाब्दसामग्र्याः कारणत्वस्य विवक्षितत्वात् । नीलपदार्थघटनिष्ठविषयताया नीलपदाऽप्रयोज्यत्वान्न दोषः ।

अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः। घटो घटः, दण्डवान् दण्डवान्, पाकं पचतीत्यादौ घटत्व, दण्डवत्व, पाकत्वाद्यव-च्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधाऽन्वयबोधानुदयात्।

---

द्वित्वबहुत्वयोरिति। यत्र कर्त्रा पाकद्वयं पाकत्रयं वा क्रियते तत्राबाधितयोरपि द्वित्वबहुत्वयोरित्यर्थः। प्रत्यायनाऽसंभवादिति। द्विवचनादिविभक्त्या द्वित्वबहुत्वबोधनाऽसंभवादित्यर्थः। क्रियाविशेषणस्तोकादीनां क्रियायाम-भेदसंबन्धेनैव प्रकारतया तन्निष्ठप्रकारताया अभेदसंबन्धावच्छिन्नत्वादिति भावः। तथा चेति शेषः। तादृशपदोत्तरं। क्रियाविशेषणवाचकपदोत्तरं। पदसाधुत्वार्थं यस्य कस्यचित्प्रयोगे प्राप्ते प्राथमिकमेकवचनमेव प्रयोक्त-व्यमित्याशयेनाह। एकवचनमेवेति। तदपि अनियतलिङ्गकस्थलाभिप्रायेण। औत्सर्गिकमिति। सामान्ये नपुंसकमिति क्लीबत्वमपि। एवं क्रियाविशेषणानां कर्मत्वमपि। भावाऽऽख्यातस्थलवदिति। यथा भावाख्यातस्थले एकवचन-प्रयोगस्तद्वत्क्रियाविशेषणानामपीति भावः।

अभेदाऽन्वयबोधे नियामकान्तरमप्याह। अभेदान्वयबोधश्चेति। अभेद-संसर्गकबोधश्चेत्यर्थः। विरूपोपस्थितयोरेवेति। विभिन्नाभ्यां धर्माभ्या-मुपस्थितयोरर्थयोरेवेत्यर्थः। यथा नील घट इत्यादौ नीलत्व घटत्वाभ्या-मुपस्थितयोर्नीलघटपदार्थयोः। एवकारव्यवच्छेद्यमाह। घटो घट इत्यादि तत्तद्रूपावच्छिन्नस्य। घटत्व दण्डवत्व पाकत्वावच्छिन्नस्य। तथाविधेति। अभेदसंसर्गकेत्यर्थः। अन्वयबोधानुदयादिति। विभिन्नरूपेणानुपस्थित-त्वादिति भावः[1]।

---

१ अथ विरूपोपस्थितयोरिति द्विवचनमसंगतम्, नीलपदार्थस्य घटपदार्थस्य चैक्यात् इति चेन्न। विरूपाभ्यामुपस्थितौ याभ्यां तौ विरूपोपस्थितौ तयोरित्यर्थः। इदं चाऽध्याहृतस्य पदयोरित्यस्य विशेषणम्। जन्यत्वं षष्ठ्यर्थः। तथा च विभिन्न-रूपेणोपस्थितिजनकपदजन्य एवाऽभेदान्वयबोध इति नियमः पर्यवसितः। तथा च पद एव द्वित्वान्वय इति भावः।

अथवा उपस्थितयोरित्यत्र भावे क्तः। उपस्थित्योरित्यर्थः। विषयत्वं षष्ठ्यर्थः। विषयता च प्रकारतारूपा विशेष्यतारूपा च। तथोपस्थितेः प्रयोज्यतासंबन्धेनाऽ-न्वयः। तथा चोपस्थितिविषयताविशिष्टेवाऽभेदनिष्ठशाब्दबोधीयसंसर्गता इति नियमः। वै० स्वप्रयोज्यप्रकारतानिरूपितत्व, स्वावच्छेदकधर्मेतरधर्मावच्छिन्नविषय-

अथ तत्प्रयोजकसमानविभक्तत्वादेः सत्वात्कथं न तादृशान्वयबोधः। अत्राहुः—यादृशं फलं क्वचित्प्रसिद्धयति तादृशस्यैवाऽऽपत्तिः सम्भवति क्लृप्तसामग्रीबलात्। यादृशं च सर्वथैवाऽप्रसिद्धं तादृशस्य चाऽऽपादकाऽप्रसिद्धेरापत्तिरशक्यैवेति घटत्वाद्यवच्छिन्नविशेष्यताकाऽभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात्कथं तदापत्तिः।

---

आशंकते। अथेति। तत्प्रयोजकेति। सामान्यतोऽभेदान्वयबोधप्रयोजकेत्यर्थः। समानधर्मावच्छिन्नप्रकारताविशेष्यताकाऽभेदान्वयबोधप्रयोजकेत्यर्थ इति तु न सम्यक्। तादृशबोधस्याऽप्रसिद्धया तत्प्रयोजकस्याप्यप्रसिद्धेरक्लृप्तत्वात्। तथा च तत्पदं सामान्यतोऽभेदान्वयबोधपरम्, न तु तथा विधान्वयबोधपरमिति भावः। समानविभक्तिकत्वादेरिति। आदिना पदार्थोपस्थित्यादिपरिग्रहः। समाधत्ते। अत्राहुरिति। यादृशं। यद्धर्मावच्छिन्नं। फलं चात्र शाब्दबोधः। तादृशस्यैव। तद्धर्मावच्छिन्नस्यैव। एवकारेणाऽप्रसिद्धस्य व्यावृत्तिः। क्लृप्तसामग्रीबलादिति। आकाङ्क्षायोग्यतादिबलादित्यर्थः। तथा च यादृशधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयरूपाऽऽपादकबलात्तद्धर्मावच्छिन्नकार्यस्याऽऽपत्तिर्भवतीत्यर्थः। तेनोत्पन्नव्यक्तेः पुनरुत्पादाऽसंभवेपि न क्षतिः। यादृशं च। यद्रूपावच्छिन्नं च। तादृशस्य। तद्रूपावच्छिन्नस्य। आपत्तिरशक्यैवेति। अयंभावः। आपत्तिं प्रति आपाद्यव्यतिरेकनिश्चयः—आपाद्यव्याप्याऽऽपादकवत्तानिश्चयश्च कारणम्। आपत्तिश्च शाब्दबोधः अभेदसंसर्गकघटप्रकारकघटविशेष्यकः स्यादित्याकारिका। अत्राऽभेदसंसर्गकघटप्रकारकघटविशेष्यकत्वमापाद्यम्, तदप्रसिद्धया नापाद्यव्यतिरेक निश्चयः, आपादकाऽप्रसिद्धया नापि आपाद्यव्याप्याऽऽपादकवत्तानिश्चयश्च संभवति। एवं च कारणाभावादापत्तिरशक्यैवेति भावः। तदेवाह। क्वचिदप्यनुदयादिति। अनुत्पादादित्यर्थः। आपादकाऽप्रसिद्धयाऽऽपाद्याप्रसिद्धेरिति यावत्।

अभेदसंसर्गकघटप्रकारकघटविशेष्यकशाब्दसामग्र्या आपादकत्वान्नाऽऽ-

---

ताप्रयोज्यविशेष्यतानिरूपितत्वोभयसं०। न चोपस्थितिविषयतयोः प्रकारताविशेष्यतयोः प्रायशो निरवच्छिन्नतया स्वावच्छेदकधर्माप्रसिद्धिरिति वाच्यम्। स्वनिरूपितविषयतावद्धर्मेतरधर्मावच्छिन्नविषयताप्रयोज्यविशेष्यतानिरूपितत्वस्य तदर्थत्वात्। एवं च सरूपोपस्थितस्यापि पदद्वयार्थस्य किंचिदपेक्षया विरूपोपस्थितत्वेपि न क्षतिः।

अथ घटो नीलघटः, दण्डवान्, रक्तदण्डवानित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः, विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्।

तर्हि घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वावच्छिन्नप्रकारकाऽभेदान्वयबोधप्रयोजिका वाच्या तदभावादेव घटो घट इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित्।

---

पादकाऽप्रसिद्धिः, नवाऽऽपत्तिरशक्येत्याशंकते। अथेति। तादृशशाब्दबोधस्य। नीलत्वादेरधिकस्य भानेपि अधिकन्तु इत्यादिन्यायादिति हृदयम्। विरूपोस्थित्यभावात्कथं शाब्दबोध इत्यत आह। विधेयकोटावधिकावगाहिन इति। विधेयघटकतयाऽखिलोद्देश्यघटकावगाहिनः तदघटकमवगाहमानस्येत्यर्थः। अभेदान्वयबोधस्थले विधेयीभूताश्रयस्य नियमतो भानादखिलेत्युक्तम्। नवीनैः स्वीकारादिति। उद्देश्यवाचकपदेनोद्देश्यस्याऽऽदाववगततया तत्र बुबोधयिषाया अभावेन तस्याऽज्ञातज्ञापकत्वरूपविधेयतया न भानसंभवः, किन्तु अधिकांशस्यैव। अतो घटो नीलघट इत्यादावपि नीलाभिन्नो घट इत्येव शाब्दबोधः। न चैवं नीलोघटइत्यत्रापि नैल्यमात्रस्य विधेयत्वमुचितम्, नत्वाश्रयस्यापीति वाच्यम्। सर्वानुभवसिद्धाऽभेदाऽन्वयबोधस्यापलापप्रसंगात्। घटो नीलघट इत्यादौ तु विधेयतया नीलस्य भाने क्षतिविरहादिति प्राचीनमते नीलस्यैव विधेयत्वमात्रमुक्तम्। नवीनैरिति।

वाक्यरचनायाः। प्रयोजनद्वयम्। विशिष्टज्ञानं संशयनिवृत्तिश्च। तत्र घटो नीलघटो नवेति संशयं प्रति नीलघटाभिन्नो घट इति निश्चय एव प्रतिबन्धकः, न तु नीलाऽभिन्नोघट इति निश्चयः असमानप्रकारकत्वादतो विधेयांशेऽधिकावगाहिशाब्दबोधः स्वीकर्तव्य इति नवीनाः।

स्वीकारादिति। तथा च घटोनीलघट इतिवाक्यजन्यशाब्दबोधस्य घटत्वावच्छिन्नविशेष्यतानिरूपितनीलघटत्वावच्छिन्नप्रकारताकत्वे घटत्वावच्छिन्नप्रकारताकत्वमपि सुलभम्, अधिकन्तु प्रविष्टमित्यादिन्यायात्। परन्तु विधेयांशे अधिकावगाहिशाब्दबोजस्वीकर्तृनवीनमते अधिकविषयता नियामिका सामग्री वक्तव्या तादृशसामग्र्याश्च घटोघट इत्यादिस्थलेपि सत्वादभेदसंसर्गकघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधापत्तिरिति भावः। कारणकूटस्यैव कार्योत्पादनियामकत्वमित्याशयेन समाधत्ते। तर्हीति।

**अथ द्रव्यत्वादौ धर्मितावच्छेदकतासंबन्धेन प्रसिद्धस्य शुद्धघटत्वाद्यवच्छिन्नप्रकारकाऽभेदान्वयबोधस्य घटत्वादावापत्तिसंभवात् ।**

---

अधिकावगाहिशाब्दबोधस्वीकर्तृभिर्नवीनैरधिकांशविषयतानियामिका सामग्री वाच्या, सा च सामग्री घटोनीलघट इत्यादौ घटे नीलरूपविशिष्टो घटो विशेषणतया भासते, तत्र नीलमाननियामिका सामग्री च नीलपदजन्यनीलोपस्थितिः घटपदं नीलघटान्वितस्वार्थं बोधयतु, घटः नीलघटाऽभेदसंसर्गवान् घटपदसमभिव्याहृतनीलघटपदत्वरूपाऽऽकाङ्क्षाज्ञानं तद्घटितसामग्री अत्र नास्तीत्याह । **घटाद्यंशे इति । तदभावादेव । उक्तसामग्र्यभावादेव । न तादृशशाब्दबोधापत्तिः ।** न घटत्वावच्छिन्नविशेष्यकाभेदसंसर्गकघटप्रकारकशाब्दबोधापत्तिः ।

अथ घटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति नीलाद्युपस्थितेर्व्यभिचारितया कारणत्वं न संभवति । तथाहि नीलोपस्थितिविरहेपि घटप्रकारकघटविशेष्यकशाब्दबोधस्य घटोरक्तघट इति वाक्यादुत्पत्तेः । एवं रक्तोपस्थितिविरहेपि घटः पीतघट इति वाक्यात्तादृशशाब्दबोधोत्पत्तेः । तथा च नीलाद्युपस्थितिविरहस्याकिंचित्करत्वाद् घटो घट इतिवाक्याच्छाब्दबोधापत्तिरिति चेन्न । अभेदसंबन्धेन घटप्रकारघटविशेष्यकशाब्दबोधं प्रति न हि कश्चिदपि स्वातन्त्र्येण हेतुः किन्तु नीलघटत्वावच्छिन्नप्रकारताशालिबोधं प्रत्येवेति एतादृशशाब्दसामग्रीप्रयोज्य एव तादृशशाब्दबोधोपि वक्तव्यः, सा च सामग्री नीलाद्युपस्थितिघटितेति नीलाद्युपस्थितिविरहे कथं तादृशः शाब्दबोध इति ध्येयम् ।

वस्तुतः सामान्यधर्मावच्छिन्नकार्योत्पत्तौ विशेषधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षितत्वनियमेन अभेदसंसर्गकघटप्रकारकघटविशेष्यकशाब्दत्वरूप सामान्यधर्मावच्छिन्नकार्योत्पत्तौ नीलघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दत्वरूपविशेषधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षितत्वे नीलाद्युपस्थितेरवश्यापेक्षणीयत्वादिति ।

तथा च धर्मितावच्छेदकतासंबन्धेन घटप्रकारकशाब्दबोधं प्रति तादृशसंबन्धेनाऽऽकाङ्क्षाज्ञानंकारणमिति । विशेष्यतावच्छेदकाऽनिवेशप्रयुक्तलाघवानुरोधेन विषयनिष्ठप्रत्यासत्या कार्यकारणभावं स्वीकृत्याऽऽपत्तिं पुनरापादयति । **अथेति ।** तन्नेत्यपि पाठान्तरम्, द्रव्यं घट इत्यादौ अभेदसंसर्गेण घटप्रकारकशाब्दबोधो धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे जायते ।

न च तत्राऽऽपादकाभावः। तात्पर्यज्ञानविशेषादिघटितताया धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एवाऽऽपादकत्वात्।

न च धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यकोपस्थिति-तदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव।

---

तत्र द्रव्यं घट इति वाक्यजन्याऽभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिबोधविशेष्यकेच्छावानयमिति तात्पर्यज्ञानं विशेष्यतावच्छेदकतासंबन्धेन वर्तते-एवं द्रव्यं घटत्वावच्छिन्नाभेदसंसर्गवानितयोग्यताज्ञानं च तेन संबन्धेन तत्र वर्तते इति द्रव्यत्वे प्रसिद्धस्याऽभेदसंबन्धेनघटप्रकारकशाब्दबोधस्य घटत्वे आपत्तिरित्याशयेनाह। द्रव्यत्वादाविति। द्रव्यं घट इत्यत्रेत्यादिः। धर्मितावच्छेदकतासंसर्गेणेति। विशेष्यतावच्छेदकतासंबन्धेनेत्यर्थः।

अथ धर्मितासंबन्धेनेत्येव कथंनोक्तमिति चेन्न। सामान्यधर्मावच्छिन्नधर्मिताया धर्मिभेदेपि ऐक्यमते अपूर्वव्यक्तावपि शाब्दबोधो जायते तत्र धर्मितासंबन्धेन योग्यताज्ञानादेरभावाद्व्यतिरेकव्यभिचारः, द्रव्यत्वेन घटावगाहि द्रव्यंनीलमिति योग्यताज्ञानसत्वे नीलोघट इति वाक्याच्छाद्बोधापत्तिश्च। शुद्धघटत्वावच्छिन्नप्रकारकेति। केवलघटत्वावच्छिन्नप्रकारके.त्यर्थः। विधेयांशेऽधिकावगाहिशाब्दबोधस्वीकारपक्षे घटत्वावच्छिन्नप्रकारकशाब्दबोधस्य घटत्वे इष्टत्वादाह। शुद्धेति। घटत्वादावापत्तिसंभवादिति। आपत्तिश्चघटवं यदि अभेदसंसर्गकघटप्रकारकान्वयबोधप्रयोजकसामग्रीमत्स्यात्तदाऽभेदसंसर्गकघटप्रकारकान्वयबोधवत्स्यादित्याकारिका। अत्राऽऽपाद्यः शाब्दबोधः स च प्रसिद्धएव। आपाद्यव्याप्यापादकवत्तानिश्चयोपि प्रसिद्धएव।

अथ कार्यापत्तौ कार्यव्याप्यसामग्र्या एवाऽऽपादकत्वम्, प्रकृते च शुद्धघटत्वावच्छिन्नप्रकारकशाब्दबोधं प्रति न कापि सामग्री क्लृप्तेत्याशंकते। न चेति। तत्र। शुद्धघटप्रकारकशाब्दबोधे। आपादकाभाव इति। तथा च न शाब्दबोधापत्तिरिति भावः। आपादिकां सामग्रीं संवादयति तात्पर्यज्ञानविशेषादिघटितताया इति। अस्य सामग्र्या इत्यनेनान्वयः धर्मितावच्छेदकतासंबन्धेनेति। विलक्षणविषयतासंबन्धेनेत्यर्थः। तदुत्पादनियामकेति। द्रव्यत्वेऽभेदसंसर्गकघटप्रकारकान्वयबोधोत्पत्तिनियामकेत्यर्थः।

**सामग्र्या एवेति।** सा च सामग्री द्रव्यं घट इति वाक्यजन्यघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिबोधविशेष्यकेच्छावानयमिति-तात्पर्यज्ञानीयेच्छानिष्ठविषयतानिरूपितबोधनिष्ठविशेष्यतानिरूपिताऽवच्छिन्नत्वनिष्ठविषयतानिरूपितविषयताद्रव्यत्वे वर्तते। अथ धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे अभेदसंसर्गकघटप्रकारकशाब्दबोधोत्पत्तिनियामिका सामग्री द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानोक्ततात्पर्यज्ञानघटितैव सा च द्रव्यत्वे एवेति घटत्वे कथं तदुत्पादनियामकत्वमिति चेन्न। यादृशी सामग्री द्रव्यत्वादौ तदुत्पादनियामिका तादृश्यास्तात्पर्यज्ञानविशेषादिघटितायाः सामग्र्या एवाऽऽपादकत्वादिति तदर्थात्। तथा चाऽभेदसंसर्गकस्थले तेन संसर्गेण तद्वद्विशेष्यकज्ञानत्वेन यथा द्रव्यं घट इति ज्ञानस्य योग्यताज्ञानत्वम्, एवं तद्बोधकपदयोः समानविभक्तिकयोः समभिव्याहारस्याऽऽकाङ्क्षात्वेन द्रव्यं घट इति वाक्यज्ञानस्याऽऽकाङ्क्षाज्ञानत्वम्, एवं तदर्थान्वितददर्थपरत्वस्य तात्पर्यरूपत्वेन द्रव्यं घट इति वाक्यं घटान्वितद्रव्यपरमितिज्ञानस्य तात्पर्यज्ञानत्वम्। तथा घटो घट इतिज्ञानस्यापि योग्यताज्ञानत्वम्, एवं घटो घट इतिवाक्यज्ञानस्यापि आकाङ्क्षाज्ञानत्वम्, एवं घटो घट इति वाक्यं घटान्वितघटपदमितितात्पर्यज्ञानस्यापि तात्पर्यज्ञानत्वम्। तथा च धर्मितावच्छेदकतासंबन्धेन समस्तसामग्री द्रव्यत्वे घटप्रकारकशाब्दबोधमुत्पादयति तथा घटत्वेपि घटप्रकारकंशाब्दबोधमुत्पादयेदिति भावः।

पुनः घटोघटइत्यत्र शाब्दबोधापत्तिमुद्धर्तुं शंकते। **नचेति ताहशान्वयबोधोत्पत्तिप्रयोजिका।** घटप्रकारकाऽभेदान्वयबोधोत्पत्तिप्रयोजिका। **तदवच्छिन्नविशेष्यकेति।** द्रव्यत्वावच्छिन्नविशेष्यकेत्यर्थः। **सामग्र्येवेति।** आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावाभिप्रायेण। स च धर्मितावच्छेदकावच्छिन्नविशेष्यत्वमन्तर्भाव्यैव समवायेन बोध्यः। एवकारेण धर्मितावच्छेदकावच्छिन्नविशेष्यत्वमनन्तर्भाव्य केवलघटप्रकारकाऽभेदसंसर्गकयोग्यताज्ञानादीनां व्यवच्छेदः। अभेदसंसर्गकघटप्रकारकयोग्यताज्ञानमात्रस्य कारणत्वे प्रमेयत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादितो द्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधापत्तेः। तथा च द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानाद्यभावान्न घटोघट इत्यादौ घटत्वे घटप्रकारकाभेदसंसर्गकशाब्दबोधापत्तिः।

अत्रद्रव्यत्वादौ इत्यत्र सप्तम्यर्थोऽवच्छेदकत्वं तस्योत्पत्तावन्यः। द्रव्यत्वावच्छिन्नताहशान्वयबोधोत्पत्तिप्रयोजिकेत्यर्थः। धर्मितावच्छेदकतासंबन्धेन

धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकसंसर्गताविरहेपि द्रव्यत्वा-दिनिष्ठायास्तत्कार्यतावच्छेदकधर्मघटकत्वात् ।

---

बोधाधिकरणद्रव्यत्वादेर्बोधनिष्ठोत्पत्त्यवच्छेदकत्वम्, तदधिकरणस्यैव तन्निष्ठ-धर्मावच्छेदकत्वात् ।

अथ आत्मनिष्ठप्रत्यासत्या कार्यकारणभावे कार्य-कारणतावच्छेदकसंबन्धः समवायो न तु धर्मितावच्छेदकता । समवायेन तु कार्याधिकरणमात्मा, न तु द्रव्यत्वादिः, तथा चाऽऽत्मा कार्योत्पत्त्यवच्छेदकः, तेन संबन्धेन तदधिकरण-स्यैव तन्निष्ठधर्मावच्छेदकत्वनियमात् । नियमानङ्गीकारे कपाले घट उत्पद्यते इतिवत्पर्वते घट उत्पद्यते इति व्यवहारापत्तिः ।

तथा च "धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्ति-प्रयोजिके"तिग्रन्थोऽसंगतः, द्रव्यत्वादेस्तादृशबोधोत्पत्त्यनवच्छेदकत्वादिति चेन्न । तेन संबन्धेन तदधिकरणमित्यस्य "नियमघटकस्य" साक्षात्परम्परा-साधारणोयः "धर्मसंबन्धसाधारणः" कार्यतावच्छेदकः तदात्मकेन संसर्गेण तदधिकरणं विवक्षणीयम् । यदि कार्यतावच्छेदकसंबन्धेनैव कार्याधिकरणे सामग्र्याः कार्योत्पत्तिप्रयोजकत्वं स्यात्तदा धर्मितावच्छेदकतायाः समवायस्य च प्रत्यासत्तित्वेपि द्रव्ये घटत्वावच्छिन्नप्रकारताकः शाब्दबोध उत्पद्यते इति व्यवहारानुत्पत्तिः । धर्मितावच्छेदकतासंबन्धेन समवायसंबन्धेन वा द्रव्य-स्योक्तशाब्दबोधानधिकरणत्वात् । धर्मसाधारणकार्यतावच्छेदकेन तदधि-करणविवक्षणे तु समवायस्य संसर्गतापक्षे द्रव्यत्वावच्छिन्नविशेष्यतायाः कार्यतावच्छेदककोटिप्रविष्टत्वेन परंपरया विशेष्यतापि कार्यतावच्छेदिका तत्संबन्धेन द्रव्ये शाब्दबोधस्य सत्वात् । धर्मितावच्छेदकतायाः संसर्गत्वेपि तद्धर्मितापि संसर्गतावच्छेदिका तेन च संबन्धेन शाब्दबोधस्य द्रव्ये सत्वान्नानुपपत्तिरित्याशयवानाह । **धर्मितावच्छेदकताया इति** । द्रव्यत्वा-निष्ठाया इत्यादिः । **तत्कार्यतावच्छेदकसंसर्गताविरहेपीति** । द्रव्यत्वनिष्ठ-धर्मितावच्छेदकताया द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थिति-द्रव्यत्वावच्छिन्न-विशेष्यकयोग्यताज्ञानादिघटितसामग्रीकार्यतावच्छेदकसंबन्धत्वाभावेपीत्यर्थः । **तस्याः** । धर्मितावच्छेदकतायाः । **तत्कार्यतावच्छेदकधर्मघटकत्वादिति** । द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थिति-द्रव्यविशेष्यकयोग्यताज्ञानादिघटितसाम-ग्रीकार्यतावच्छेदकीभूतद्रव्यत्वावच्छिन्नविशेष्यकाभेदसंसर्गकघटप्रकारकशाब्द-त्वरूपधर्मघटकत्वादित्यर्थः । एवं च धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ

**तादृशसामग्र्याश्चाऽऽत्मनिष्ठप्रत्यासत्त्या द्रव्यत्वावच्छिन्नविशेष्यक-घटत्वावच्छिन्नाद्यभेदबुद्धित्वरूपस्त्रीकार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्याप्यतया घटत्वादौ धर्मितावच्छेदकतासंबन्धेन घटत्वावच्छिन्नाभेद-बोधापादकत्वं न संभवतीति वाच्यम् ।**

---

तादृशान्वयबोधोत्पत्तिप्रयोजिका" इति ग्रन्थोपि सङ्गतः । द्रव्यत्वनिष्ठधर्मिता-वच्छेदकताया धर्मविधया कार्यतावच्छेदकघटकतया तेनसंबन्धेन कार्याधिकरणे द्रव्यत्वे शाब्दोत्पत्त्यवच्छेदकत्वं उक्तसामग्र्याश्च प्रयोजकत्वं तत्राऽव्याहतम् । इत्थं च धर्मितावच्छेदकावच्छिन्नविशेष्यत्वमन्तर्भाव्यैव कार्यकारणभावे घटत्वावच्छिन्नविशेष्यकाऽभेदसंसर्गकघटप्रकारकाऽऽपाद्याऽप्रसिद्ध्या नाऽऽपत्ति-रिति भावः । **तादृशसामग्र्याश्चेति** । अथ व्याप्यतया इत्यनेन आपादकत्वं न संभवतीत्यनेन च संबन्धः । द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थिति-द्रव्य-त्वावच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्याश्चेत्यर्थः । **आत्मनिष्ठ-प्रत्यासत्त्या** । समवायेन । **स्वीयेति** । तादृशसामग्रीनिरूपितेत्यर्थः । तथा च तादृशबुद्धित्वरूपं यत्तादृशसामग्रीकार्यतावच्छेदकं तदवच्छिन्नोत्पत्तेरेवेति यावत् । एवकारेण धर्मितावच्छेदकमनिवेश्य केवलाऽभेदसंसर्गकघटप्रकारक-बोधत्वव्यवच्छेदः । **व्याप्यतया** । प्रयोजकतया । **न संभवतीति** । यद्धर्मा-वच्छिन्नं प्रति यस्याः सामग्र्याः व्याप्यत्वं स एव धर्मस्तत्सामग्र्याः कार्यतावच्छेदकः इति नियमात् ।

घटो घट इत्यादौ शाब्दबोधमापादयितुमात्मनिष्ठप्रत्यासत्तिं दूषयित्वा धर्मितावच्छेदकताप्रत्यासत्त्या शाब्दबोधमुपपादयति । **योग्यताज्ञानस्येति** । योग्यताज्ञानशाब्दबोधौसमानाकारौ । शाब्दबोधो निश्चयात्मकः—योग्यताज्ञानं तु संशयनिश्चयसाधारणं कारणमिति विशेषः । **धर्मितावच्छेदकं निवेश्येति** । अन्यथाऽभेदसंसर्गकघटप्रकारकयोग्यताज्ञानस्य समवायेन कारणत्वे द्रव्यं घट इति योग्यताज्ञानात्प्रमेयविशेष्यकघटप्रकारकशाब्दबोधापत्तेः । **तद्भेदेन** । धर्मितावच्छेदकभेदेन । **अनन्तकारणताकल्पनमपेक्ष्येति** । द्रव्यं घट इत्यत्र समवायेन द्रव्यत्वावच्छिन्नविशेष्यताकघटत्वावच्छिन्नप्रकारताक शाब्दबोधे तादृशयोग्यताज्ञानं कारणम् । एवं प्रमेयो घट इत्यत्र समवायेन प्रमेयत्वावच्छिन्नविशेष्यताकघटत्वावच्छिन्नप्रकारताकशाब्दबोधे तादृशयोग्य-ताज्ञानं कारणमितिरीत्या विशेष्यतावच्छेदकानामानन्त्यादनन्तकारणता-कल्पनमपेक्ष्येत्यर्थः । **धर्मितावच्छेदकतासंबन्धेन** । विशेष्यतावच्छेदकता-

योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेनाऽनन्तकारणताकल्पनमपेक्ष्य लाघवाद्धर्मितावच्छेदकतासंबन्धेन शाब्दबुद्धौ तादृशसंबन्धेन धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात् ।

---

संबन्धेन । शाब्दबुद्धौ । घटप्रकारकशाब्दबुद्धौ । तादृशसंबन्धेन । विशेष्यतावच्छेदकतासंबन्धेन । युक्तत्वादिति । विशेष्यतावच्छेदकतासंबन्धेन घटप्रकारकशाब्दबोधे तेन संबन्धेन घटप्रकारकयोग्यताज्ञानस्य कारणत्वे विशेष्यतावच्छेदकधर्माणामनन्तत्वेपि तेषां कार्यकारणतावच्छेदककोटावनिवेशेनैक एव कार्यकारणभाव इति लाघवं बोध्यम्[१] ।

---

ननु विशेष्यतावच्छेदकतासंबन्धेन तत्प्रकारकशाब्दबोधं प्रति तेन संबन्धेन तत्प्रकारकयोग्यताज्ञानस्य कारणत्वे चैत्रस्य द्रव्यत्वावच्छिन्नविशेष्यकघटप्रकारकयोग्यताज्ञानान्मैत्रस्य घटप्रकारकशाब्दबोधापत्तिः, द्रव्यत्वादौ धर्मितावच्छेदकतासंबन्धेन चैत्रीययोग्यताज्ञानस्य सत्त्वात् । समवायस्य प्रत्यासत्तित्वे तु नापत्तिः, चैत्रीययोग्यताज्ञानस्य समवायेन मैत्रे विरहात् । यदि तु धर्मितावच्छेदकतासंबन्धेन तत्पुरुषीयघटप्रकारकशाब्दबोधं प्रति तेन संबन्धेन तत्पुरुषीयघटप्रकारकयोग्यताज्ञानं कारणमित्युच्यते तदा धर्मितावच्छेदकानामिव पुरुषाणामनन्तत्वेन क्व लाघवमिति निश्चेतुं न शक्यते इति चेद् । चैत्रोद्रव्यं — मैत्रोद्रव्यमितिरीत्या दशपुरुषविशेष्यकद्रव्यप्रकारकदशज्ञानानि । एवं घटादिदशविशेष्यकद्रव्यप्रकारकदशज्ञानानि संवृत्तानि तत्र लाघवगौरवस्य सुज्ञेयत्वात् । तथाहि-आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे तत्तत्पुरुषस्वरूपधर्मितावच्छेदकभेदेन घटत्वादिरूपधर्मितावच्छेदकभेदेन च विंशतिः कार्यकारणभावाः संवृत्ताः । धर्मितावच्छेदकताप्रत्यासत्त्या कार्यकारणभावे तु धर्मितावच्छेदकाप्रवेशेन तत्पुरुषीयत्वमात्रनिवेशः । न तु घटत्वादिधर्माणां प्रवेश मतो दशैव कार्यकार्यकारणभावाः संवृत्ता इति लाघवं बोध्यम् । इदमुपलक्षणम् । एकस्यैव पुंसो यत्र द्रव्यप्रकारकघटादिपञ्चाशद्विषयविशेष्यकपञ्चाशद्ज्ञानानिजातानि तत्र विशेष्यतावच्छेदकभेदेन पञ्चाशत्कार्यकारणभावाः आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावस्वीकर्तृमते । एवं तद्धर्मावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदकत्वे तत्तद्धर्माणां तत्संबन्धस्य प्राधेयत्वस्य कारणतावच्छेदकघटकतया गौरवमिति ज्ञेयम् ।

ननु यत्र द्रव्यं घटः, प्रमेयो घट इति समूहालंबनयोग्यज्ञानं इदं ज्ञानं घटाभाववति द्रव्ये घटप्रकारकमित्यप्रामाण्यज्ञानास्कन्दितं तत्र प्रमेयो घट इति

घटत्वादिधर्मितावच्छेदकघटत्वाद्यवच्छिन्नप्रकारकयोग्यताज्ञानवत्त्वादेव घटत्वादौ धर्मितावच्छेदकतासंबन्धेन तदापत्तेः। न च योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वावच्छिन्नस्य पदादनुपस्थितत्वेपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात्तत्र तादृशप्रत्यासत्त्या शाब्दबोधापत्तिः। आत्मनिष्ठप्रत्यासत्त्या हेतुभूतां द्रव्यत्वावच्छिन्नोपस्थितिमन्तरेणापि तादृशप्रमेयत्वावच्छिन्नोपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकतासंबन्धेन योग्यताज्ञानस्य फलजनकत्वात्तादृशद्रव्यत्वावच्छिन्नोपस्थितिविरहस्याऽकिञ्चित्करत्वादिति वाच्यम्।

---

इत्थं च धर्मितावच्छेदकतायाः प्रत्यासत्तित्वे घटत्वावच्छिन्नप्रकारकाऽभेदसंसर्गकयोग्यताज्ञानं द्रव्यत्वप्रमेयत्वादाविव घटत्वेऽप्यस्तीति घटो घट इत्यत्र शाब्दापत्तिरित्याह। घटत्वादिधर्मितावच्छेदककेति। घटत्वाव-

---

शाब्दस्याप्यनुपपत्तिः, अप्रामाण्यज्ञानानास्कन्दितघटत्वावच्छिन्नप्रकारताशालियोग्यताज्ञानविरहात्। समवायेन कार्यकारणभावे तु प्रमेयत्वावच्छिन्नविशेष्यकशाब्दबोधे प्रमेयत्वावच्छिन्नविशेष्यत्वघटिताऽप्रामाण्यज्ञानविरहान्नानुपपत्तिरिति चेन्न। धर्मितावच्छेदकतासंबन्धेनशाब्दबोधं प्रति स्वविशिष्टावच्छेदकतासंबन्धेन ज्ञानं कारणमिति नानुपपत्तिः। स्वं "योग्यता" ज्ञानं। स्ववै०स्वीयघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताकत्व— स्वाभाववत्त्वोभयसं०। स्वाभावश्च स्वनिष्ठविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकत्वनिष्ठप्रकारतानिरूपितघटाभाववन्निष्ठविशेष्यत्वनिष्ठविषयतानिरूपिताऽवच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वसंबन्धावच्छिन्नप्रतियोगिताकः। अवच्छेदकतावत्ता च प्रसिद्धचतुष्टयसं०। इदं ज्ञानं घटाभाववति द्रव्ये घटप्रकारकमित्यप्रामाण्यज्ञाने द्रव्ये इति सप्तम्यर्थो विशेष्यत्वं, तत्र धर्मिपारतन्त्र्येण द्रव्यत्वस्यान्वयः, आधेयतया घटाभाववतोपि तत्रान्वयः, एतादृशावच्छेदकतासंबन्धेनोक्ताऽप्रामाण्यज्ञानास्कन्दितयोग्यताज्ञानस्य द्रव्यत्वनिष्ठावच्छेदकतायां सत्त्वेन प्रमेयत्वनिष्ठावच्छेदकतायां तदभावसत्वान्नानुपपत्तिः। न च द्रव्यं घट इतिज्ञानं घटाभाववति घटप्रकारकमित्यप्रामाण्यज्ञानास्कन्दितयोग्यताज्ञानाच्छाब्दापत्तिः, द्रव्यत्वनिष्ठावच्छेदकताया अभानेन तादृशावच्छेदकतावत्त्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य केवलान्वयित्वादिति वाच्यम्। तादृशाऽप्रामाण्यज्ञानाभावायां स्वातन्त्र्येण कारणतावच्छेदककोटौ निवेशनोयत्वादिति संक्षेपः।

समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधेहेतुत्वोपगमात् ।

---

च्छिन्नप्रकारकयोग्यताज्ञानबलादेवेति । घटो घट इति योग्यताज्ञानबलादेवेत्यर्थः । एवकारेण द्रव्यं घट इत्यादेर्व्यवच्छेदः । घटत्वावच्छिन्नप्रकारकाऽभेदसंसर्गकयोग्यताज्ञानस्य कारणत्वे तद्घटितसमुदायस्यापि सामग्रीत्वेन तस्याः धर्मितावच्छेदकतासंबन्धेन घटत्वावच्छिन्नप्रकारकाऽभेदसंसर्गकशाब्दबोधापादकत्वसंभवादिति भावः ।

ननु योग्यताज्ञानस्य विषयनिष्ठप्रत्यासत्त्या लाघवेन हेतुत्वेपि उपस्थितेः समवायेनैव हेतुत्वं वाच्यम्, प्रकारता विशेष्यतासंबन्धेनोपस्थितेः सत्वेपि धर्मितावच्छेदकतासंबन्धेन तस्याः कुत्राऽप्यसत्वात्, समवायेनात्मनि सत्वेपि द्रव्यत्वादौ तद्विरहादुपस्थितेः कारणत्वमेव न संभवतीत्याशंकते । न चेति । द्रव्यत्वावच्छिन्नस्य पदादनुपस्थितत्वेपीति । द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितेरभावेपीत्यर्थः । अपिना उपस्थितेः समुच्चयः । उपस्थितेः समवायेनाऽऽत्मनिष्ठतया द्रव्यत्वादावसत्वेन योग्यताज्ञानसहकारित्वाभावात् । तादृशप्रत्यासत्त्या । धर्मितावच्छेदकतासंबन्धेन । प्रत्यासन्नेति । संबद्धेत्यर्थः । तत्र । द्रव्यत्वे । तादृशप्रत्यासत्त्या । धर्मितावच्छेदकताप्रत्यासत्त्या । शाब्दबोधापत्तिः । द्रव्यत्वे घटप्रकारकशाब्दबोधापत्तिः । समवायस्य प्रत्यासत्तित्वे तु द्रव्यत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकशाब्दत्वस्य कार्यतावच्छेदकतया तदाश्रयः शाब्दबोधो द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितिं विना नोत्पद्यते इति तदुपस्थितियोग्यताज्ञानयोः सहकारित्वमिति ध्येयम् । विषयनिष्ठप्रत्यासत्त्या कारणतापक्षे द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितेः कारणत्वं न संभवति । अभेदसंसर्गकघटप्रकारकशाब्दबोधस्य प्रमेयत्वेपि सत्वात्तत्र द्रव्यत्वावच्छिन्नोपस्थितेर्व्यभिचारः । एवं द्रव्यत्वे प्रमेयत्वावच्छिन्नोपस्थितेर्व्यभिचारः । तं दर्शयति । आत्मनिष्ठप्रत्यासत्त्येति । सावधारणम् । समवायेनैवेत्यर्थः । तादृशेति । आत्मनिष्ठप्रत्यासत्त्या हेतुभूत प्रमेयपदजन्येत्यर्थः । फलजनकत्वात् । शाब्दधीजनकत्वात् । तादृशेति । आत्मनिष्ठप्रत्यासत्त्या हेतुभूतद्रव्यपदजन्येत्यर्थः । अकिञ्चित्करत्वादिति । व्यभिचारित्वादिति यावत् । धर्मितावच्छेदकताप्रत्यासत्त्याऽभेदसंसर्गकघटप्रकारकशाब्दाधिकरणे प्रमेयत्वे द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितेः एवं तादृशशाब्दाधिकरणे द्रव्यत्वे प्रमेयत्वावच्छिन्नोपस्थितेर्व्यभिचारोबोध्यः । तथा च विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावो न युक्त इति भावः ।

**येन संबन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन संबन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावपेक्षिततया प्रकारतासंबन्धेन द्रव्यत्वादौ पदजन्यपदार्थोपस्थित्यसत्त्वे तत्र धर्मितावच्छेदकतासंबन्धेन शाब्दबोधापत्तेरयोगात्।**

---

विषयनिष्ठप्रत्यासत्त्यैवोपस्थितेरपि कार्यकारणभावं समर्थयति। **हेतुत्वोपगमादिति।** तथा च प्रकारतासंबन्धेन शाब्दबोधं प्रति प्रकारतासंबन्धेनोपस्थितिः कारणमिति भावः। व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षिततया धर्मितावच्छेदकतासंबन्धेन शाब्दबोधे जननीये तादृशशाब्दबोधव्यापकीभूतस्य प्रकारतासंबन्धेन शाब्दबोधोत्पादकसामग्र्या अपेक्षितत्वमाह। **येन संबन्धेनेति।** धर्मितावच्छेदकतासंबन्धनेत्यर्थः। **यद्धर्मावच्छिन्नकार्यं प्रति।** अभेदसंसर्गकघटप्रकारकशाब्दं प्रति। **येन संबन्धेन।** प्रकारतासंबन्धेन। **यद्धर्मावच्छिन्नकार्यस्य व्यापकता।** अभेदसंबन्धेन घटप्रकारकशाब्दस्य व्यापकता। **तेन संबन्धेन।** प्रकारतासंबन्धेन। **तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्याः।** शाब्दत्वरूपसामान्यधर्मावच्छिन्नोत्पादकसामग्र्याः। **तेन संबन्धेन।** धर्मितावच्छेदकतासंबन्धेन। **तद्धर्मावच्छिन्नकार्योत्पत्तौ।** व्याप्यीभूताऽभेदसंसर्गकघटप्रकारकशाब्दत्वावच्छिन्नकार्योत्पत्तौ। **पदजन्यपदार्थोपस्थित्यसत्त्वे।** सामान्यधर्मावच्छिन्नकार्योत्पादकसामग्रीविरहे इति यावत्। **तत्र।** द्रव्यत्वे। **अयोगात्।** असंभवात्। तथा च धर्मितावच्छेदकतासंबन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दबोधे प्रकारतासंबन्धेन शाब्दोत्पादकसामग्र्याः अपेक्षणीयतया प्रकारतासंबन्धेनोपस्थितिविरहे धर्मितावच्छेदकतासंबन्धेनापि द्रव्यत्वे शाब्दबोधाऽसंभवादिति भावः[1]।

---

१ यद्धर्मं प्रति यद्धर्मस्य व्यापकता तद्धर्मावच्छिन्नकार्यतावच्छेदकसंबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ व्यापकीभूतकार्योत्पादकसामग्र्यो अपेक्षिता इत्युक्तावेव सामञ्जस्ये येन संबन्धेनेत्याद्युक्तिः कार्यकारणतावच्छेदकसंबन्धलाभाय।

व्यापकता चात्र तद्धर्मावच्छिन्नोत्पत्तिकालावच्छेदेन तद्धर्मावच्छिन्नकार्यसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वम्। एतेन व्यापकत्वमत्र प्रतियोगिवैयधिकरण्यघटितम्, तदघटितं वा। आद्ये संयोगं प्रति विभागस्यापि व्यापकत्वापत्त्या संयोगोत्पत्तौ विभागसामग्र्या अपेक्षितत्वापत्तेः। द्वितीये तत्पुरुषीयघटप्रकारक-

न च यत्र प्रमेयत्वावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यप्रमेयत्वावच्छिन्नविशेष्यकोपस्थितौ एवंदूबोधकान्तराद् द्रव्यत्वावच्छिन्नस्य भानं तत्र द्रव्यत्वावच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितेर्हेतुता वाच्या। तथा च प्रकारकविशेषनिवेशस्याऽऽवश्यकत्वे विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तम्, तथासति पुरुषभेदेन कार्यकारणताभावबाहुल्यप्रसंग इति वाच्यम्।

---

शाब्दाधिकरणे द्रव्यत्वे तत्पुरुषीयशाब्दाभावस्य तादृशशाब्दानधिकरणकालावच्छेदेन सत्त्वात्तस्यापि व्यापकत्वानुपपत्तेरिति निरस्तम्।

अथ द्रव्यत्वे धर्मितावच्छेदकतासंबन्धेन योग्यताज्ञानस्य प्रकारतासंबन्धेनोपस्थितेश्च सत्वाद् घटस्य द्रव्यमित्यादावपि द्रव्यत्वे धर्मितावच्छेदकतासंबन्धेन ऽभेदसंसर्गकघटप्रकारकशाब्दबोधापत्तिः। न च प्रथमान्तघटपदसमभिव्याहृतप्रथमान्तद्रव्यपदत्वरूपाऽऽकाङ्क्षाविरहान्नापत्तिरिति वाच्यम्। प्रमेयो घट इत्यादौ उक्ताऽऽकाङ्क्षाविरहेऽपि धर्मितावच्छेदकताप्रकारतासंबन्धाभ्यां योग्यताज्ञानोपस्थितिभ्यां प्रमेयत्वे धर्मितावच्छेदकतासंबन्धेनाभेदसंसर्गकघटप्रकारकबोधोत्पत्त्या तादृशाऽऽकाङ्क्षाज्ञानविरहस्य धर्मितावच्छेदकतासंबन्धेन शाब्दबोधेऽकिञ्चित्करत्वादिति चेन्न।

आत्मनिष्ठप्रत्यासत्त्या आकाङ्क्षाज्ञानस्य कार्यतावच्छेदकं द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दत्वं, तत्र च द्रव्यत्वनिष्ठायाः धर्मितावच्छेदकतायाः सत्त्वेन द्रव्यत्वनिष्ठधर्मितावच्छेदकतासंबन्धेन शाब्दत्वसमनियतम्, एवं च समनियतधर्मावच्छिन्ने कार्ये जननीये समनियतधर्मावच्छिन्नकार्योत्पादकसामग्री अपेक्षिता, तथा च द्रव्यत्वावच्छिन्नविशेष्यकशाब्दकारणीभूतनिरुक्ताऽऽकाङ्क्षाज्ञानविरहान्नापत्तिः।

द्रव्यं घट इति वाक्यजन्यघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिबोधविशेष्यकेच्छावानयमिति तात्पर्यज्ञानमपि स्वीयेच्छानिष्ठविषयतानिरूपितबोधनिष्ठविशेष्यतानिरूपितनिरूपकत्वनिष्ठविषयतानिरूपितविशेष्यत्वनिष्ठ - विषयतानिरूपिताऽवच्छिन्नत्वनिष्ठविषयतानिरूपितविषयतासंबन्धेन द्रव्यत्वे वर्तते। अत्रेदं बोध्यम्। उपस्थितियोग्यतातात्पर्यज्ञानानां विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावापेक्षया लाघवमतः स एव स्वीकृतः।

आकाङ्क्षाज्ञानस्य तु कार्यकारणभावो विषयनिष्ठप्रत्यासत्त्या न संभवतीति आत्म-निष्ठप्रत्यासत्त्यैव दर्शितः ।

अथ स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेनैवो-पस्थितेर्हेतुताऽस्तु किं प्रकारतानिवेशेनेति चेन्न । यत्र द्रव्यं द्रव्यपदशक्यं प्रमेयं प्रमेयपदशक्यमिति समूहालंबनज्ञानं प्रमेयत्वावच्छिन्ने प्रामाण्यज्ञानास्कन्दितम्, तत्र तदनन्तरजायमानद्रव्यत्वावच्छिन्नमात्रविषयकोपस्थितेर्निरुक्तधर्मितावच्छेदकता-संसर्गेण प्रमेयत्वेपि सत्त्वात्प्रमेयत्वेपि शाब्दापत्तिरतः प्रकारताया उपादानम् । उपादाने चोक्तधर्मितावच्छेदकताविशिष्टप्रकारताया द्रव्यत्वे एव सत्त्वान्नापत्तिः ।

यत्तु प्रकारतायां तादृशावच्छेदकतावै० स्वसामानाधिकरण्य-स्वावच्छेदक-संबन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुयसं० । स्ववृत्तित्वं न स्वानवच्छेदकानवच्छिन्नत्वरूपेण । यत्र द्रव्यं द्रव्यपदशक्यं घटश्च द्रव्यसंबन्धीति समूहालंबनं ततःप्रतिबन्धकवशाद्द्रव्यविषयकोपस्थितिर्नजाता किन्तु घटोपस्थितिः तत्र घटत्वे शाब्दापत्तिवारणायाऽऽद्यः संबन्धः । उद्बोधकादुपस्थितद्रव्यत्वे शाब्दापत्तिः, कालिकेन प्रमेयत्वनिष्ठतादृशावच्छेदकतासामानाधिकरण्यस्य द्रव्यत्वनिष्ठप्रकारतायां सत्वादतो द्वितीयसंबन्धनिवेशः । घटो घटपदशक्य इतिवृत्तिज्ञानाद्घटोपस्थितौ उद्बोधकाच्च प्रमेयवत उपस्थितौ प्रमेये शाब्दापत्तिवारणाय तृतीयसंबन्धनिवेशः । प्रमेयवान्प्रमेयपदशक्य इति वृत्तिज्ञानात्प्रमेयप्रकारकोपस्थितौ उद्बोधकाच्च घटो-पस्थितिस्तत्र घटत्वे शाब्दापत्तिवारणाय चतुर्थसंबन्धप्रवेशः । तन्न सम्यक् । यत्र द्रव्यं द्रव्यपदशक्यमिति वृत्तिज्ञानेन प्राण्यज्ञानास्कन्दितम्, उद्बोधकाच्च द्रव्योप-स्थितिस्तत्र द्रव्यत्वे शाब्दापत्तिर्दुर्वारैवेति ध्येयम् ।

अत्रेदं बोध्यम् । घटो घटपदशक्यः, घटपदं घटे शक्तम् । घटः घटपदशक्य-संबन्धी । घटपदं पटसंबन्धिशक्तमित्यादि अनेकविधानि वृत्तिज्ञानानि कारणानि । तथा च स्वजनकज्ञानीयशक्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्ट-प्रकारता, स्वजनकज्ञानीयपटत्वावच्छिन्नविशेष्यतानिरूपितशक्तत्वनिष्ठप्रकारत्वाव-च्छिन्नविशेष्यतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टप्रका-रता, स्वजनकज्ञानीयशक्यसंबन्धित्व' रूपलक्षणा"निष्ठप्रकारतानिरूपितविशेष्यता-विशिष्टप्रकारता, स्वजनकज्ञानीयपटत्वावच्छिन्नविशेष्यतानिरूपितशक्तत्वनिष्ठप्रकार-त्वावच्छिन्नविशेष्यतानिरूपितसंबन्धिनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकार-तावच्छेदकताविशिष्टप्रकारताऽन्यतमसंबन्धेनोपस्थितेः कारणत्वम् ।

स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितेर्हेतुतां स्वीकृत्य तादृशापत्तेर्वारणात् ।

---

प्रकारतासंबन्धेनोपस्थितेः कारणत्वे दोषमाह । न चेति । आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभाववादिनः शंका, प्रमेयत्वावच्छिन्नविशेष्यकवृत्तिज्ञानजन्येति । प्रमेयं प्रमेयपदशक्यमिति वृत्तिज्ञानजन्येत्यर्थः । उद्बोधकान्तरात् । इन्द्रियसन्निकर्षादितः । द्रव्यत्वावच्छिन्नस्य भानमिति । द्रव्यं प्रमेयं चेति समूहालंबनोपस्थितिरित्यर्थः । द्रव्यत्वावच्छिन्नविषयकशाब्दापत्तिवारणायेति । प्रमेयपदजन्यसमूहालंबनोपस्थितेः प्रकारतासंबन्धेन द्रव्यत्वेपि सत्वात्तत्रधर्मितावच्छेदकतासंबन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दापत्तिवारणायेत्यर्थः । वाच्येति । तथाचोद्बोधकान्तरजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितेर्द्रव्यत्वावच्छिन्नविशेष्यकं यद्वृत्तिज्ञानं "द्रव्यं द्रव्यपदशक्यमित्याकारकं" तज्जन्यत्वाभावान्नापत्तिः । तथा च । तादृशोपस्थितेः कारणत्वे च । आवश्यकत्वे । द्रव्यत्व-प्रमेयत्वादिधर्माणां कार्यकारणतावच्छेदककोटौ निवेशेन आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे साम्ये इति यावत् । विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तमिति । धर्मितावच्छेदकतासंबन्धेन तद्धर्मावच्छिन्नप्रकारकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मावच्छिन्नविषयकोपस्थितेः प्रकारतासंबन्धेन हेतुत्वकल्पनमयुक्तमित्यर्थः । तथा सति । विषयनिष्ठप्रत्यासत्या हेतुत्वे सति । पुरुषभेदेनेति । प्रकारतासंबन्धेन तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति प्रकारतासंबन्धेन तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मावच्छिन्नविषयकोपस्थितेः कारणत्वे चैत्रस्य द्रव्यत्वप्रकारकोपस्थितिसत्वे मैत्रस्य द्रव्यत्वावच्छिन्नविषयकशाब्दबोधापत्तिः । चैत्रीयोपस्थितेः प्रकारतासंबन्धेन द्रव्यत्वे सत्वात् तत्पुरुषीयत्वं निवेश्यमिति भावः । आत्मनिष्ठप्रत्यासत्या च द्रव्यत्वावच्छिन्नधर्मिकयोग्यताज्ञानादिरूपसामग्र्यभावान्न घटोघट इत्यत्र शाब्दबोधापत्तिरिति शंकितुराशयः ।

---

न च परस्परजन्ये व्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्यावश्यकतया कस्यापि कार्यतावच्छेदकस्याभेदसंसर्गकघटप्रकारकशाब्दबोधत्वाऽव्यापकतयाऽसमनियततया चाऽनपेक्षणात्पदादनुपस्थितत्वेपि द्रव्यत्वे शाब्दबोधापत्तिर्दुर्वारैवेति वाच्यम् । व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि अपेक्षणादुक्तस्थले कस्या अपि सामग्र्या विरहादिति ध्येयम् ।

न च पदार्थेपि प्रकारतासंबन्धेन शाब्दबोधोत्पत्त्या तत्र प्रकारता-संबन्धेन पदार्थोपस्थितेरभावात्प्रकारनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुता-व्यभिचारेण कल्पयितुमशक्येति वाच्यम् ।

---

समाधत्ते । स्वजनकेति । स्वमुपस्थितिः । तज्जनकत्वं-तदव्यवहित-पूर्ववर्त्तित्वमात्रम्, शेषवैयर्थ्यात् । उपस्थित्यव्यवहितपूर्ववर्त्तियत्प्रमेयं प्रमेय-पदशक्यमितिवृत्तिज्ञानं तदीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता-प्रमेयत्वे, अथ च प्रमेयपदजन्योपस्थितीयप्रकारतापि प्रमेयत्वे इतिरीत्या-तादृशावच्छेदकतावैशिष्ट्यं प्रमेयपदजन्योपस्थितीयप्रकारतायां, नतूद्बोध-कान्तरजन्यद्रव्योपस्थितीयद्रव्यत्वनिष्ठप्रकारतायां, तस्याः स्वजनकज्ञानीय-वृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताप्रयोज्यत्वाभावात् । प्रकारतायां तादृशधर्मितावच्छेदकतावै० स्वप्रयोज्यत्वसं० । उपस्थितीयविषयता वृत्ति-ज्ञानीयविषयताप्रयोज्येति नियमात् ।

प्रकारतासंबन्धेन शाब्दबोधे स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपित-विशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितेः कारणत्वे व्यभिचार-माशंकते । न चेति । पदार्थेपीति । अपिना पदार्थतावच्छेदकसमुच्चयः । द्रव्यं घट इत्यत्र घटेपीति यावत् । तत्र । घटे । अभावादिति । घटपद-जन्योपस्थितेः प्रकारतासंबन्धेन घटत्वे एव सत्वादिति भावः । प्रकारनिष्ठ-निष्ठप्रत्त्यासत्त्या । प्रकारतासंबन्धेन । व्यभिचारेण । व्यतिरेकव्यभिचारेण । न च स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टत्वे-नैव प्रकारतानिवेशोस्तु । वै०स्वप्रयोज्यत्व-स्वनिरूपकधर्मिताप्रयोज्यत्वान्य-तरसंबन्धेन । तथा चान्यतरान्तर्गतद्वितीयसंबन्धसत्वान्न व्यतिरेकव्यभिचार इति वाच्यम् । तादृशविशिष्टस्य मुख्यविशेष्येपि समाधत्ते । परामर्शेत्यादि । परामर्शनिष्ठकारणतायाः यो विचारः तत्र दर्शिता या दिक् रीतिः तया तद्रीत्या व्यभिचारो वारणीय इत्यर्थः । रीतिश्च धर्मितावच्छेदकतासंबन्धेन धूमलिंग-कवन्हिविधेयकानुमितिं प्रति धर्मितावच्छेदकतासंबन्धेन वन्हिव्याप्यवत्ताधूम-वत्तापरामर्शस्य कारणत्वे यत्र भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानं ततो वन्हिव्या-प्यधूमवत्तापरामर्शः ततो वन्हिव्याप्याऽऽलोकवद्द्रव्यमिति परामर्शः अप्रामाण्य ज्ञाननाशश्च । ततो वन्हिमान्पर्वतः द्रव्यंवन्हिमदिति समूहालंबनानुमितिः । तत्र समूहालंबनानुमित्यधिकरणे द्रव्यत्वे, धूमलिंगकपरामर्शस्य आलोकलिंग-कपरामर्शस्य च धूमत्वे विरहाद्व्यभिचारवारणाय तत्तत्परामर्शधर्मितावच्छेद-

परामर्शकारणताविचारदर्शितदिशा व्यभिचारस्य वारणीयत्वादिति चेत्।

तर्हि तद्धर्मावच्छिन्नाऽभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेनशाब्दबोधं प्रति तद्धर्मभेदस्यापि हेतुतायाः स्वीकरणीयतया न घटो घट इत्यादिस्थले शाब्दबोधापत्तिः। स घट इत्यादिवाक्याज्जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य, घटः स इत्यादिवाक्यात्स्वरूपतो घटत्वादिधर्मितावच्छेदककस्य जातित्वादिविशिष्टघटत्वावच्छिन्नप्रकारताकस्य शाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये।

---

कताविशिष्टधर्मितावच्छेदकता कार्यतावच्छेदकसंबन्धोदर्शितः। तद्वत्प्रकृतेपि स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारता - कार्यतावच्छेदकसंबन्धस्तथाच नोक्तव्यभिचार इति भावः[१]।

---

सत्वात्तत्र प्रकारतासंबन्धेनशाब्दबोधानुत्पत्तेरन्वयव्यभिचारात्। विषयतायाः कार्यतावच्छेदकसंबन्धत्वेऽन्वयव्यभिचारणेपि संसर्गे व्यतिरेकव्यभिचारः तत्र विषयतासंबन्धेन शाब्दबोधोत्पत्तेस्तत्र कारणाभावात्। इत्थं च कारणतावच्छेदककोटौ प्रकारतास्थाने विषयतानिवेशेपि न निस्तारः। द्रव्यं घट इत्यादौ तादृशविषयतासंसर्गेणोपस्थितेर्मुख्यविशेष्येपि सत्वात्, तत्र प्रकारतासंबन्धेन शाब्दबोधविरहात्। संसर्गेपि तद्दोषतादवस्थ्यात्। न च कार्यतावच्छेदककोटावेव विषयतानिवेश्या, विषयतायां संसर्गताभिन्नत्वं निवेशनीयमिति वाच्यम्। सामान्यलक्षणानभ्युपगन्तृमते शक्तिग्रहाऽविषयस्यापूर्वव्यक्तेरपि योग्यताबलेन शाब्दबोधोत्पत्त्या तत्र व्यभिचारापत्तेः।

अथ सः प्रमेय इत्यादौ तच्छब्दान्नीलघटयोः विशृङ्खलोपस्थितिः तत्र नीलघटत्वावच्छिन्नविशेष्यकप्रमेयत्वावच्छिन्नप्रकारकशाब्दापत्तिः। नीलत्वे घटत्वे च प्रकारतासंबन्धेन शाब्दबोधस्य, तादृशप्रकारतासंबन्धेनोपस्थितेश्च सत्वात्। नचाऽऽकाङ्क्षाज्ञानविरहान्नतथेति वाच्यम्। नीलत्वसंसर्गस्य वृत्तिभास्यतया आकाङ्क्षाया अप्रयोजकत्वादिति चेन्न। उपस्थितौ यद्विषयतयोर्ननिरूप्यनिरूपकभावः शाब्दबोधेनिरूप्यनिरूपकभावापन्नयोस्तयोराकाङ्क्षाप्रयोज्यत्वोपगमात। प्रकृते चाऽऽकाङ्क्षाज्ञानरूपकारणविरहान्नापत्तिरिति ध्येयम्।

अयमत्रसंग्रहः। विशेष्यतावच्छेदकतासंबन्धेन घटप्रकारकशाब्दबोधं प्रति विशेष्यतावच्छेदकतासंबन्धेन घटप्रकारकयोग्यताज्ञानस्य हेतुत्वेन समवायेन

द्रव्यत्वावच्छिन्नविषयकशाब्दबोधं प्रति द्रव्यत्वावच्छिन्नविशेष्यकद्रव्यपदवृत्तिज्ञान-जन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितेः समवायेन हेतुत्वे द्रव्यपदवृत्तिज्ञानजन्योपस्थितिं विनापि प्रमेयपदवृत्तिज्ञानजन्यप्रमेयोपस्थितितो यथा प्रमेयत्वे धर्मितावच्छेदकता-संबन्धेन घटप्रकारकयोग्यताज्ञानबलात्तत्र धर्मितावच्छेदकतासंबन्धेन शाब्दबोधो भवति तथा द्रव्यत्वे तादृशयोग्यताज्ञानबलात्कथं न घटप्रकारकशाब्दबोधो जायते। न च द्रव्यत्वावच्छिन्नविशेष्यकोपस्थितिरूपकारणविरहान्न शाब्दबोध इति वाच्यम्। तादृशोपस्थितेः समवायेन कारणत्वे समवायेन तादृशोपस्थितेर्द्रव्यत्वे विरहेण तादृशोपस्थितिविरहस्याकिञ्चित्करत्वात्। अतः प्रकारतासंबन्धेन द्रव्यत्वावच्छि-न्नविशेष्यकशाब्दबोधं प्रति द्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितिः प्रकारतासंबन्धेन कारणमिति वक्तव्यम्। तथा सति द्रव्यत्वे प्रकारतासंबन्धेन तदानीं द्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नोपस्थितिविरहान्न धर्मितावच्छेदकता-संबन्धेन शाब्दबोधापत्तिः। एवं चैकपुरुषस्य द्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्न-विषयकोपस्थितितः पुरुषान्तरस्य द्रव्यत्वावच्छिन्नविषयकशाब्दबोधवारणाय तत्पु-रुषीयद्रव्यत्वावच्छिन्नविषयकशाब्दबोधं प्रति तत्पुरुषीयद्रव्यपदवृत्तिज्ञानजन्यद्रव्य-त्वावच्छिन्नविशेष्यकोपस्थितेः प्रकारतासंबन्धेन कारणत्वं वाच्यमिति पुरुषभेदेन कारणताबाहुल्यभिया समवायसंबन्धेन द्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधं प्रति द्रव्यत्वावच्छिन्नविशेष्यकद्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नोपस्थितेः समवायेन कारणत्वं वक्तव्यम्। एवं द्रव्यत्वावच्छिन्नविशेष्यक-घटप्रकारकशाब्दबोधं प्रति द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानस्यापि समवायेनैव हेतुत्वं वक्तव्यम्, तथा च तादृशयोग्यताज्ञानद्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नोपस्थित्योः परस्परसह-कारितया द्रव्यत्वावच्छिन्नोपस्थितिं विना न द्रव्यत्वधर्मितावच्छेदककयोग्यताज्ञानाद् द्रव्यत्वधर्मितावच्छेदककशाब्दापत्तिः। एवं च घटो घट इत्यत्र न शाब्दापत्तिः। अभेदसंसर्गेण घटप्रकारकघटविशेष्यकशाब्दबोधान्तर्भावेण योग्यताज्ञानस्य हेतुत्वा-कल्पनेनैव तादृशापत्तिविरहात्।

ननु पदार्थोपस्थितेः प्रकारतासंबन्धेन हेतुत्वे तत्तत्पुरुषभेदेन कार्यकारणभाव बाहुल्यम्। घटप्रकारकयोग्यताज्ञानस्य समवायसंबन्धेन तादृशशाब्दबोधं प्रति हेतुत्वे तु धर्मितावच्छेदकभेदेन कार्यकारणभावानन्त्यम्, इति पुरुषापेक्षया धर्मि-तावच्छेदकानां बाहुल्येन धर्मितावच्छेदकाननिवेश्य विशेष्यतावच्छेदकतासंबन्धेन घटप्रकारकशाब्दबोधं प्रति विशेष्यतावच्छेदकतासंबन्धेन योग्यताज्ञानस्य कारण-त्वकल्पने पदार्थोपस्थितेश्च पुरुषाऽनिवेश्य कारणताकल्पने लाघवम्। तथा च

धर्मितावच्छेदकतासंबन्धेन घटप्रकारकयोग्यताज्ञानबलाद् घटत्वे घटप्रकारकशाब्दबोधापत्तिदुर्वारैव। न च प्रकारतासंबन्धेन तत्पुरुषीयद्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधं प्रति प्रकारतासंबन्धेन पदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नविशेष्यकोपस्थितेः समवायेन हेतुत्वे द्रव्यत्वमन्तर्भाव्यैव कार्यकारणभावो न तु पुरुषमन्तर्भाव्य पुरुषभेदेन तद्भेदापत्तेः। एवमेव घटादिस्थलेऽपि। तथा च समवायेन द्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधं प्रति द्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितेः समवायेन लाघवाद्धेतुत्वे योग्यताज्ञानस्य समवायेन धर्मितावच्छेदकमन्तर्भाव्य हेतुत्वमावश्यकम्। अन्यथा द्रव्यत्वावच्छिन्नोपस्थितिं विना यथा प्रमेयत्वे घटप्रकारकयोग्यताज्ञानबलाच्छाब्दबोध उत्पद्यते तथा द्रव्यत्वेऽपि संभवादिति वाच्यम्। घटप्रकारकशाब्दबोधं प्रति घटप्रकारकयोग्यताज्ञानस्य समवायेन हेतुत्वे तत्तत्स्थले धर्मितावच्छेदकभेदेन कार्यकारणभावबाहुल्यम्। न च योग्यताज्ञानस्य धर्मितावच्छेदकमनिवेश्य धर्मितावच्छेदकतासंबन्धेन हेतुत्वे एकघटस्थले यावन्तः पुरुषास्तद्भेदेन कार्यकारणभावानन्त्यम्। एवं एकघटस्थलेऽपि। एवं द्रव्यत्वावच्छिन्नोपस्थितेर्हेतुतायामपि पुरुषभेदेन कार्यकारणभावानन्त्यमिति गौरवमतो धर्मितावच्छेदकघटितस्य समवायेन हेतुत्वकल्पने एव लाघवमिति वाच्यम्। एवमपि पुरुषापेक्षया धर्मितावच्छेदकानां बाहुल्येन तद्भेदात्कार्यकारणभावभेदेन गौरवस्य दुर्वारत्वात्। अत्रोच्यते। द्रव्यत्वावच्छिन्नविषयकशाब्दबोधं प्रति सामान्यतो द्रव्यत्वावच्छिन्नविशेष्यकपदवृत्तिज्ञानजन्योपस्थितेर्हेतुत्वे यदा द्रव्यं घटपदशक्यमिति शक्तिभ्रमजन्यद्रव्यत्वावच्छिन्नोपस्थितिर्वर्तते तत्र द्रव्यत्वावच्छिन्नविशेष्यकाभेदसंसर्गकशाब्दापत्तिर्दुर्वारैवेति द्रव्यत्वावच्छिन्नविशेष्यकद्रव्यपदवृत्तिज्ञानजन्यद्रव्यत्वावच्छिन्नोपस्थितित्वेन हेतुता वाच्या। एवं च द्रव्यं घट इत्यानुपूर्वीज्ञानत्वेनापि कारणत्वान्तरं वाच्यमिति तयोः परस्परसहकारितया एकपदवृत्तिज्ञानजन्योपस्थिति अन्यपदघटिताऽऽकांक्षाज्ञानाभ्यां शाब्दबोधापत्तिः। एवं च पदभेदेन पदार्थोपस्थितेः कारणताया अनन्ततया तत्पुरुषीयत्वमन्तर्भाव्य प्रकारतासंबन्धावच्छिन्नहेतुत्वकल्पने एकद्रव्यपदस्थलेऽपि यावन्तः पुरुषास्तद्भेदेन कार्यकारणभावानन्त्यम्, एकद्रव्यत्वावच्छिन्नोपस्थितिस्थलेऽपीति महागौरवमतो धर्मितावच्छेदकं निवेश्य पुरुषविशेषानिवेश्य समवायेन हेतुत्वे एव लाघवम्। अथ शुद्धघटत्वधर्मितावच्छेदककाभेदसंसर्गकघटप्रकारकशाब्दापत्तिविरहेऽपि विशेष्यतावच्छेदकतासंबन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दबोधस्य घटत्वादौ विशेष्यतावच्छेदकतासंबन्धेन प्रत्यक्षात्मकघटप्रकारकयोग्यताज्ञानमादायापत्तिरबाधितैव।

न च द्रव्यत्वधर्मितावच्छेदककाभेदसंसर्गकघटप्रकारकशाब्दबोधं प्रति द्रव्यं घट

इत्यानुपूर्वीप्रकारकज्ञानस्य कारणता समवायेनैव, आनुपूर्वीरूपाकाङ्क्षाया अर्थाऽघटितत्वया विषयनिष्ठप्रत्यासत्त्या हेतुत्वासंभवात्। एवं च विशेष्यतावच्छेदकतासंबन्धेन घटप्रकारकयोग्यताज्ञानेन कार्ये जननीये द्रव्यं घट इत्यानुपूर्वीज्ञानस्य यथा सहकारिता तथा प्रमेयो घट इत्यानुपूर्वीज्ञानस्यापि, तादृशाऽऽकाङ्क्षाज्ञानादपि प्रमेयत्वे शाब्दबोधोदयात्। तथा चाभेदसंसर्गकघटप्रकारकयोग्यताज्ञानाद् द्रव्यं घट इत्याकाङ्क्षाज्ञानं विनापि प्रमेयो घट इत्याकाङ्क्षाज्ञानाद्यथा प्रमेयत्वे धर्मितावच्छेदकतासंबन्धेन घटप्रकारकयोग्यताज्ञानाद् घटप्रकारकशाब्दबोधो जायते, तथा तादृशाकाङ्क्षाज्ञानाद् द्रव्यं घट इत्याकाङ्क्षाज्ञानं विनापि द्रव्यत्वे कथं न जायते अतो द्रव्यत्वधर्मितावच्छेदककाभेदसंसर्गकघटप्रकारकशाब्दबोधं प्रति द्रव्यत्वधर्मितावच्छेदककाभेदसंसर्गकघटप्रकारकयोग्यताज्ञानत्वेनैका कारणता, अपरा च द्रव्यं घट इत्यानुपूर्वीज्ञानत्वेन तयोः परस्परं सहकारिता। एवं प्रमेयत्वधर्मितावच्छेदककाऽभेदसंसर्गकघटप्रकारकशाब्दबोधं प्रति प्रमेयत्वधर्मितावच्छेदककघटप्रकारकयोग्यताज्ञानत्वेन, प्रमेयो घट इत्यापूर्वीज्ञानत्वेन च कारणता तयोः परस्परं सहकारिता। एवं च घटत्वधर्मितावच्छेदककाभेदसंसर्गकघटप्रकारकशाब्दबोधस्याऽप्रसिद्धयाऽऽकाङ्क्षाज्ञानयोग्यताज्ञानयोस्तत्र कारणत्वानभ्युपगमान्न तस्यापत्तिः संभवतीति वाच्यम्। आकाङ्क्षाज्ञानस्य शाब्दबोधं प्रति न साक्षात्कारणत्वम्, अपि तु पदार्थोपस्थितिनिष्ठकारणतायां जन्यतासंबन्धेनाऽव्यवहितोत्तरत्वसंबन्धेनवाऽवच्छेदकत्वमेवेति "नव्यास्तु इत्यादिना" आकाङ्क्षाग्रन्थे मणिकृताऽभिधानात्। इत्थं द्रव्यं घटइत्यानुपूर्वीघटकद्रव्यपदस्य घटत्वावच्छिन्ने शक्तिभ्रमो लक्षणाग्रहो वा तादृशवृत्तिग्रहाद् घटत्वावच्छिन्नस्योपस्थितिः तस्याः प्रकारतासंबन्धेन घटत्वेपि सत्त्वाद्धर्मितावच्छेदकतासंबन्धेन घटत्वेपि अभेदसंसर्गकघटप्रकारकशाब्दबोधापत्तिर्दुर्वारैव। घटोघट इत्यानुपूर्वीघटकघटपदवृत्तिज्ञानजन्योपस्थितेरपि प्रकारतासंबन्धेनाभेदसंसर्गकघटप्रकारकशाब्दं प्रति हेतुता वाच्या। अन्यथा तादृशानुपूर्वीघटकघटपदस्य द्रव्यत्वावच्छिन्ने शक्तिभ्रमो लक्षणाग्रहो वा तादृशवृत्तिग्रहाद् द्रव्यत्वावच्छिन्नोपस्थितौ सत्यां द्रव्यत्वेऽभेदसंसर्गकघटप्रकारकशाब्दानुपपत्तिः। एवं च घटोघट इत्यानुपूर्वीघटकघटपदस्य घटत्वावच्छिन्ने शक्तिप्रमातो घटत्वावच्छिन्नोपस्थितौ घटत्वेपि अभेदसंसर्गकघटप्रकारकशाब्दापत्तिर्दुर्वारैव।

एवं मिश्रमते आकाङ्क्षाज्ञानस्य स्वातन्त्र्येण कारणत्वं नास्ति किन्तु तात्पर्यज्ञानधर्मितावच्छेदकतयैवाकाङ्क्षाज्ञानस्य कारणत्वम्। ननु तात्पर्यज्ञानं वाक्यधर्मिकमेव शाब्दबोधकारणम्। तथा च द्रव्यत्वावच्छिन्नविशेष्यकाऽभेद-

**घटो नीलघट इत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्र दर्शितरीत्या सोऽप्युपपादनीयः ।**

---

द्रव्यं घट इत्यादौ विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे कार्यकारणताच्छेदककोटौ धर्मितावच्छेदकाऽप्रवेशेनाऽभेदसंसर्गकघटप्रकारकबोधस्य द्रव्यत्वे प्रसिद्धस्य घटत्वे आपत्तिरिति "अथ द्रव्यत्वादौ प्रसिद्धस्येत्यारभ्य इति चेदिति ग्रन्थेनाऽऽशंकितं समाधत्ते । तर्हीत्यादिना । तद्धर्मपदेन प्रकारतावच्छेदकधर्मो ग्राह्यः । अग्रिमतद्धर्मपदेनापि स एव । स्वीकरणीयतयेति । तथाचाऽभेदसंसर्गकबोधे विशेष्यतावच्छेदकेप्रकारतावच्छेदकभेदः कारणमिति भावः । नशाब्दबोधापत्ति । विशेष्यतावच्छेदकीभूतघटत्वे प्रकारतावच्छेदकीभूतघटत्वभेदविरहादिति भावः ।

स घट इत्यत्र तत्पदार्थो जातिमान्, विशेष्यतावच्छेदकताजातित्वावच्छिन्ना । घटः स इत्यत्र तत्पदार्थो जातिमान् प्रकारतावच्छेदकता जातित्वा-

---

संसर्गकघटप्रकारकशाब्दबोधं प्रति द्रव्यं घट इत्यानुपूर्व्यवच्छिन्नधर्मिकघटप्रकारकशाब्दबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य समवायेनैव हेतुत्वम्, न तु धर्मितावच्छेदकतासंबन्धेन, तेन संबन्धेन तस्य द्रव्यत्वादौ विरहात् । तथा च तथैव द्रव्यत्वावच्छिन्नविशेष्यकाभेदसंसर्गकघटप्रकारकयोग्यताज्ञानस्यापि समवायेनैव हेतुत्वम् । तयोः परस्परं सहकारिता तदैवोपपद्यते । तथा च घटत्वावच्छिन्नविशेष्यकाभेदसंसर्गकघटप्रकारकशाब्दबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य घटत्वावच्छिन्नविशेष्यकाभेदसंसर्गकघटप्रकारकशाब्दबोधे हेतुता न कल्प्यते तादृशशाब्दबोधस्याप्रसिद्धत्वात्, एवं च नापत्तिरिति चेन्न । तात्पर्यज्ञानस्य न समवायेन हेतुत्वम्, किन्तु विशेष्यतावच्छेदकतासंबन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दं प्रति द्रव्यं घट इत्यानुपूर्व्यवच्छिन्नविशेष्यतानिरूपितोच्चरितत्वनिष्ठप्रकारतानिरूपितेच्छानिष्ठप्रकारतानिरूपितबोधनिष्ठा या निरूपकत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतातन्निरूपकनिरूपकत्वसंबन्धावच्छिन्नप्रकारतानिष्ठप्रकारतानिरूपकाभेदसंबन्धावच्छिन्नत्वनिष्ठप्रकारतानिरूपकनिरूपितत्वसंबन्धावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपकावच्छिन्नत्वसंबन्धावच्छिन्नप्रकारतावत्वसं० । तथा च द्रव्यं घट इत्यानुपूर्व्यवच्छिन्नं वाक्यं द्रव्यत्वावच्छिन्नविशेष्यतानिरूपिताभेदसंबन्धावच्छिन्नघटप्रकारतानिरूपकशाब्दबोधेच्छयोच्चरितमिति तात्पर्यज्ञानस्य निरुक्तप्रकारतारूपपरंपरासंबन्धेन द्रव्यत्वे सत्वात्तत्र च योग्यताज्ञानस्य च सत्वाद् घटत्वे आपत्तिः सुदृढैव । घटो घट इति प्रत्यक्षात्मकयोग्यताज्ञानस्य च घटत्वे सत्वादिति ध्येयम् ।

वच्छिन्नेति पूर्वस्माद्विशेषः । जातित्वादिना घटत्वादि धर्मितावच्छेदककस्येति । अस्य शाब्दबोधस्योपपत्तये इत्यनेनाऽन्वयः । यथाश्रुते शाब्दबोधो न स्यात्, विशेष्यतावच्छेदकप्रकारतावच्छेदकयोरैक्यादिति ध्येयम् । विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे इति । विशेष्यतावच्छेदकता-प्रकारतावच्छेदकता चेत्यर्थः । निरवच्छिन्नत्वेन विशेषणीये इति । निरवच्छिन्ना-ग्राह्या इत्यर्थः ।

तथा च तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताकाभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन शाब्दबोधे तद्धर्मभेदः कारणमिति भावः । आद्ये विशेष्यतावच्छेदकता जातित्वावच्छिन्ना । द्वितीये च प्रकारतावच्छेदकता जातित्वावच्छिन्नेति तयोः कार्यतावच्छेदकानाक्रान्तत्वं बोध्यम् ।

अथ घटो नीलघट इतिवाक्यादन्वयबोधानुपपत्तिः विशेष्यतावच्छेदकीभूतघटत्वे प्रकारतावच्छेदकीभूतघटत्वभेदाऽसत्वादत आह । अन्वयबाधस्येति । अभेदसंसर्गकनीलघटप्रकारकघटविशेष्यकाऽन्वयबोधस्येत्यर्थः । विधेयांशे अधिकावगाहिशाब्दबोधस्य प्राचीनानुमतत्वादाह । प्रामाणिकत्वे इति । अन्यत्र दर्शितरीत्येति । पर्याप्तिविवक्षयेत्यर्थः । सोपि । अन्वयबोधोपि । तथा च तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणमिति भावः ।

---

ननु नीलघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति नीलभेद घटत्वभेदोभयं कारणम् नीलघटत्वोभयभेदो वा । नाद्यः विधेयांशे अधिकावगाहिन उक्तशाब्दबोधस्यानुपपत्तिः, उक्तभेदद्वयस्य घटत्वेऽसत्वात् । न द्वितीयः । नीलघटो नीलघटइतिवाक्याच्छाब्दबोधापत्तिः, विशेष्यतावच्छेदकीभूतनीले घटत्वे च नीलघटत्वोभयभेदस्य सत्वात् उभयभेदस्य केवलान्वयित्वादिति चेन्न । तद्रूपवृत्तिप्रभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दबोधं प्रति तद्रूपभेदस्य कारणत्वात् । प्रकारतायां रूपवृत्तित्वं च स्वनिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० ।

अथ तथापि विधेयांशे अधिकावगाहिशाब्दबोधानुपपत्तिस्तदवस्थैव । नीलघटत्वावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकताया घटत्वे एव सत्वात् ।

स स इत्यादिवाक्याज्जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकाऽभेदाऽन्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्व प्रत्यासत्त्या शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम्।

एवं दण्डवान् दण्डवानित्यादिवाक्याद्दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदभेदान्वयवारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितावच्छेदकतानिरूपितावच्छेदकतावच्छेदकत्वसंबन्धेन शाब्दबोधे दण्डत्वादिभेदस्यापि पृथक्कारणत्वं कल्पनीयम्। अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोपि पूर्ववद्बोध्यः।

---

तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन शाब्दं प्रत्येव तद्धर्मभेदस्य कारणत्वे यत्र

---

न च साक्षात्परंपरासाधारणावच्छेदकतायाश्च स्वीकारे न दोषः, नील नीलत्व घटत्व समुदायेऽवच्छेदकतासत्त्वात् तादृशसमुदायत्वभेदस्य घटत्वगतैकत्वे सत्त्वादिति वाच्यम्। एवं सति निरवच्छिन्नत्वनिवेशस्य वैयर्थ्यापातात्, जातिजातित्व-घटत्व-समुदायेऽवच्छेदकतासत्त्वादिति चेन्न। घटत्वगतैकत्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दबोधं प्रति घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारत्वावदन्यत्वस्य हेतुत्वविवक्षणात्। प्रकारतावत्ता च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं०।

वस्तुवस्तु विशेष्यतात्वसंबन्धेन शाब्दबोधे प्रकारतावदन्यत्वं हेतुः। प्रकारतावत्ता च स्वनिरूपितत्व, स्वनिरूपितावच्छेदकतात्वव्यापकत्वोभयसं०। स्वं प्रकारता। व्यापकता च स्वनिरूपितावच्छेदकतावत्त्वसं०। स्वं विशेष्यता। एवं च घटोघट इत्यादौ नापत्तिः। तत्र विशेष्यतायां प्रकारतावदन्यत्वविरहात्। अवच्छेदकतावत्ता च स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वावच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वैतच्चतुष्टयसंबन्धेन। स्ववृत्तित्वं च स्वावच्छेदकानवच्छिन्नत्वसं०। तेन द्रव्यं घट इत्यादौ द्रव्यत्वे न शाब्दानुपपत्तिः द्रव्यत्वनिष्ठविशेष्यतावच्छेदकतायां घटत्वनिष्ठप्रकारतावच्छेदकतासामानाधिकरण्यविरहात्। न वा कालिकेन घटत्वविशिष्टपरतच्छब्दघटितात्सघटइतिवाक्याच्छाब्दबोधानुपपत्तिः। न वा उद्देश्यांशेऽधिकावगाहिशाब्दबोधापत्तिः। स स इत्यादिग्रन्थस्तु अवच्छेदकतायां निरवच्छिन्नत्वाभिप्रायेणेति ध्येयम्।

**वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुता लाघवात् ।**

---

प्रकारतावच्छेदकता विशेष्यतावच्छेदकता च न निरवच्छिन्ना किन्तु किंचिद्धर्मावच्छिन्नैव । तत्रापत्तिं परिहरति । **स स इत्यादिवाक्यादिति ।** जातिमान् जातिमानित्यादिवाक्यादित्यर्थः । **जातित्वावच्छिन्नेति ।** अस्य धर्मितावच्छेदकतायामन्वयः । **तद्धर्मावच्छिन्नेति ।** जातित्वावच्छिन्नेत्यर्थः । अस्य प्रकारतावच्छेदकतायामन्वयः । **अभेदान्वयबोधस्य ।** अभेदसंसर्गकजातिमत्प्रकारकजातिमद्विशेष्यकबोधस्य । **तद्धर्मावच्छिन्नेति ।** जातित्वावच्छिन्नेत्यर्थः । **तद्धर्मभेदस्यापीति ।** जातित्वभेदस्यापीत्यर्थः । **कल्पनीयमिति ।** तथा च किंचिद्धर्मावच्छिन्नावच्छेदकताकप्रकारताकबोधं प्रति विशेष्यतावच्छेदकतावच्छेदके प्रकारतावच्छेदकतावच्छेदकभेदस्य कारणत्वं कल्पनीयमिति भावः । जातिमद्वान् दण्डवानित्यादौ विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकजातौ प्रकारतावच्छेदकतावच्छेदकतावच्छेदकदण्डत्वभेदविरहेणाऽन्वयबोधानुपपत्तिरत आह । **अवच्छेदकताया मिति ।** चरमावच्छेदकताया मित्यर्थः । **इदमुपलक्षणम् ।** प्रथमावच्छेदकतायामपीत्यर्थः ।

अनुगतकार्यकारणभावमाह । **वस्तुतस्त्विति ।** तद्धर्मान्यवृत्तीति । तद्धर्मपदेन प्रकारतावच्छेदक-तत्त्वावच्छेदक-तत्त्वावच्छेदकाः ग्राह्याः । अन्यपदेन विशेष्यतावच्छेदक तत्तावच्छेदक तत्तावच्छेदका ग्राह्याः । वस्तुतो यस्मिन्धर्मे विषयताविशेषसंबन्धेन-शाब्दबोधस्तिष्ठति तदन्यधर्मस्तत्पदेन ग्राह्यः । यत्र यत्र धर्मितावच्छेदकताख्यविषयतासंबन्धेन शाब्दबोधस्तत्र तत्र तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानमिति शाब्दबोधं प्रति ज्ञानस्य व्यापकता । ज्ञानमात्रं घटत्वान्यवृत्तिविषयतासंबन्धेन घटत्वभिन्ने एव वर्तते इति घटत्वभिन्ने घटत्वभेदस्य सत्वाद् घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति घटत्वभेदः कारणम् । एवं च व्याप्यधर्मावच्छिन्ने कार्यं जननीये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षिततया व्यापकीभूततद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानसामग्री घटत्वभेदः । एवं च द्रव्यं घट इत्यादौ धर्मितावच्छेदकतासंबन्धेनाऽभेदसंसर्गकघटप्रकारकशाब्दबोधं प्रति घटत्वभेदः कारणमिति फलितम् । तथा च घटो घट इत्यत्र नापत्तिः । ननु कार्यतावच्छेदकाऽनिर्वचने ज्ञानं घटत्वान्यवृत्तिविषयतासंबन्धेन घटेऽपि वर्तते तत्र घटत्वभेदसत्वाद् घटोघट इति वाक्याच्छाब्दबोधापत्तिरत आह । **एवं चेति ।** तद्धर्मान्यवृत्ति-

एवं च घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासंबन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र तादृशविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधापत्तिः ।

---

विषयतासंबन्धेनज्ञानं प्रति तद्धर्मभेदस्य हेतुत्वे चेत्यर्थः । व्यापकतयेति । विशेष्यतावच्छेदकतासंबन्धेन यत्रयत्राऽभेदसंसर्गकघटप्रकारकशाब्दबोधः तत्र तत्र घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानं यथा द्रव्यत्वप्रमेयत्वादौ इतिभावः' । तादृशेति । घटत्वान्यवृत्तीत्यर्थः । सामग्रीविरहेणेति । द्रव्यत्वादौ तादृशज्ञानोत्पादिकासीमग्रीघटत्वभेदः स च घटत्वे नास्तीति भावः । तत्र । घटत्वे ।

---

यद्यपि धर्मितावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानं न व्यापकं जातिमान् घट इत्यादौ तादृशसंबन्धेन तादृशशाब्दबोधस्य घटत्वेपि सत्वात्तत्र तादृशविषयतासंबन्धेन ज्ञानाभावात् । न च घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानस्य व्यापकत्वे न दोष इति वाच्यम् । कालिकेन जातिमान् समवायेन जातिमानित्यादौ जातित्वान्यवृत्तिविषयतासंबन्धेनज्ञानस्य व्यापकत्वानुपपत्तेः । अवच्छेदकत्वयोरेकसंबन्धावच्छिन्नत्वस्य व्याप्यशरीरे प्रवेशेन तु विधेयांशे अधिकावगाहिशाब्दबोधस्वीकर्तृपक्षे घटो नीलघट इत्यादौ ज्ञाने शाब्दबोधव्यापकत्वानुपपत्तेः । तादृशावच्छेदकतासंबन्धेन शाब्दाधिकरणे घटत्वे घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानविरहात् । न च व्याप्यशरीरे प्रकारतायां घटत्वमात्रावच्छिन्नत्वं निवेशनीयमिति वाच्यम् । नीलघटो नीलघट इत्यादौ शाब्दबोधापत्तेः । न च घटत्वगतैकत्वान्यवृत्तिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानं प्रति घटत्वगतैकत्वादिभेदस्य कारणत्वं वाच्यम् । तथा च तादृशज्ञानस्य घटत्वगतैकत्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दव्यापकतया नापत्तिरिति वाच्यम् । एवं सति उद्देश्यांशे अधिकावगाहिशाब्दबोधापत्तेः । उच्यते । निरवच्छिन्नघटत्वमात्रावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानस्य, निरवच्छिन्नघटत्वनिष्ठावच्छेदकताकनीलत्वावच्छिन्नप्रकारता-

एवं च घटवान् घटवानित्यादिशाब्दबोधवारणानुरोधेन धर्मितावच्छेदकतावच्छेदकादिनिष्ठप्रत्यासत्त्या कारणत्वान्तरमपि न कल्प्यते। एवमुद्देश्यतावच्छेदकविधेययोरैक्ये नैकः द्वावित्यादिवाक्यादेकत्वद्वित्वाद्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयात्, एकत्वत्व द्वित्वत्वाद्यवच्छिन्न समवायादिसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायादिसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादिसंबन्धेन शाब्दबुद्धौ एकत्वत्वादिभेदस्य।

एवं कर्मगच्छतीत्यादौ च कर्मत्वत्वाद्यवच्छिन्ने आधेयतासंबन्धेन तद्वतोऽन्वयबोधवारणाय कर्मत्वत्वाद्यवच्छिन्नावच्छेदकताकाऽऽधेयतासंबन्धावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेन शाब्दबोधे कर्मत्वत्वादिभेदस्य।

घटो न घट इत्याद्यनुमितेः शाब्दबोधस्य च वारणाय घटत्वावच्छिन्नभेदप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेनानुमितौ शाब्दबोधे च घटत्वादिभेदस्य हेतुत्वान्तरकल्पनमनादेयमेव। तद्धर्मभेदस्यैककारणतयैव सकलातिप्रसंगवारणसंभवादिति कृतं पल्लवितेन।

---

लाघवान्तरमपि दर्शयति। एवं चेति। तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुत्वाङ्गीकारे चेत्यर्थः। कारणत्वान्तरमपीति। तद्धर्मावच्छिन्नावच्छेदकताकाभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेकतासम्बन्धेन तद्धर्मभेदस्य कारणत्वान्तरमपीत्यर्थः। एवं दण्डवान् दण्डवानित्यत्रापि बोध्यम्। भेदान्वयबोधस्थले लाघवान्तरं दर्शयति।

---

निरूपितनीलत्वावच्छिन्नविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन "नीलघटो नीलघटः" शाब्दं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानस्य, निरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितनीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकधर्मितावच्छेदकतासंबन्धेन शाब्दबोधे नीलत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानस्य च व्यापकत्वसंभवेन न कोपि दोषः। एवं घटत्वानवच्छिन्नविशेष्यतात्वसंबन्धेन ज्ञानं प्रति घटत्वावच्छिन्नविशेष्यताभेदः कारणम्। तस्य च घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वसंबन्धेन शाब्दबोधव्यापकतया घटोघट इत्यादौ शाब्दापत्तेर्वारणं संभवति परन्तु आत्मनिष्ठप्रत्यासत्या कार्यकारणभावस्यैव संप्रदायसिद्धतया लघुभूतस्यापि विषयनिष्ठप्रत्यासत्या कार्यकारणभावस्योपेक्षा कृतेति संक्षेपः।

भेदाऽन्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते नत्वन्येन ।

सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजापुरुषः भूतलं घट इत्यादौ पुरुषघटाद्यंशे राजभूतलादेः स्वत्वाऽऽधेयता-संबन्धेन, तण्डुलः पचति चैत्रः पच्यते इत्यादौ कर्मत्वकर्तृत्वादि-संबन्धेप्र तण्डुल चैत्रादौ पाकादेः, स्वकर्मकत्व स्वकर्तृकत्वादिसंबन्धेन पाकाद्यंशे वा तण्डुल चैत्रादेरन्वयाऽबोधात् ।

---

एवमिति । भेदान्वयबोधानुदयादिति । एकत्ववान् एकत्ववानिति द्वित्ववान् द्वित्ववानिति च बोधानुदयादित्यर्थः । कर्मत्वत्वाद्यवच्छिन्ने द्वितीयार्थे । तद्वतः । कर्मत्ववतः । प्रकृत्यर्थस्य । एकत्वत्वादिभेदस्य । कर्मत्वत्वादि-भेदस्य चाग्रे हेतुत्वान्तरकल्पनमित्यनेनाऽन्वयः । तद्धर्मभेदस्येति । तद्धर्मा-न्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति तद्धर्मभेदस्येत्यर्थः ।

भेदाऽन्वयबोधप्रकारं दर्शयति । भेदान्वयबोधश्चेति । भेदशब्दश्चात्र भेदातिरिक्तसंबन्धे पारिभाषिकः । अभेदातिरिक्तसंसर्गविषयकबोधश्चेत्यर्थः । प्रातिपदिकार्थधात्वर्थयोरिति । निरूपितत्वं षष्ठ्यर्थः । तच्च प्रतियोगित्वाऽ-नुयोगित्वसाधारणम् । तथा च प्रातिपदिकार्थप्रतियोगिकः प्रातिपदिकार्था-नुयोगिकः एवं धात्वर्थप्रतियोगिकः धात्वर्थानुयोगिकश्च योऽभेदातिरिक्त-संसर्गस्तद्विषयकबोधश्चेत्यर्थः । द्वितीयार्थकर्मत्वानुयोगिकाऽऽधेयत्वसंसर्गे प्राति-पदिकार्थप्रतियोगिकत्वमेवं त्वर्थैकत्वप्रतियोगिकसमवाये प्रातिपदिकार्थानुयोगि-कत्वं बोध्यम् । एवमाख्यातार्थानुयोगिकसंसर्गे धात्वर्थप्रतियोगिकत्वं द्वितीया-र्थकर्मत्वप्रतियोगिकसंसर्गे धात्वर्थानुयोगिकत्वं बोध्यम् । अत्रेदं बोध्यम् । प्रातिपदिकार्थधात्वर्थयोरित्यस्य न बोधेऽन्वयस्तथासति प्रातिपदिकार्थधात्वर्थ-विषयकोबोधः प्रत्ययार्थनिपातार्थविषयक एव न तु प्रत्ययार्थनिपातार्थान्य-विषयक इत्यर्थःस्यात्सचाऽनुपपन्नः, तादृशबोधस्य प्रातिपदिकार्थधात्वर्थात्म-कान्यविषयकत्वात् । किन्तु बोधविशेषणीभूतभेदे एव तदन्वयः । तथा च प्रातिपदिकार्थनिरूपितः धात्वर्थनिरूपितश्च यः भेदान्वयः स प्रत्ययार्थनिपाता-र्थान्यतरनिरूपितोस्तद्विषयक एव बोधोजायते न तु तादृशान्यतरान्यनिरूपित-भेदान्वयविषयक इति समुदितार्थः । शाब्दबोधीयाऽभेदान्यसंबन्धावच्छिन्न-प्रातिपदिकार्थधात्वर्थान्यतरविषयता प्रत्ययार्थनिपातार्थान्यतरविषयतानिरूपितैव नान्यार्थविषयतानिरूपितेति नियमः फलितः ।

न च प्रत्ययार्थनिपातार्थान्यतरविषयतानिरूपितैव नान्यार्थविषयतानिरूपितेत्यसंगतम्, प्रातिपदिकार्थविषयतायाः संसर्गतानिरूपितत्वात्पदार्थतावच्छेदकविषयतानिरूपितत्वाच्च। अभेदातिरिक्तसंसर्गविषयतायां प्रत्ययनिपातार्थान्यतरविषयतानिरूपितत्वनियम इत्यपि न युक्तम्। संसर्गविषयतायाः प्रातिपदिकार्थविषयतानिरूपितत्वात् संसर्गतावच्छेदकीभूतविषयतानिरूपितत्वाच्चेति वाच्यम्। प्रातिपदिकवृत्तिज्ञानीयमुख्यविशेष्यताप्रयोज्यशाब्दबोधीयविषयता आकाङ्क्षाप्रयोज्यतादात्म्यातिरिक्तसांसर्गिकविषयतानिरूपितप्रत्ययादिप्रयोज्यविषयतानिरूपितैव न तु आकाङ्क्षाप्रयोज्यतादात्म्यातिरिक्तसांसर्गिकविषयतानिरूपितप्रत्ययाद्यप्रयोज्यविषयतानिरूपितेति नियमस्य विवक्षणात्। पदार्थतावच्छेदकविषयतायाः संसर्गविषयतायाश्चवृत्तिप्रयोज्यायाः आकाङ्क्षाप्रयोज्यत्वाभावात्तदसंग्रहः।

अयं निष्कर्षः। प्रातिपदिकार्थस्य प्रत्ययार्थनिपातार्थाभ्यां सह भेदान्वयबोधो भवति इति। तण्डुलमित्यत्रतण्डुलस्य द्वितीयार्थकर्मत्वे आधेयतासंबन्धेनाऽन्वयादाधेयतासंबन्धेन तण्डुलवती कर्मतेति बोधः। एवं चन्द्रइवमुखमित्यत्रेवार्थसादृश्ये चन्द्रस्य स्वप्रतियोगिकत्वसंबन्धेनान्वयात्सादृश्यस्य चाऽनुयोगिकत्वसंबन्धेन मुखेऽन्वयाच्चन्द्रप्रतियोगिकसादृश्यानुयोगिमुखमिति बोधः। एवं धात्वर्थस्य प्रत्ययार्थनिपातार्थाभ्यामेव सह भेदान्वयो बोध्यः। तत्सिद्धमुक्तनियमबलात्प्रातिपदिकार्थस्य निपातातिरिक्तप्रातिपदिकार्थेन धात्वर्थेन च सह भेदान्वयो न भवति। उक्तनियमाऽस्वीकारे आपत्तिमाह। सत्यपीति। पुरुषाद्यंशे। आदिना घटपरिग्रहः। स्वत्वाऽऽधेयतासंबन्धेनेति। अस्याऽन्वयाऽबोधादित्यनेनाऽन्वयः। स्वत्वसंबन्धेन राजविशिष्टः पुरुषः आधेयतासंबन्धेन भूतलविशिष्टो घट इति बोधविरहादुक्तनियमाऽस्वीकारे बोधापत्तिरिति भावः।

प्रातिपदिकार्थयोर्भेदान्वये आपत्तिमुक्त्वा क्रियाप्रातिपदिकार्थयोर्भेदान्वये आपत्तिमाह। तण्डुलः पचतीत्यादि। पाकादेरिति। अस्याऽन्वयाबोधादित्यनेनान्वयः। कर्मतासंबन्धेन पाकविशिष्टस्तण्डुलः एवं कर्तृतासंबन्धेन पाकविशिष्टश्चैत्र इति बोधविरहादिति भावः। तथा च बोधाभाव एवोक्तनियमे हेतुरिति ध्येयम्। न च तण्डुलः पचति, चैत्रः पच्यते इत्यादिप्रयोगाणां न साधुत्वम्, कर्मकर्त्रोरनभिहितत्वाद्द्वितीयातृतीयाप्रसक्तेरिति वाच्यम्। तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादेर्विवक्षितत्वे

निपातातिरिक्तप्रातिपदिकार्थयोः क्रियाताहशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वात् । विभक्त्यर्थमन्तराकृत्य तयोरप्यन्वयबोधात्साक्षादिति । निपातातिरिक्तत्वविशेषणाद् भूतले न घटः घटो न पटः इत्यादौ नञर्थाभावेन मुखं चन्द्र इत्यादौ मुखचन्द्रादीनामिवार्थसादृश्यादिना ।

---

द्वितीयातृतीयाभवतीति तत्तदनुशासनार्थत्वात्, प्रकृते तु कर्मत्वकर्तृत्वादेः संसर्गतयैव भानाद् द्वितीयादेरसंभवेन प्रातिपदिकार्थे प्रथमायाः संभवात् ।

यत्तु धात्वर्थपाकादेः कर्मत्वकर्तृत्वादिसंबन्धेन तण्डुलचैत्रादावन्वये तत्रैवाऽऽख्यातार्थसंख्यान्वयो वाच्यः, यं यं भावनान्वेति तं तं संख्यानुधावतीति वचनात् । एवं च न द्वितीयातृतीययोः प्रसक्तिः कर्मकर्तृगतसंख्यानभिधानस्यैव द्वितीयातृतीयानियामकत्वादिति । तन्न । कर्मकर्तृगतसंख्याभिधानस्यैव कर्मकर्त्राद्यभिधानरूपतया यक्शयोरेवप्राप्तत्वेन तण्डुलः पचति चैत्रः पच्यते इति प्रयोगाऽसंभवात् । स्वकर्मकत्व स्वकर्तृकत्वसंबन्धेन तण्डुलचैत्रादेः पाकादावन्वयपक्षे तण्डुलचैत्रादौ संख्यान्वयस्य प्रसक्तेरसंभवेन द्वितीयाद्यापत्तेर्दुर्वारत्वाच्च ।

ननु कर्मार्थे कर्त्रर्थे वाऽनुशासनेन लः कर्मणि चेत्यादिना आख्यातानि विहितानि तेषां तदर्थाऽविवक्षाया वक्तुमशक्यतया तत एव कर्मत्वकर्तृत्वादेरुपस्थितिर्भवति । एवं च धात्वर्थपाकादेस्तत्रैवाऽन्वयो न नु प्रातिपदिकार्थे एकपदोपात्तत्वादित्यतो धात्वर्थे प्रातिपदिकार्थस्याऽभेदातिरिक्तसंबन्धेनान्वये आपत्तिमाह । **स्वकर्मकत्वेत्यादि** । स्वद्वयं कर्मकर्तृपरम् । प्रातिपदिकार्थधात्वर्थयोरन्योन्यविशेषणभावेनाऽन्वयाभिप्रायेण तदुक्तिरित्यपि कश्चित् । **अन्वयाऽबोधादिति** । स्वकर्मकत्वसंबन्धेन तण्डुलविशिष्टः पाकः स्वकर्तृकत्वसंबन्धेन चैत्रविशिष्टः पाक इत्यन्वयबोधविरहादित्यर्थः ।

राजा पुरुषः भूतलं घटः तण्डुलः पचति चैत्रः पच्यते इत्यादौ स्वत्वाऽऽधेयतादिसंबन्धेनाऽन्वयबोधानुत्पत्त्या तादृशान्वयबोधं प्रति प्रतिबन्धकमाह । **निपातातिरिक्तेति** । **प्रातिपदिकार्थयोरिति** । अस्य भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वादित्यनेनान्वयः । तेन राजा पुरुष इत्यादौ स्वत्वादि संबन्धेन न शाब्दबोधः राजा पुरुष इत्यत्राऽभेदनाऽन्वयबोधादाह । **भेदेनेति** । अभेदातिरिक्तसंबन्धेनेति यावत् राजपुरुषयोर्निपातातिरिक्तप्रातिपदिकार्थत्वात् । **तादृशेति** । निपातातिरिक्तेत्यर्थः । धात्वर्थे निपातातिरिक्त-

प्रातिपदिकार्थयोरिति यावत्। भेदेनाऽन्वयबोधस्याऽव्युत्पन्नत्वादिति। तेन तण्डुलः पचति चैत्रः पच्यते इत्यादौ कर्मत्वकर्तृत्वादिसंबन्धेन पाकस्य तण्डुल चैत्रादौ स्वकर्मकत्वस्वकर्तृकत्वसंबन्धेन तण्डुल चैत्रयोर्वापाकादौ नान्वयः। राज्ञः पुरुष इत्यादौ विभक्त्यर्थस्वत्वद्वाराप्रातिपदिकार्थयोरपि भेदेनाऽन्वयादाह। साक्षादिति। विभक्त्यर्थमद्वारीकृत्येत्यर्थः। तथैवाह। विभक्त्यर्थमन्तराकृत्येति। ङसर्थस्वत्वमन्तराकृत्येत्यर्थः। तयोरपीति। प्रातिपदिकार्थयोरपीत्यर्थः। राजपुरुषयोरपीति यावत्। अन्वयबोधादिति। भेदेनान्वयबोधादित्यर्थः। राज्ञोनिरूपितत्वसंबन्धेन स्वत्वे स्वत्वस्य च स्वरूपेण-पुरुषेऽन्वयादितिभावः।

तथा च विभक्त्यर्थातिरिक्तभेदसंबन्धावच्छिन्ननिपातातिरिक्तनामार्थनिष्ठ-प्रकारतानिरूपितविशेष्यतासंबन्धेन बोधं प्रति नामपदवृत्तिग्रहाधीनोपस्थितिः विशेष्यतासंबन्धेन प्रतिबन्धिका। राज्ञः पुरुष इत्यादौ पुरुषे राजस्वत्वस्येव राज्ञोपि स्वत्वसंबन्धेन भानादिति भावः।

निपातातिरिक्तप्रातिपदिकार्थयोर्निपातातिरिक्तप्रातिपदिकार्थधात्वर्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वे निपातार्थप्रातिपदिकार्थयोर्धात्वर्थनिपातार्थ-योस्तु भेदसंबन्धेनाऽन्वयः साक्षाद्भवत्येवेति मनसि निधायाह। निपाताति-रिक्तत्वविशेषणादिति। नञर्थोऽभावेनेति। अस्य प्रतियोगितयाऽन्वयेपि न क्षतिरित्यनेनाऽन्वयः एवमुत्तरत्रापि। तथा च प्रतियोगितासंबन्धेन घट-विशिष्टाभावो भूतलवृत्तिरिति बोधः। नञसत्त्वे तत्र धर्मिणि येन संबन्धेन यद्वत्ताप्रतीयते इति न्यायानुरोधेन प्रतियोगितासंबन्धेन भूतलवृत्तितावि-शिष्टाभाववान् घट इति बोधः। घटो न पट इत्यत्र घटस्य प्रतियोगितया नञर्थभेदे भेदस्य च स्वरूपेण पटेऽन्वयः। तथा च प्रतियोगितासंबन्धेन घटविशिष्टभेदवान्पट इति बोधः। सादृश्यादिनेति। अस्य प्रतियोगितयाऽ-न्वयेपि न क्षतिरित्यनेनाऽन्वयः। प्रतियोगितया चन्द्रस्य सादृशो तस्य स्वरूपेण मुखेऽन्वयः। तथा च प्रतियोगितासंबन्धेन चन्द्रविशिष्टसादृश्यवन्मु-खमिति बोधः। अत्र नञः इव निपातस्य च प्रातिपदिकतया तदर्थस्य प्रातिपदिकार्थे भेदेनाऽन्वयान्निपातातिरिक्तेतिविशेषणमिति भावः। प्राति-पदिकार्थनिपातार्थयोभेदेन साक्षादन्वयमुपक्त्वा धात्वर्थे निपातार्थस्य साक्षाद्-भेदेनान्वयमाह। न कलञ्जमिति। विषाक्तबाणहतमृगपक्षिमांसं शुष्कमांसं वा कलञ्जम्। भक्षयेदित्यत्र धात्वर्थो भक्षणम्। कृतिसाध्यत्वं इष्टसाधनत्वं

न कलञ्जं भक्षयेदित्यादौ नैयायिकमते नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपविध्यर्थाभावेन धात्वर्थभक्षणादेरनुयोगितया गुरुमते तु विध्यर्थाऽपूर्वांशे विशेषणतयाऽन्वितेन नञुपस्थाप्याभावेन धात्वर्थभक्षणादेः प्रतियोगितयाऽन्वयेपि न क्षतिः ।

राजपुरुषइत्यादिसमासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्थनभेदान्वयः किन्तु तेनसमंविभक्त्यन्तार्थविशिष्टराजादिपदोपस्थाप्यराजसंबन्ध्यादेरभेदान्वयबोधएवेतिनदोषः ।

---

बलवदनिष्टाननुबन्धित्वं चेति प्रत्येकमेव विध्यर्थः । पङ्गुः समुद्रं न तरेदित्यादौ समुद्रतरणस्य पङ्गुसमवेतकृतिसाध्यत्वनिषेधानुरोधात्कृतिसाध्यत्वं विध्यर्थः । अत एव चन्द्रमण्डलाऽऽनयनादौ न प्रवृत्तिः, चन्द्रमण्डलानयनस्येष्टसाधनत्वेपि कृतिसाध्यत्वाभावात् । तृप्तिकामो जलं न ताडयेदित्यादौ जलताडने इष्टसाधनत्वनिषेधानुरोधेनेष्टसाधनत्वमपि विध्यर्थः । न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणे बलवदनिष्टाननुबन्धित्वमपि विध्यर्थः । तच्च बलवदनिष्टाजनकत्वम् । कलञ्जभक्षणे कृतिसाध्यत्वाभावस्य इष्टसाधनत्वाभावस्य च बाधात् । न च कलंजभक्षणाभाव इष्टसाधनमित्येव बोधोस्तु इति वाच्यम् । नञ्सत्वे यद्धर्मिणीत्यादि न्यायविरोधात् । तावतापि कलञ्जभक्षणस्यानिष्टहेतुत्वानवगमेन ततो निवृत्त्यनुपपत्तेश्च । बलवदनिष्टाऽजनकत्वं च नरकाजनकत्वम्, पापाजनकत्वं वा । विधित्वं च प्रवर्तकचिकीर्षाजनकतावच्छेदकप्रकारताश्रयत्वम् । तच्च कृतिसाध्यत्वम्, इष्टसाधनत्वम्, बलवदनिष्टाननुबन्धित्वं च । धात्वर्थमुख्यविशेष्यकश्चात्र बोधः । एवं च कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदिति बोधः । अत्र च बलवदनिष्टाजनकत्वाऽभावस्याऽनुयोगितया "स्वरूपेण" अन्वयः । तथा च निपातार्थस्याऽभावस्य धात्वर्थभक्षणे भेदेनाऽन्वय इत्याह । नैयायिकमते त्विति। अनुयोगितयेति । अस्याऽन्वयेपि न क्षतिरित्यग्रेऽन्वयः ।

कार्यं "अपूर्वं" लिङ्शक्तिरितिप्राभाकराः । तन्मते न कलञ्जं भक्षयेदित्यादिस्थले नञर्थाभावे धात्वर्थभक्षणस्य प्रतियोगितयाऽन्वयः । कलञ्जभक्षणाभावस्य च जन्यतासंबन्धेना पूर्वे लिङर्थेऽन्वयः । तथा च कलञ्जभक्षणाभावजन्यमपूर्वमित्याख्यातार्थमुख्यविशेष्यको बोधः । ततश्च कलञ्जभक्षणाभावस्याऽपूर्वसाधनत्वं कलञ्जभक्षणस्याऽनिष्टसाधनत्वं विनाऽनुपपन्नमित्यर्थापत्त्या कलञ्जभक्षणेऽनिष्टसाधनत्वमवगम्य ततो निवर्त्तते इति प्रभाकरमते धात्वर्थभक्षणस्य

निपातार्थेऽभावे भेदेन ( प्रतियोगितया ) अन्वयान्निपातातिरिक्तत्वविशेषणमित्याह । 'गुरुमतेत्विति' न वृत्तिः । निपातातिरिक्तत्वविशेषणान्नोक्तनियमानुपपत्तिः ।

अथैवमपि निपातातिरिक्तनामार्थयोः साक्षाद्भेदेन नान्वय इति नियमो न संगच्छते । न च राज्ञः पुरुष इत्यादौ षष्ठ्यर्थस्वत्वादिसंबन्धमन्तराकृत्य बोधदर्शनादुक्तनियमोपपत्तिरिति वाच्यम् । राजपुरुष इत्यादिसमासस्थले विभक्तेरभावेन स्वत्वादिसंबन्धस्य तदर्थत्वाभावात् । न च लुप्तसुपः स्मरणात्संबन्धावगम इति वाच्यम् । तल्लोपमजानतोपि अन्वयबोधात् । समृद्धस्य राजपुरुष इत्यादौ समृद्धराजपदयोरभेदान्वयप्रसंगाच्च । राजसंबन्धिनि लक्षणायां तु तत्पुरुषस्यापि समस्यमानपदार्थयोरभेदान्वयबोधकत्वे कर्मधारयत्वापत्तेः । राज्ञः पुरुष इति विग्रहवाक्यस्य समासतुल्यार्थकत्वहान्यापत्तेश्च । अतो राजपदस्य राजसंबन्धे एव लक्षणा युक्ता, तस्य स्वरूपेण पुरुषे । अत एव "राजपुरुष इत्यादौ पूर्वपदे षष्ठ्यर्थसंबन्धे लक्षणेति" मणिकृदुक्तमपि संगच्छते । न च नामार्थयोरपि यदि भेदेनाऽन्वयोऽव्युत्पन्नस्तर्हि राजपुरुष इत्यादौ स्वत्वादिसंसर्गेणैव राजादेः पुरुषादौ अन्वयोस्तु अलं राजपदस्य राजस्वत्वलक्षणयेति वाच्यम् । विग्रहवाक्यानां समाससमानार्थकत्वरक्षणाय लक्षणास्वीकारात् । तथाचोक्तनियमे व्यभिचारः । उक्तनियमाभावे राजापुरुष इत्यादावपि भेदान्वयापत्तिरिति न शंक्यम् । वक्ष्यमाणाऽकांक्षावैचित्र्यकल्पनयोक्तापत्तेर्वारणादित्यत आह । राजपुरुषइत्यादिसमासस्थले इति । तेन समं । पुरुषादिपदार्थेन समं । विभक्त्यन्तार्थः । राजसंबन्धः । तद्विशिष्टे । राजसंबन्धिनि लाक्षणिकं यद्राजापदं तदुपस्थाप्येत्यर्थः । अभेदान्वयबोध एवेति । राजसंबन्ध्यभिन्नःपुरुषइत्याकारकबोध एवेत्यर्थः । एवकारेण राजसंबन्धे लक्षणामाश्रित्य भेदान्वयबोधव्यवच्छेदः । नचैवं समासविग्रहयोस्तुल्यार्थकत्वहानिरिति वाच्यम् । तयोस्तुल्यार्थकत्वस्याऽसार्वत्रिकत्वात् । पीतमम्बरंयस्येति विग्रहतोयत्संबन्धिपीताऽभिन्नाऽम्बरमितिबोधस्य पीताम्बर इति बहुव्रीहेश्च पीताऽभिन्नाम्बरवानितिबोधस्याऽतुल्यार्थत्वात् । कर्मधारयलक्षणे तत्पुरुषभिन्नत्वेसतीति निवेशान्न तत्पुरुषेऽतिव्याप्तिः । तथा च तादात्म्यसंबन्धावच्छिन्नयादृशनामार्थनिष्ठप्रकारतानिरूपितयादृशनामार्थनिष्ठनिष्ठविशेष्यताशालिशाब्दजनकं अव्यवहितोत्तरत्वसंबन्धेन यन्नामविशिष्टं यन्नाम तत्पुरुषभिन्नत्वेसति तन्नामद्वयं कर्मधारयः । नदोषः । न भेदान्वयबोधापत्तिः । अयमाशयः । यत्र भेदसंबन्धावच्छिन्नप्रातिपदिकार्थधात्वर्थान्यतरविषयतात्वं तत्र प्रत्ययनिपातार्थान्यतरविषयता-

निरूपितत्वमित्यन्वयव्यतिरेकाभ्यां पर्यवसन्नस्य "निपातातिरिक्तनामार्थयोर्नामार्थधात्वर्थयोश्चाऽभेदेनैवाऽन्वयोभवतीति नियमस्यानुरोधेन राजसंबन्धिन्येव लक्षणोचिता विभक्तेर्वाचकत्वपक्षे। न च समासविग्रहयोस्तुल्यार्थकत्वनियमभङ्गः। तादृशनियमे मानाभावात्। विभक्तेर्द्योतकत्वपक्षे समासविग्रहवाक्ययोर्भेदसंबन्धेनान्वयबोधजनकत्वपक्षः सम्यक्। सम्बन्धलक्षणापक्षन्तु न सम्यगितिध्येयम्।

---

अथ समर्थः पदविधिरिति सूत्रे सामर्थ्यं एकार्थीभावात्मकं तच्च एकधर्मावच्छिन्नशक्तिमत्त्वम्। तथा च समासवृत्तौ शक्तिरवश्यमभ्युपगन्तव्येति राजपदस्य राजसंबन्धिनि लक्षणाऽभ्युपगमो व्यर्थः, शक्त्यैव राजसंबन्धिपुरुषबोधसंभवात्। एवं समासविग्रहवाक्ययोः समानार्थकत्वमप्युपपद्यते। नापि नामार्थयोरभेदेन नियमभंगः। न च समासावयवप्रत्येकपदात् क्लृप्तशक्तिकाच्छक्त्या लक्षणया वा बोधसंभवेऽतिरिक्तशक्तिर्नकल्प्या, अनन्यलभ्योहिशब्दार्थ इति न्यायादिति वाच्यम्। शक्त्यभावे हि प्रातिपदिकसंज्ञा-प्राचीनविभक्तिलोप-विभक्त्यन्तरोत्पत्त्यादिकार्यं न स्यात्। अर्थवदितिसूत्रेऽर्थवत्त्वस्य वृत्तिमत्त्वलक्षणस्यैव सद्भावात् इति चेन्न। अर्थवदितिसूत्रेऽर्थवत्त्वं न वृत्तिमत्त्वं किन्तु वृत्तिमद्विषयकप्रतीत्यविषयत्वम्। वृत्तिमत्संघातरूपे समासादौ वृत्तिविनैवार्थवत्त्वोपपत्तेः प्रातिपदिकसंज्ञानुपपत्त्यभावात्। न च निषेधद्वयप्रवेशोव्यर्थः, वृत्तिमद्विषयकप्रतीतिविषयत्वस्यैव सम्यक्त्वादिति वाच्यम्। समूहालंबनमादाय निरर्थकेपि अर्थवत्त्वं स्यादतोनिषेधद्वयगर्भता। न चैवं धनं वनमित्यादौ प्रत्येकवर्णस्य प्रातिपदिकसंज्ञा स्यात् नकारलोपश्चस्यादिति वाच्यम्। अर्थवत्त्वं हि समुदायशक्त्या विवक्षितम्, अवयवशक्त्या वा। नाद्यः—तादृशशक्तिमत्समुदायाविषयकप्रत्येकविषयकप्रतीतिविषयत्वात्प्रत्येकस्य। न द्वितीयः—शाब्दबोधानुकूलपदार्थोपस्थितिजनकवृत्तेरेव प्रवेश्यत्वात्समुदायघटकप्रत्येकवर्णशक्तेः शाब्दानुकूलपदार्थोपस्थित्यजनकत्वात्।

अत्रेदं बोध्यम्। समासस्य राजसंबन्धिपुरुषादौ शक्तिपक्षे विशिष्टस्य शशशृङ्गादिपदार्थस्याऽलीकतया शक्त्यसंभवेन समुदायशक्त्याविशिष्टैकार्थप्रतिपादकत्वरूपैकार्थीभावविरहेण समासानुपपत्तिः प्रातिपदिकसंज्ञानुपपत्तिश्च। सिद्धान्ते स्वार्थे पर्यवसायिनां पदानामाकाङ्क्षावशात्परस्परसंबन्धरूपव्यपेक्षारूपसामर्थ्यमादाय समासादिरुपपद्यते। न चाऽन्यथाख्यात्युपनीते शशशृङ्गे शक्तिसंभव इति वाच्यम्। असत्पदार्थे ज्ञानकरणेन्द्रियव्यापाराभावेन असत्ख्यातेरस्वीकारात्। किं च शक्तेरज्ञाताया अनुपयोगित्वेन तस्या ज्ञानमपेक्षितम्, तच्च न संभवति अलीके

व्यवहाराभावात् परबुद्धेरप्रत्यक्षत्वाच्च । न च शशशृङ्गादिशब्द उच्चारयितृतात्पर्यकः बालशुकादिशब्दभिन्नवाक्यत्वादित्यनुमानेन तात्पर्यसिद्धौ तात्पर्यं सविषयकमित्यनुमानेन तात्पर्यविषये सिद्धे शशशृङ्गशब्दसंकेतग्रहात्सामान्यत उपस्थितिरिति वाच्यम् । तादृशसंकेतग्रहस्य शाब्दानुपयोगित्वात् । अन्यथा गोत्वविशिष्टे शक्तिमजानतः सामान्यतः शक्तिग्रहाच्छाब्दबोधप्रसंगात् । न चाऽन्यत्र तात्पर्यविषयत्वेन सामान्यतः संकेतग्रहस्य शाब्दबोधानुपयोगित्वेपि प्रकृते निर्धर्मकेऽलीके तात्पर्यविषयत्वोपलक्षिते एव शक्तिग्रहः शाब्दबोधोपयोगी अतो विशेषधर्मं विनैव कल्पनामात्रविषयः शशशृङ्गादिपदवाच्य इति वाच्यम् । कूर्मरोमशशविषाणयोर्ज्ञानस्य निर्विषयकतया तद्विषयस्य व्यावर्त्तकाभावेन कूर्मरोमशशशृङ्गादिपदजन्यबुद्धेर्वैलक्षण्यस्यानुभवसिद्धस्याऽपलापापत्तेः । तत्र शक्तिग्रहस्यैवाऽसंभवादिति ध्येयम् ।

अथ तथापि समासे शक्तिरवश्यमभ्युपगन्तव्या । अन्यथा ऋद्धस्य राजपुरुष इत्यादिप्रयोगापत्तिः । समासे विशिष्टशक्तिस्वीकारे नापत्तिः, राजादेः पदार्थैकदेशत्वात् । न च नैयायिकमतेपि राजपदस्य राजसंबन्धिनि लक्षणासत्वे नोक्तापत्तिरिति वाच्यम् । लुप्तविभक्त्यनुसन्धाने तस्य पदार्थत्वात् । उक्तापत्तिवारणाय सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न । चैत्रस्य गुरुकुलमित्याद्यनुरोधेन च "नित्यसापेक्षे समास" इतिन्यायस्य कल्पने गौरवाच्च । शोभनेवनेचरः मिताया वाचस्पतिरित्याद्यलुक्समासे वनप्रभृतेः पदार्थैकदेशत्वाभावात् । एतेन लुप्तविभक्त्यनुसन्धानस्यानावश्यकत्वेन नोक्तापत्तिरिति निरस्तम् । विशिष्टशक्तिस्वीकर्तृवैयाकरणमतेऽलुक्समासे वनादेः पदार्थैकदेशत्वाभावात् । नामार्थयोर्विभक्त्यर्थसंबन्धेनाऽन्वये तु सुतरामापत्तिरिति चेन्न । अनन्ताऽप्रामाणिकशक्तिकल्पनापेक्षयोक्तवार्तिकयोर्विधायकत्वे गौरवाभावात् ।

वस्तुत उक्तवार्त्तिकयोरनुवादकत्वमेव सापेक्षमसमर्थवद्भवतीति न्यायेनोक्तप्रयोगापत्तेर्वारणात् । सापेक्षत्वं च समासाऽघटकपदार्थान्वितस्वार्थकत्वम् । ऋद्धस्य राजपुरुषः शोभने वनेचर इत्यादौ समासाऽघटकर्द्धशोभनपदार्थान्वितस्वार्थकत्वस्य राजवनादिपदे सत्वेन सापेक्षतया तयोः पुरुषचरपदाभ्यां समासासंभवेनासाधुतया न प्रयोगापत्तिः । न च शोभनो राजपुरुष इत्यत्र पुरुषस्य समासाघटकशोभनपदार्थान्वितस्वार्थकतया सापेक्षतापत्तिरिति वाच्यम् । स्वार्थस्याऽप्रधानीभूतेत्यनेन विशेषणीयत्वात् तथा च समासाघटकपदार्थान्विताऽप्रधानीभूतस्वार्थकत्वं सापेक्षत्वम् । प्रधानत्वं च प्रकृतसमासजन्यबोधे मुख्यविशेष्यत्वम् । न च दर्शनीयं राजपुरुषमानयेत्यादौ पुरुषस्य मुख्यविशेष्यत्वाभावात्सापेक्षता स्यादिति वाच्यम् । समास-

जन्याऽवान्तरवाक्यार्थबोधे मुख्यविशेष्यत्वस्य पुरुषे संभवात्। वस्तुतः समासघटकपदप्रयोज्यविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नविषयत्वम् प्रधानत्वम्। विशेष्यतायां समासघटकपदप्रयोज्यत्वनिवेशादुक्तस्थले पुरुषस्य समासवहिर्भूतद्वितीयार्थकर्मत्वे प्रकारत्वेपि प्राधान्यम्। न वा विशेष्ये विशेषणमितिरीत्या शाब्दबोधस्याऽवान्तरशाब्दबोधस्याऽनपेक्षितत्वेन तत्र सापेक्षताप्रसंगतादवस्थ्यम्। विशेष्ये विशेषणमितिरीत्या बोधो न स्वीक्रियते इति वक्तुं न शक्यते, यत्र शाब्दबोधस्य सकलकारणस्य संपत्तिः तत्र विशेष्ये विशेषणमितिरीत्या बोधस्य व्यवस्थापितत्वात्। नित्यसापेक्षस्य सामासाघटकपदसापेक्षत्वेपि नाऽसामर्थ्यम्। तेन चैत्रस्य गुरुकुलं शरैः शातितपत्रक इत्यादौ गुरुशातितपदानां सापक्षत्वेपि नाऽसामर्थ्यम्। नित्यसापेक्षत्वं च स्वार्थान्वय्यर्थजिज्ञासात्मकाऽऽकाङ्क्षानियतस्वार्थप्रतिपत्तिकत्वम्। गुरुशातनपदार्थे ज्ञाते कस्य गुरुः कैः शातनमिति जिज्ञासाया नियमेनोत्पादाद् गुर्वादिपदानां नित्यसाकाङ्क्षत्वम्।

अथवा समासाघटकपदार्थान्वितेत्यत्राऽभेदाऽन्वयो वा निवेशनीयः तथा च समासाघटकपदार्थाऽभेदान्वितस्वार्थकत्वं सापेक्षत्वम्। ऋद्धस्य राजपुरुष इत्यत्र ऋद्धपदार्थस्याभेदेनैवाऽन्वयस्य विवक्षितत्वाद्राजपदस्य सापेक्षत्वम्। समासाघटकचैत्रनिरूपितत्व-शरकरणकत्वादेर्भेदेनाऽन्वयान्न सापेक्षत्वम्।

अथैवमपि समासे शक्त्यस्वीकारे चित्रगुरित्यादौ चित्राऽभिन्नगोस्वामिबोधानुपपत्तिः। तथा हि। गोपदस्य गोस्वामिलक्षकत्वे गवि न चित्राऽभेदाऽन्वयसंभवः गोः पदार्थैकदेशत्वात्।

न च चित्रपदमेव चित्राऽभिन्नगोस्वामिलक्षकं, गोपदं ताहशार्थे तात्पर्यग्राहकमिति वाच्यम्। चित्रगुरस्तीत्यत्र चित्रपदस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वान्वयस्यानुपपत्तेः। प्रथमान्तपदोपस्थाप्यस्यैव भावनाविशेष्यत्वात्। उक्तनियमानंगीकारे राजपुरुषोऽस्तीत्यादौ राजनि अस्तित्वान्वयप्रसंगात्। प्रकृत्यर्थे एव सुपः संख्याबोधकत्वात्। गोपदोत्तरप्रथमया चित्रपदोपस्थाप्ये चित्राऽभिन्नगोस्वामिनि एकत्वबोधनायोगाच्च।

न च गोपदमेव चित्राभिन्नगोस्वामिलक्षकं चित्रापदं तात्पर्यग्राहकमिति वाच्यम्। सामर्थ्यं द्विविधम्, एकार्थीभावरूपं व्यपेक्षारूपंच। पृथगर्थानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकं एकधर्मावच्छिन्नशक्तिमत्त्वं यावदाद्यम्। द्वितीयन्तु स्वार्थपर्यवसायिनां पदानां आकाङ्क्षावशात्परस्परं संबन्धः पृथगर्थानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकं वा द्वितीयम्। एकार्थीभावरूप-

एवं मुखं चन्द्र इत्यादिरूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे-लक्षणया चन्द्रादिसदृशाऽभेदान्वयबोध एव न तु सादृश्यादिसंबन्धेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचारः। केचित्तु रूपकस्थले चन्द्रादिपदस्य न चन्द्रादिसदृशे लक्षणा किन्तु मुख्यार्थचन्द्रादेरेवाऽभेद भ्रमो मुखादौ। मुखं न चन्द्र इत्यादिविशेषदर्शनदशायां च न तत्र शाब्दोऽभेदप्रत्ययोऽपि तु शब्दजन्यविशकलितपदार्थोपस्थितिमूलको-मानसएवाऽऽहार्योऽभेदभ्रमइत्याहुः। परे तु तादात्म्यातिरिक्तसंबन्धेन; नामार्थयोर्नान्वयबोधः। तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्त्वम्। एवं नीलो घट इत्यादौ स्ववृत्तिनीलत्वादिमत्त्वसंबन्धेन घटाद्यंशे नील-पदार्थस्यैव मुखं चन्द्र इत्यादौ स्ववृत्तिआल्हादकत्वादिमत्त्वसंबन्धेन मुखादौ चन्द्रादेरन्वयबोधः। तादृशार्थान्वयबाधेपि समानविभक्तिकत्वं तन्त्रमित्यतो नातिप्रसंग इति वदन्त।

---

एवमिति। राजपुरुष इत्यादिसमासस्थले पूर्वपदस्य राजसंबन्धिनि-लक्षणासिद्धायामित्यर्थः। चन्द्रसदृशाऽभेदान्वयबोध एवेति। चन्द्रसदृशाऽ-भिन्नं मुखमिति बोध एवेत्यर्थः। एवकारव्यवच्छेद्यं दर्शयति। नत्विति। तत्र। रूपकस्थले। न व्यभिचार इति। निपातातिरिक्तनामार्थधात्वर्थयोः

---

सामर्थ्यानभ्युपगमे व्यपेक्षारूपसामर्थ्यस्यैव समासप्रयोजकत्वेन चित्रपदप्रयोज्य-विषयत्वस्य तत्र विरहे व्यपेक्षाया असंभवात्समासानुपपत्तेः। न च गोपदस्य शक्त्या गोरर्थः, लक्षणया च स्वामी लक्ष्यार्थे स्वामिनि गोविशेषणम्। तत्र चित्राऽ-भेदान्वयः। एवं सति नैकदेशाऽन्वयप्रसंगो न वा व्यपेक्षा हानिरिति वाच्यम्। युगपद्वृत्तिद्वयानंगीकारात्, प्रातिपदिकार्थयोः शक्यलक्ष्यार्थयोर्भेदेनाऽन्वयस्याऽव्युत्पन्न-त्वाच्च इति चेत्। सत्यम्। क्लृप्तशक्तिकारपदाल्लक्षणयाऽभिमतार्थसंभवेऽनन्त-समासेषु अनन्तशक्तिकल्पनाया अन्याय्यत्वात्। न हि समासानुपपत्तिः। गोपदस्य चित्राऽभिन्नगोस्वामिलक्षकत्वे गोपदाऽव्यवहितपूर्ववर्ति ह्रस्वाऽकारान्तचित्रस्य तादृशार्थे तात्पर्यग्राहकतया चित्रगुपदजन्यबोधे तादृशसमभिव्याहारज्ञानस्य कारणतया च निरूप्यनिरूपकभावापन्नस्वस्वार्थनिष्ठविषयताकशाब्दबोधप्रयोजका-काङ्क्षाशालिस्वरूपव्यपेक्षा तत्राऽक्षतैवेति न समासानुपपत्तिः। स्वार्थत्वं च स्वप्रयो-ज्यविषयताश्रयत्वम्। प्रकृतशाब्दबोधीयचित्रपदार्थविषयत्वे चित्रापदप्रयोज्यत्वस्य "उपस्थितिद्वारकत्वस्या" सत्त्वेपि तात्पर्यग्रहद्वारा आकाङ्क्षाघटकत्वेन चित्रापद-प्रयोज्यत्वस्य संभवात्।

अथ राजापुरुष इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथं न भेदान्वयबोधः, सामग्र्याः कार्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिञ्चित्करत्वात्, सामग्रीसत्वे अवश्यं कार्यमिति नियमात्। न च तत्र भेदान्वयबोधौपयिकाऽऽकाङ्क्षाविरहाच्छाब्दसामग्र्येवाऽसिद्धेति वाच्यम्। समभिहाररूपाया आकाङ्क्षायास्तत्रापि सत्वात्।

---

साक्षाद्भेदेन नान्वय इति नियमस्य न व्यभिचार इत्यर्थः। चन्द्र इव मुखमित्युपमालङ्कारे मुखं चन्द्र इति रूपकालङ्कारयोर्भेदो न स्याद्विषयवैलक्षण्याभावात्, रूपकालङ्कारे उपमानोपमेययोरभेदप्रतीतेश्चेत्यालङ्कारिकमतमाह। केचित्त्विति। तत्र। रूपकस्थले। न शाब्दोऽभेदप्रत्यय इति। न चन्द्राऽभिन्नं मुखमिति बोध इत्यर्थः। लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्वत्ताबुद्धिं प्रति अनाहार्याऽप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयस्य विरोधित्वादितिभावः। विशकलितेति। परस्परं संबन्धरहितेत्यर्थः। मानस एवेति। तथा च रूपकस्थलेऽभेदप्रत्ययो न शाब्दो भवतीत्यर्थः। मानसप्रत्ययोपि आहार्य एव तस्य च विपरीतनिश्चयाऽप्रतिबध्यत्वादिति भावः। स्ववृत्त्याल्हादकत्वादीति। स्ववृत्तित्वोपलक्षितेत्यर्थः। अत्र च नञ्सत्वे यद्धर्मिणि येन संबन्धेन यद्वत्ता प्रतीयते इति न्यायात्मुखं न चन्द्र इत्यादौ स्ववृत्तिआल्हादकत्वादिमत्त्वसंबन्धावच्छिन्नप्रतियोगिताकचन्द्राभावः प्रतीयेत स च वाधितः। अन्यसंबन्धावच्छिन्नप्रतियोगिताकतदभावाभ्युपगमे च विरोधित्वानुपपत्तिरित्यस्वरसो वदन्तीत्युक्त्या सूचितः।

वस्तुतस्तु गङ्गातीरे घोष इति वाक्यजन्यप्रतीतेः गङ्गायां घोष इति वाक्याल्लक्षणया जायमानप्रतीतेश्च साम्येपि गङ्गापदात्तीरोपस्थितिमहिम्ना तीरे शैत्यपावनादिविशेषः प्रतीयते। तथा सादृश्यप्रत्ययस्योभयत्र साम्येपि अभेदान्वयबोधप्रयोजकसमानविभक्तिकत्वं रूपकस्थले चमत्कारवैलक्षण्यं निर्वहतीति किमभेदप्रत्ययेनेति ध्येयम्।

निपातातिरिक्तनामार्थयोस्तादृशनामार्थधात्वर्थयोश्चाऽभेदेनैवान्वयबोधो भवतीति नियमपर्यवसितं अभेदसंबन्धेन नामार्थप्रकारकाऽन्वयबोधं प्रति नामपदजन्यनामोपस्थितिः समानविशेष्यतासंबन्धेन कारणमिति कार्यकारणभावं पक्षप्रतिपक्षाभ्यां व्यवस्थापयति। अथेति। भेदाऽन्वयबोध इति। स्वत्वसंबन्धेन राजविशिष्टः पुरुषइत्याकारक इत्यर्थः। सामग्र्या इति। भेदान्वयबोधकसामग्र्या इत्यर्थः। राजपदजन्यराजोपस्थिति पुरुषपदजन्य-

न च तादृशाऽऽकाङ्क्षायास्तत्र सत्वेपि राजादिपदार्थप्रकारकभेदान्वय बोधे राजपदाव्यवहितोत्तरङस्पदत्वरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात्। तदभावादेव न तत्र शाब्दसामग्रीति वाच्यम्। संबन्धादिविशेष्यकराजादिप्रकारकाऽन्वयबोधे एव तादृशाकाङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिप्रकारकान्वयबोधोत्पत्तौ तादृशाकाङ्क्षाज्ञानरूपकारणविरहस्याकिञ्चित्करत्वात्।

---

पुरुषोपस्थितिस्वत्वसंबन्धेन राजविशिष्टः पुरुष इति योग्यताज्ञान-राजसंबन्धिपुरुषविषयकबोधोभवतु इति तात्पर्यज्ञानरूपाया इति यावत्। कार्यजनने। उक्तनियमभङ्गरूपाया इति। निपातातिरिक्तनामार्थयोरभेदान्वयबोध एवेति नियमभङ्गरूपाया इत्यर्थः। प्रयोजनं। नियमः। तस्य क्षतिः। हानिः। नियमभङ्ग इति यावत्। अकिञ्चित्करत्वादिति। कार्यप्रतिरोधाऽक्षमत्वादित्यर्थः। नियमादिति। सामग्र्याः कार्यव्याप्यत्वादित्यर्थः। शङ्कते। न चेति। तत्र। राजापुरुष इत्यत्र। भेदान्वयबोधौपयिकाकाङ्क्षाविरहादिति। भेदान्वयबोधश्च आधेयत्वसंसर्गककर्मत्वादिविशेष्यकराजप्रकारकान्वयबोधः तत्प्रयोजिकाऽऽकाङ्क्षा च राजानं राज्ञा राज्ञे राज्ञः राजनीति तद्विरहादित्यर्थः। प्रकारान्तरेणोपस्थितयोरर्थयोरन्वयबोधवारणाय तत्तदर्थोपस्थापकपदयोः समभिव्याहारस्याऽन्वयबोधे हेतुत्वमुपेयम्, अथ च भेदान्वयबोधं प्रति आनुपूर्वीज्ञानानां परस्परजन्ये व्यभिचारवारणाय नानाकारणत्वापेक्षया प्रकारविशेष्यवाचकपदयोः समभिव्याहारज्ञानस्यैव कारणत्वम्, तादृशः राजपुरुषपदयोः समभिव्याहारोऽस्त्येवेत्याह। समभिव्याहाररूपाया इति। तत्रापि। राजापुरुष इत्यत्रापि। घटः कर्मत्वमित्यादौ घटकर्मत्वोपस्थापकपदयोः समभिव्याहाराद् घटीया कर्मता इत्यन्वयबोधानुदयात् यादृशी आनुपूर्वी भेदान्वयबुद्धौ अपेक्ष्यते तादृश्या घटमित्यानुपूर्व्या भेदान्वयबोधजनकत्वं वाच्यम्, यादृशानुपूर्वी भेदान्वयबुद्धौ अपेक्ष्यते तादृशानुपूर्वी राजा पुरुष इत्यादौ नास्तीत्याशंकते। न चेति। तादृशाकाङ्क्षायाः। समभिव्याहाररूपाकाङ्क्षायाः। तत्र। राजापुरुषइत्यादौ। सत्वेपीति। राजपदार्थप्रकारकभेदसंसर्गकबोधानुदयादिति शेषः। आकाङ्क्षाया अपीति। अपिना राजपदाव्यवहितोत्तराङस्पदत्वादिरूपाकाङ्क्षायाः समुच्चयः। तदभावादेवेति। उक्ताकाङ्क्षाऽभावादेवेत्यर्थः। तत्र। राजापुरुषइत्यादौ। राजप्रकारकभेदान्वयबोधं प्रति राजानं-राज्ञा-राज्ञे-राज्ञः-राज्ञि इत्यादिवाक्यानां कारणत्वे तेषां परस्परजन्ये व्यभिचारवारणाय कर्मत्वविशेष्यकराजप्रकारक-

अत्र केचित्। नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यता-प्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनात्, नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानं न तु नामार्थान्तरस्य तत्र विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात्।

---

भेदान्वयबोधं प्रति राजानमित्याकाङ्क्षाज्ञानं कारणमित्यादिरीत्या विशिष्यैव तादृशानुपूर्वीज्ञानानां हेतुता वाच्या। एवं च पुरुषविशेष्यकबोधस्य तादृशाकाङ्क्षाविरहोऽकिञ्चित्कर इत्यापत्तितादवस्थ्यमित्याह। संबन्धादिविशेष्यकेति। आदिना कर्मत्वादिपरिग्रहः। राजादिप्रकारकान्वयबोधे एवेति। निरूपितत्वसंबन्धेन राजवत्स्वत्वमितिबोधे एवेत्यर्थः। एवकारेण पुरुषविशेष्यकबोधस्य व्यवच्छेदः। तादृशाऽऽकाङ्क्षाज्ञानस्य। राजपदाव्यवहितोत्तरङस्पदत्वरूपाकाङ्क्षाज्ञानस्य। पुरुषादौ। पुरुषादिविशेष्यके इत्यर्थः। तादृशाकाङ्क्षाज्ञानविरहस्य। राजपदाऽव्यवहितोत्तरङस्पदत्वरूपाऽऽकाङ्क्षाज्ञानविरहस्य। अकिञ्चित्करत्वादिति। कारणत्वाभावाऽसंपादकत्वादित्यर्थः। पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधं प्रति राजपदाव्यवहितोत्तरङस्पदत्वादिरूपाऽऽकाङ्क्षाज्ञानस्याऽकारणत्वादितिभावः। तथा च राजापुरुष इत्यत्र पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधापत्तिरिति ध्येयम्।

राजानं राज्ञा राज्ञे राज्ञः राज्ञि इत्यत्राऽऽधेयत्व-निरूपितत्वसंबन्धावच्छिन्नराजनिष्ठप्रकारतानिरूपितकर्मत्वस्वत्वादिनिष्ठविशेष्यताकशाब्दं प्रति अ-प्रत्ययादिजन्यकर्मत्वाद्युपस्थितिः ङस्प्रत्ययजन्यस्वत्वोपस्थितिः कारणमित्यादिक्रमेणाऽऽत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे गौरवाद्विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावो वाच्यो लाघवात्, स च विशेष्यतासंबन्धेन नामार्थप्रकारकभेदान्वयबोधं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमित्याकारकः। राजापुरुष इत्यादौ न भेदान्वयबोधापत्तिः, विशेष्यतासंबन्धेन राजपदार्थप्रकारकभेदान्वयबोधाश्रयेपुरुषे विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरभावादिति मतमुपन्यस्यति। अत्रकेचिदित्यादिना। नामार्थप्रकारकेति। निपातातिरिक्तार्थविशेष्यकेत्यपि योजनीयम्। अन्यथा घटोनास्तीत्यादौ घटप्रकारकान्वयबोधस्य विशेष्यतासंबन्धेन नञर्थेऽभावे सत्त्वेन तत्र च प्रत्ययजन्योपस्थितेरसत्त्वेन व्यतिरेकव्यभिचारः स्यात्। विशेष्यतासंबन्धः कार्यतावच्छेदक इति द्योतयितुं समानेति। अन्यथा विशेष्यताप्रत्यासत्त्येति तृतीया-

न च संबन्धादेरपि नामार्थतया तत्प्रकारकाऽन्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्तिः, तत्तन्नामपदजन्यनामार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्वेपि।

राजसंबन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्यद्वयजन्यवाक्यार्थद्वयान्वयबोधे पुरुषस्य राजसंबन्धविशेष्यतया भानानुपपत्तिरिति वाच्यम्। प्रत्ययाधीनतत्तत्पदार्थोपस्थितयजन्यतत्तदर्थप्रकारकशाब्दत्वावच्छिन्नं प्रत्येव प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्या हेतुत्वोपगमात्।

---

न्तस्य हेतुत्वेऽन्वयात् हेतुतावच्छेदकत्वमात्रलाभः स्यात्। समानत्वं च यद्धर्मावच्छिन्नविशेष्यतायाः कार्यतावच्छेदकसंबन्धत्वम्, तद्धर्मावच्छिन्नविशेष्यतात्वमतोविशेष्यतायाः कार्यतावच्छेदकसंबन्धत्वस्य विशेष्यतयारकधर्मावच्छिन्नत्वस्य च लाभः। तेन द्रव्यत्वेनोपस्थिते घटत्वे न शाब्दबोधः। हेतुत्वकल्पनादिति। विशेष्यतासंबन्धेन नामार्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारताशालिशाब्दं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनादित्यर्थः। तथा च राजपुरुष इतिवाक्यात्स्वत्वसंसर्गकराजप्रकारकशाब्दबोधस्य विशेष्यतासंबन्धेन पुरुषे नापत्तिः, पुरुषे विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरभावादिति भावः। प्रत्ययार्थस्यैवेत्येवकारव्यवच्छेद्यं दर्शयति। नात्वेति। नामार्थान्तरस्येति। इदं च वस्तुगतिमनुरुध्य। भेदसंबन्धेननामार्थप्रकारकबोधे नामार्थान्तरस्यैव विशेष्यत्वात्। यद्वा नीलो घट इति वाक्यजन्यबोधे घटत्वनिष्ठप्रकारतानिरूपितविशेष्यताया घटे सत्त्वात्तत्र प्रत्ययजन्योपस्थितेरसत्त्वाद् व्यतिरेकव्यभिचारवारणाय नामार्थान्तरेति। नामान्तरार्थेति पाठो युक्तः। तेन चित्रगुरित्यादिबहुव्रीहौ गोपदलक्ष्यार्थगोगोस्वामिनोगोपदार्थयोरन्वयाभ्युपगमपक्षे व्यतिरेकव्यभिचारवारणाय तत्। तत्र नामान्तरार्थे।

राज्ञः पुरुषइत्यादौ षष्ठ्यर्थस्वत्वस्य "संबन्धरूपनामार्थतया" तन्निष्ठस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः पुरुषे सत्वात्तत्र च प्रत्ययजन्योपस्थितेरभावाद् व्यतिरेकव्यभिचारमाशंकते। न चेति। तत्प्रकारकबोधे। स्वत्वात्मकसंबन्धप्रकारकबोधे। भानानुपपत्तिरिति। पुरुषे विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरभावाद् व्यतिरेकव्यभिचार इति भावः। व्यभिचारं निराकर्तुमुपक्रमते। तत्तन्नामपदजन्येति। तथा च

अथैवमपि यत्र राजा पुरुष इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययवशात्कश्चित्प्रत्ययार्थोऽपि विषयीभूतः तत्र प्रत्ययजन्यतथाविध-समूहालंबनोपस्थितेर्विशेष्यतासंबन्धेन पुरुषेऽपि सत्वात्तस्य राजप्रकार-कान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव ।

---

राज्ञः पुरुष इत्यादौ संबन्धरूपनामार्थस्वत्वप्रकारकबोधस्य ङसप्रत्ययजन्यत्वेन संबन्धात्मकनामपदजन्यत्वाभावान्न व्यभिचारः । राज्ञः पुरुष इत्यादिवाक्य-जन्यबोधस्य संबन्धरूपनामार्थ"स्वत्व"संबन्धप्रकारकत्वात्, राजादिनामपद-जन्यत्वाच्च कार्यतावच्छेदकाक्रान्ततया विशेष्यतासंबन्धेन तादृशबोधस्य पुरुषे सत्वेन तत्र प्रत्ययजन्योपस्थित्यभावाद् व्यभिचारवारणाय तत्तदितिनाम-विशेषणम् । तथा च तस्य नामपदजन्यत्वाभावान्न व्यभिचार । अथ राज-पदजन्यस्य राजपदार्थप्रकारकस्य राज्ञः पुरुष इति वाक्यजन्यबोधस्य पुरुषे विशेष्यतया सत्वेन तत्र प्रत्ययजन्योपस्थित्यभावाद् व्यभिचारवारणाय तत्तन्नामपदप्रयोज्यतत्तन्नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्द-बोधं प्रत्येव प्रत्ययजन्योपस्थितेः कारणत्वोक्तौ तत्तदितिव्यर्थम्, पुरुषनिष्ठ-विशेष्यतानिरूपितप्रकारताया "षष्ठ्यर्थस्वत्वनिष्ठायाः" नामपदप्रयोज्यत्व-विरहेण व्यभिचाराभावात् । नापि राजसंबन्धः प्रमेयः राज्ञः पुरुष इति वाक्य जन्यसमूहालंबनबोधे पुरुषस्य विशेष्यतया भानानुपपत्तिः, पुरुषनिष्ठविशेष्य-तानिरूपित"षष्ठ्यर्थस्वत्वनिष्ठ"प्रकारतायाः संबन्धपदाऽप्रयोज्यत्वादिति चेत् तदा नोपादेयमेव तत्तदिति ।

तत्तन्नामेत्यादिकन्तु तत्तन्नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन तत्तन्नामपदजन्यशाब्दबोधं प्रति प्रत्ययजन्योपस्थितेः कारणत्वाभिप्रायेणोक्तम् । राजादिनामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधः स्वत्वे एव न तु पुरुषेऽतो न व्यभिचार ।

अत्रापि व्यभिचारमाह । राजसंबन्धः प्रमेयः राज्ञः पुरुष इति । वाक्यार्थद्वयान्वयबोधे इति । वाक्यद्वयजन्यसमूहालंबनबोधे इत्यर्थः । स च राजसंबन्धाऽभिन्नः प्रमेयः राजनिरूपितस्वत्ववान्पुरुष इत्याकारकः । भानानुपपत्तिरिति अत्र स्वत्वोपस्थितिः संबन्धपदेन ङसपदेन च । तथा च स्वत्वनिष्ठप्रकारता ङसपदप्रयोज्या संबन्धपदप्रयोज्या च । एवं च संबन्धा-त्मकनामपदजन्यनामार्थस्वत्वप्रकारकशाब्दबोधस्य विशेष्यतासंबन्धेन पुरुषे सत्वेन तत्र प्रत्ययजन्योपस्थितेरभावाद् व्यभिचार इति भावः । व्यभिचारं

न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेर्हेतुत्वोपगमान्नापत्तिः, तादृशसमूहालंबनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताया नाम्न एव जन्यतावच्छेदकत्वादिति वाच्यम्। ज्ञानभेदेन विशेष्यताभेदाभावात्, यत्र कुत्रचित्प्रत्ययादेव लक्षणादिना पुरुषाद्युपस्थितिस्तत्र तादृशोपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतातः पुरुषपदजन्यपुरुषाद्युपस्थितिविशेष्यताया अभिन्नतया तावतापि उक्तातिप्रसंगवारणाऽसंभवादिति चेन्न।

---

परिहरति। प्रत्ययाधीनेति। राजसंबन्धाभिन्नः प्रमेयः राजनिरूपितस्वत्ववान्पुरुष इत्युक्तसमूहालंबनबोधस्य संबन्धरूपनामार्थस्वत्वप्रकारकत्वेपि ङस्प्रत्ययाधीनस्वत्वोपस्थितिजन्यत्वस्यापि तत्र सत्वेन प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यत्वविरहेण कार्यतावच्छेदकानाक्रान्ततया तत्र प्रत्ययजन्योपस्थितेरहेतुत्वादिति भावः।

तत्तदित्यस्योभयत्र निवेशात्प्रत्ययाधीनोपस्थितिविषयत्वाप्रयोज्यनामार्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति प्रत्ययजन्योपस्थितेः कारणतालाभः।

प्रत्ययजन्योपस्थितेर्विशेष्यतासंबन्धेन कारणत्वेऽन्वयव्यभिचारमाशंकते। अथेति। एवमपि। प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतत्तत्पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धस्य कार्यतावच्छेदकत्वेपि। यत्र। यदा। प्रत्ययवशात्। पुरुषपदोत्तरसुपदात्। प्रत्ययार्थोपि। एकत्वमपि। तत्र। तदा। तथाविधेति। पुरुषविषयकेत्यर्थः। समूहालंबनोपस्थितेः। पुरुषः एकत्वं चेत्याकारिकायाः। पुरुषेपीति। अपिना एकत्वस्य समुच्चयः। तादृशैकत्वोपस्थितिर्यथा सुपदजन्या तथा पुरुषपदजन्यापीति बोध्यम्। तस्य। पुरुषस्य। राजप्रकारकान्वयबोधे। राजप्रकारकभेदान्वयबोधे। भानापत्तिरिति। विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेः पुरुषेपि सत्वादिति भावः।

समूहालंबनोपस्थितीयविशेष्यतायाः पुरुषे सत्वेपि पुरुषनिष्ठविशेष्यता न प्रत्ययजन्यतावच्छेदिकेति प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेः पुरुषेऽभावेन नापत्तिरित्याशंकते। नचेति। हेतुत्वोपगमादिति। नामार्थप्रकारकभेदान्वयबोधं प्रतीतिशेषः। आपत्त्यभावे हेतुमाह। तादृशेति। पुरुषः एकत्वं चेत्याकारकेत्यर्थः। नाम्न एवेति। पुरुषपदस्यैवेत्यर्थः। एवकारेण सुप्रत्ययव्यावृत्तिः। तादृशोपस्थितेः पुरुषपदाधीनत्वादिति भावः।

स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेनैवोपस्थितेर्हेतुतयोक्तसमूहालंबनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यतायाश्च तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतासामानाधिकरण्याभावान्नातिप्रसंग इति वदन्ति । तदसत् ।

---

आपत्तिं द्रढयति । ज्ञानभेदेन विशेष्यताभेदाभावादिति । विशेष्यतावच्छेदकभेदेन तद्भेदादिति भावः । अयं विशेष्यताया अभिन्नतयेत्यत्र हेतुः । यत्रकुत्रचित् । राज्ञः इत्यत्र । प्रत्ययादेव । ङस्प्रत्ययादेव । एवकारेण पुरुषपदव्यावृत्तिः । तत्र । राज्ञ इत्यत्र । तादृशेति । प्रत्ययलक्षणाधीनेत्यर्थः । विशेष्यतातः । पुरुषनिष्ठविशेष्यतातः लक्षणया सुप्रत्ययजन्यतावच्छेदकीभूतपुरुषनिष्ठविशेष्यतात इति यावत् । पुरुषाद्युपस्थितिविशेष्यतायाः । समूहालंबनोपस्थितीयपुरुषनिष्ठविशेष्यतायाः । तावतापि । विशेष्यतायां प्रत्ययजन्यतावच्छेदकीभूतत्वोपादानेपि । अतिप्रसंगवारणाऽसंभवादिति । लक्षणया ङस्प्रत्ययजन्यतावच्छेदकीभूत"पुरुषत्वावच्छिन्न"विशेष्यतासंबन्धेन "पुरुषः एकत्वं चे"ति समूहालंबनोपस्थितेः पुरुषे सत्वादिति भावः ।

राजा पुरुष इत्यत्र पुरुषे प्रसक्तां राजप्रकारकभेदान्वयबोधापत्तिं परिहरति । स्वजनकेति । तथा च तत्तन्नामपदजन्यनामार्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थितिः कारणम् । स्वं-उपस्थितिः । उक्तातिप्रसंगं निराकरोति । उक्तेति । स्वं राजापुरुष इत्यत्र"पुरुषः एकत्वं चेति समूहालंबनोपस्थितिः, तज्जनकं एकत्वं सुपदशक्यमितिप्रत्ययवृत्तिज्ञानं तदीयवृत्तिनिष्ठप्रकारतानिरूपितैकत्वनिष्ठविशेष्यतासामानाधिकरण्यस्य पुरुषनिष्ठविशेष्यतायामसत्वात्तेनसंबन्धेन प्रत्ययजन्योपस्थितेः पुरुषेऽभावान्नव्यभिचारः ।

ननु राजा पुरुष इत्यादौ पुरुषपदात्प्रत्ययपदाच्च पुरुषविषयिणी एकैवोपस्थितिर्जाता तत्रातिप्रसंगो दुर्वारः, तादृशोपस्थितिजनकप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतायाः पुरुषे सत्वादिति चेन्न । तत्तन्नामार्थप्रकारकाऽन्वयबुद्धौ तत्तन्नामपदसाकाङ्क्षप्रत्ययजन्योपस्थितेर्हेतुत्वात् । पुरुषपदोत्तरसुप्रत्ययस्य प्रकारीभूतराजपदसाकाङ्क्षत्वाभावान्नापत्तिः ।

नचैवमपि राज्ञः पुरुष इत्यादौ स्वत्वं ङस्पदशक्यं पुरुषः पुरुषपदशक्यं इति समूहालंबनवृत्तिज्ञानात्स्वत्वं पुरुषश्चेतिसमूहालंबनोपस्थितिस्तस्याः

प्रत्ययत्वस्याऽनुगताऽनतिप्रसक्तस्य दुर्वचतया उक्तकार्यकारणभाव-कल्पनाया असंभवात्। राजसंबन्धः पुरुष इत्यादि संबन्धापदे ङस्पद-त्वभ्रमदशायां सबन्धादिविशेष्यकराजादिपदार्थप्रकारकाऽन्वयबाधानु-पपत्तेः। राज्ञः पुरुष इत्यादौ ङस्पदादिषु संबन्धादिपदत्वभ्रमदशायां संबन्धांशे राजप्रकारकान्वयबाधापत्तेश्च। न च प्रत्ययत्वेन ज्ञात यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दोषद्वयस्य नावकाश इति वाच्यम्। राज्ञः पुरुष इत्यादौ षष्ठ्यादेः प्रत्ययत्वाद्यनुपस्थितिदशायामपि आनु-पूर्वीविशेषप्रकारकज्ञानाधीनतदर्थोपस्थितिसत्वे शाब्दबोधोत्पत्त्या प्रत्ययत्वप्रकारकज्ञाननिवेशाऽसंभवात्।

---

स्वत्वे इव पुरुषेपि सत्वाद् भेदाऽन्वयापत्तिरिति वाच्यम्। स्वीयविषयता-प्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकनामसाकाङ्क्षप्रत्ययवृत्तिप्रका-रतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेन हेतुत्वस्य विवक्षणात्। स्वं समूहालंबनोपस्थितिः। तादृशस्वत्वनिष्ठविशेष्यतावैशिष्ट्यस्य पुरुषनिष्ठ-विशेष्यतायामसत्वान्नापत्तिः।

केषांचिन्मतं निरस्यति। तदसदिति। अनुगतस्य। सकलप्रत्ययानु-गतस्य। अनतिप्रसक्तस्य च। दुर्वचतयेति। पाणिनिसंकेतसंबन्धेनप्रत्यय-पदवत्वं सुऔजसाद्यन्यतमत्वं वा प्रत्ययत्वमित्यनुगमादाह—राजसंबन्ध इति। स्वत्वविशेष्यकेत्यर्थः। अन्वयबोधानुपपत्तेरिति। वृत्तौ प्रत्ययनिरूपित-त्वाभावात्। अन्वयबाधापत्तश्चेति। तत्र वस्तुतो वृत्तौ प्रत्ययनिरूपितत्व-सत्वादिति भावः। प्रत्ययत्वेन ज्ञातं यत्पदमिति। प्रकारत्वं तृतीयार्थः। प्रत्ययत्वप्रकारकज्ञानविशेष्यं यत्पदमित्यर्थः। एतद्दोषद्वयस्य। आपत्त्यनुप-पत्त्योः। नावकाश इति। संबन्धपदे प्रत्ययत्वभ्रमदशायां प्रत्ययत्वेन ज्ञातं यत्संबन्धपदं तज्जन्योपस्थितेः विशेष्यतासंबन्धेन स्वत्वे सत्वान्नानुपपत्तिः। ङस्प्रत्यये सबन्धत्वभ्रमदशायां ङस्प्रत्ययस्य प्रत्ययत्वेन ज्ञातत्वाभावान्नापत्तिः। तदर्थोपस्थितिसत्वे। षष्ठ्यर्थस्वत्वोपस्थितिसत्वे। शाब्दबोधोत्पत्त्या। राजप्रकारकस्वत्वविशेष्यकबोधोत्पत्त्या। प्रत्ययत्वप्रकारकज्ञाननिवेशाऽ-संभवादिति। न च प्रत्ययत्वव्याप्यधर्मेण ज्ञातं यत्पदं तज्जन्योपस्थितेः कारणत्वे न दोषः, ङस्पदादौ संबन्धत्वभ्रमदशायां संबन्धपदत्वस्य प्रत्यय-त्वव्याप्यत्वाभावान्नापत्तिः। संबन्धपदे ङस्त्वभ्रमदशायां ङस्त्वस्य प्रत्यय-

इदं पुनरत्र तत्वम्। राजा पुरुष इत्यादौ पुरुषादिविशेष्यकराजादिप्रकारकभेदाऽन्वयबोधस्याऽप्रसिद्धयैव नापत्तिसंभवः। यत्र षष्ठ्यादिविभक्तेरेव स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्विशेष्यकराजादिप्रकारकभेदाऽन्वयबोधः प्रसिद्ध इति चेत्तर्हि तादृशबोधे तथाविधप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्या एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव न तदापत्तिः। अत एव स्वत्वादिसंबन्धेन राजविशिष्टपुरुषादितात्पर्यकतदादिपदघटितात्स सुन्दर इत्यादिवाक्यात्पुरुषादिविशेष्यकस्वत्वादिसंसर्गकराजादिप्रकारकशाब्दबोधस्य च प्रसिद्ध्या राजापुरुष इत्यादौ पदार्थोपस्थितियोग्यताज्ञानादिबलात्तादृशशाब्दबोधापत्तिरित्यपि निरस्तम्। स सुन्दर इति वाक्याधीनशाब्दबोधसामग्र्यास्तत्पदत्वावच्छिन्नधर्मिकसुन्दरादिपदसमभिहारज्ञानसहकृततदादिपदजन्यतादृशविशिष्टोर्थोपस्थितिघटिततया तदभावादेवाऽऽपत्त्यभावात्।

अथैतादृशरीत्याऽऽपत्तिवारणे राज्ञः पुरुष इत्यादौ स्वत्वादिसंबन्धेन पुरुषादौ राजाद्यन्वयबोधस्वीकारेपि क्षतिविरहादुक्तव्युत्पत्तिर्नियुक्तिका। विभक्तीनां संबन्धादिवाचकत्वमपि नियुक्तिकम्, नीलोघट इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वत्रविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वात्।

---

त्वव्याप्यत्वान्नानुपपत्तिरिति वाच्यम्। आनुपूर्वीविशेषाऽज्ञानदशायां तद्व्यक्तित्वादिना ङसादिज्ञानदशायां शाब्दबोधापत्तेर्दुर्वारत्वात्।

यादृशं फलं क्वचित्प्रसिद्ध्यति तादृशस्यैवाऽऽपत्तिः संभवति क्लृप्तसामग्रीबलात् यादृशं च सर्वथैवाऽप्रसिद्धं तादृशस्य चाऽऽपादकाऽऽप्रसिद्धेरापत्तिरशक्यैवेति न भेदान्वयबोधापत्तिरित्याह। इदं पुनरत्र तत्वमिति। तत्र। राज्ञः पुरुष इत्यत्र। षष्ठ्यादिविभक्तेरेवेति। अस्य पुरुषाद्युपस्थितिरित्यनेनान्वयः। एवकारेण पुरुषपदव्यावृत्तिः। तत्र। राज्ञः पुरुष इत्यत्र। तद्विशेष्यकेति। पुरुषविशेष्यकेत्यर्थः। तादृशबोधे। पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधे। तथाविधेति। राज्ञ इत्याकारकेत्यर्थः। तत्तद्विभक्तिजन्येति। ङस्विभक्तिजन्येत्यर्थः। सामग्र्या एवेति। एवकारेण राजा पुरुष इत्यत्र पुरुषपदजन्यपुरुषोपस्थितिघटितसामग्र्या व्यवच्छेदः। तादृशेति। राजप्रकारकपुरुषविशेष्यकभेदसंसर्गकेत्यर्थः। तदभावादेवेति।

नहि तत्र तथाविधाऽन्वयबोधोपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादिष्वपि तथाविधान्वयबोधप्रसंगः संभवति। तत्स्थलीयसामग्र्या षष्ठ्यन्तराजपदत्वावच्छिन्नधर्मिकपुरुषादिपदसमभिव्याहाररूपाऽऽकाङ्क्षाज्ञानघटिततया तदभावादेव तत्र तादृशसामग्र्या अभावात्। एवं च राजपुरुष इत्यादिसमासे राजादिपदस्य राजसंबन्ध्यादिलक्षणास्वीकारोपि व्यर्थः, तत्र भेदान्वयबोधस्वीकारेऽपि क्षतिविरहात्। न च तत्र भेदान्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादावपि तादृशान्वयबोधापत्तिरिति वाच्यम्। तत्स्थलीयशाब्दबोधे राजपदाऽव्यवहितोत्तरपुरुषादिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतयाऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपदव्यवहितत्वात्तादृशानुपूर्वीविशेषज्ञानाऽसंभवेन तादृशबोधसामग्र्या असिद्धेः।

---

राज्ञ इत्यानुपूर्वीरूपाकाङ्क्षाज्ञानसहकृतङस्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्यभावादेवेत्यर्थः। न तदापत्तिरिति। न राजा पुरुष इत्यादौ पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधापत्तिरित्यर्थः।

अतएव। वक्ष्यमाणसामग्र्यभावादेव। तादृशशाब्दबोधापत्तिः। पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकारकशाब्दबोधापत्तिः। तदभावादेवेति। स सुन्दरइत्यानुपूर्वीविशेषाऽऽकाङ्क्षाज्ञानसहकृततत्पदजन्यस्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकोपस्थितिघटितसामग्र्यभावादेवेत्यर्थः। आपत्त्यभावादिति। राजा पुरुष इत्यादौ पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकारकशाब्दापत्त्ययोगादित्यर्थः।

संसर्गतावादी उपतिष्ठते। अथेति। एतादृशरीत्या। आनुपूर्वीविशेषरूपाऽऽकाङ्क्षायाः प्रयोजकत्वकल्पनया। आपत्तिवारणे। राजा पुरुष इत्यादौ भेदान्वयबोधापत्तिवारणे। क्षतिविरहादिति। राजा पुरुष इत्यादौ षष्ठ्यन्तराजपदसमभिव्याहाराभावेन भेदान्वयबोधापत्तिरूपायाः क्षतेरभावादित्यर्थः। उक्तव्युत्पत्तिः। निपातातिरिक्तनामार्थयोः साक्षाद् भेदेन नान्वय इति नियमः। संबन्धादिवाचकत्वमपि। आदिना कर्मत्व-करणत्वादिपरिग्रहः। अपिनोक्तव्युत्पत्तेः समुच्चयः। सर्वविभक्तीनामिति। विशेष्यवाचकपदोत्तरविभक्तीनामपीत्यर्थः। साधुत्वमात्रार्थकत्वस्यैवेति। एवकारेण संबन्धादिव्यावृत्तिः। उचितत्वादिति। न च घटमित्यादौ द्वितीयादिविभक्तेः कर्मत्वादिवाचकत्वमावश्यकम्, अन्यथा घटीया कर्मतेति कर्मताविशेष्यक-

न च प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याऽऽकाङ्क्षात्वात्प्रातिपदिकद्वयाऽव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रामाणिकमिति वाच्यम्। भवन्मतेपि राजपुरुष इत्यादौ यादृशसामग्रीबलाद्राजपदार्थराजसंबन्धिपुरुषपदार्थयोरभेदान्वयबोधस्तादृशसामग्रीबलाद्राज्ञः पुरुष इत्यादावपि राजादिपदस्य राजसंबन्ध्यादौ लक्षणाग्रहसत्वे तादृशाऽभेदाऽन्वयबोधप्रसंगवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधे हेतुताकल्पनस्यावश्यकत्वात्। अस्माभिर्भेदान्वयबोधे एव तादृशानुपूर्वीज्ञानस्य हेतुतायाः कल्पनीयत्व त्।

---

शाब्दबोधो न स्यादिति वाच्यम्। घटमानयेत्यादिविभक्त्यन्तपदद्वयसमभिव्याहारादेव शाब्दबोधः, विभक्त्यन्तैकपदस्थले मानसबोध एव प्रत्ययस्य शक्तिभ्रमेण वा बोध इत्यभिप्रायेण तदुक्तेरिति ध्येयम्। संसर्गतावादीस्वाभिप्रायं प्रकटयति। नहींति तत्र। राज्ञः पुरुष इत्यत्र। तथाविधेति। स्वत्वसंबन्धेन राजवान्पुरुष इत्याकारकेत्यर्थः। तत्स्थलीयेति। राज्ञः पुरुष एतत्स्थलीयेत्यर्थः। तथाविधेति स्वत्वसंबन्धेन राजविशिष्टः पुरुष इत्याकारकेत्यर्थः। तत्स्थलीयेति। राज्ञः पुरुष एतत्स्थलीयेत्यर्थः। तदभावादेव। तादृशाकाङ्क्षाऽभावादेव। तत्र। राजापुरुष इत्यादौ। तादृशेति। आकाङ्क्षाघटितेत्यर्थः। एवं च। राज्ञः पुरुष इत्यत्र भेदाऽन्वयबोधस्वीकारे च। तत्र। राजपुरुष इत्यत्र। राजपुरुष इत्यत्र राजपुरुषपदयोः समभिव्याहाररूपाऽऽकाङ्क्षाज्ञानस्यैव कारणत्वं न तु राजपदे षष्ठ्यन्तत्वनिवेश इत्याशयेन शंकते। नचेति। तत्र। राजपुरुष इत्यत्र। तत्स्थलीयेति। राजपुरुष एतत्स्थलीयेत्यर्थः। तादृशेति। स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकेत्यर्थः। तत्स्थलीयशाब्दबोधे। राजपुरुष इति स्थलीयशाब्दबोधे। असमासस्थले। राजा पुरुष इत्यादौ। तादृशेति। राजपदाऽव्यवहितोत्तरपुरुषपदत्वरूपेत्यर्थः। तादृशेति। भेदान्वयेत्यर्थः। स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकेति यावत्। असिद्धेरिति। विरहादित्यर्थः।

प्रकारतावादी राजपुरुष इत्यत्राऽऽकाङ्क्षानुपपत्तिमाशंकते। न चेति। आनुपूर्वीविशेषरूपस्येति। घटपदाऽव्यवहितोत्तराऽम्पदत्वरूपानुपूर्वीविशेषस्येत्यर्थः। आकाङ्क्षात्वादिति। घटः कर्मत्वमिति घटकर्मत्वोपस्थापकपदयोः समभिव्याहारे ज्ञातेपि कर्मत्वं घटीयमिति शाब्दानुदयादिति भावः। निष्प्रामाणिकमिति। राजपदाऽव्यवहितोत्तरपुरुषपदत्वरूपानुपूर्वीविशेषस्याऽऽकाङ्क्षात्वं निष्प्रामाणिकमित्यर्थः। तथा च राजपुरुषपदसमभिव्याहार-

न चोभयमते एव राजसंबन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहेण राजपुरुष इत्यत्र राजसंबन्धिपुरुषयोरभेदान्वयबोधो भवति। इयांस्तु विशेषोयदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुषो भवन्मते कर्मधारय इति। एवं च पुरुषविशेष्यकाऽभेदसंसर्गकराजसंबन्धिप्रकारकबोधे राजपदाऽव्यवहितोत्तरपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्धमेव। भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पनमधिकमिति वाच्यम्।

उक्ताऽभेदाऽन्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्यायशब्दान्तरघटितानुपूर्वीज्ञानजन्यतथाविधाऽन्वयबोधे व्यभिचारवारणाय तादृशानुपूर्वीज्ञानानन्तर्यस्य कार्यतावच्छेदककोटौ अवश्यं निवेशनीयतया तत्र विषयनिवेशे प्रयोजनाभावेन तादृशकार्यतावच्छेदकस्यैव भेदाऽन्वयबोधसाधारण्येनानुपूर्वीज्ञानस्य भेदान्वयबोधे हेतुताया अनाधिक्यात्।

---

रूपाकाङ्क्षैव प्रयोजिका वाच्या, तस्याश्च राजपुरुषइत्यादाविव राजापुरुष इत्यादावपि सत्वाद् भेदान्वयबोधापत्तिरिति भावः।

आपत्तिंपरिहरति। भवन्मतेपीति। प्रकारतावादिमतेपीत्यर्थः। यादृशसामग्रीबलादिति। राजपुरुषपदसमभिव्याहाररूपासामग्रीबलादित्यर्थः। तादृशसामग्रीबलादिति। राजपुरुषपदसमभिव्याहारघटितसामग्रीबलादित्यर्थः। तादृशेति। राजसंबन्धीत्यर्थः। तथाविधेति। राजपदाऽव्यवहितोत्तरपुरुषपदत्वरूपेत्यर्थः। समासजन्यबोधे। राजपुरुषइतिवाक्यजन्यबोधे। अस्माभिः। संसर्गतावादिभिः। तादृशानुपूर्वीविशेषेति। राजपदाऽव्यवहितोत्तरपुरुषपदत्वरूपानुपूर्वीविशेषेत्यर्थः। कल्पनीयत्वादिति। तथा च प्रातिपदिकद्वयाऽव्यवधानरूपानुपूर्वीविशेषस्यापि आकाङ्क्षात्वान्न राजापुरुष इत्यत्र भेदान्वयापत्तिरिति ध्येयम्।

प्रकारतावादी राजपुरुष इत्यत्र भेदान्वयबोधस्वीकर्तृसंसर्गतावादिमते गौरवं प्रदर्शयति। नचेति। अस्मन्मते। प्रकारतावादिमते। भवन्मते। संसर्गतावादिमते। एवं च। स्वारसिकलक्षणाग्रहेणाऽभेदान्वयबोधस्वीकारे च। भेदाऽन्वयबोधे। संसर्गतावादिमते इति शेषः। तादृशेति। राजपदाव्यवहितोत्तरपुरुषपदत्वरूपेत्यर्थः। संसर्गतावादी गौरवं निरस्यति। उक्ताऽभेदान्वयबोधे इति। राजसंबन्ध्यभिन्नः पुरुष इत्यन्वयबोधे इत्यर्थः। तथाविधेति। राजपदाव्यवहितोत्तरपुरुषपदत्वरूपेत्यर्थः। पर्यायशब्दान्तरघटितेति। नृपपुरुषघटितनृपपदाव्यवहितोत्तरपुरुषपदत्वरूपेत्यर्थः। तथा-

विधेति। राजसंबन्ध्यभिन्नः पुरुषइत्याकारकेत्यर्थः। व्यभिचारवारणाय। परस्परजन्ये व्यभिचारवारणाय। निवेशनीयतयेति। अयं भावः—राजपदाऽव्यवहितोत्तरपुरुषपदत्वरूपानुपूर्वीज्ञानाव्यवहितोत्तरत्वविशिष्टाऽभेदसंसर्गकराजसंबन्धिप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रति राजपुरुषइत्यानुपूर्वीज्ञानं कारणम्। एवं नृपपुरुषइत्यादावपि बोध्यम्। तत्र। कार्यतावच्छेदककोटौ। विषयनिवेशे। अभेदसंसर्गकराजसंबन्धिप्रकारकपुरुषविशेष्यकत्वनिवेशे। तादृशेति। राजपुरुषइतिज्ञानाऽव्यवहितोत्तरत्वरूपेत्यर्थः। कार्यतावच्छेदकस्यैवेति। एवकारेण विषयनिवेशव्यावृत्तिः। अनाधिक्यादिति। तथा च राजपुरुषइतिज्ञानाव्यवहितोत्तरत्वविशिष्टशाब्दबोधं प्रति राजपुरुषइत्याकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावे पर्यवसिते तत्र राजपुरुष इति ज्ञानाऽव्यवहितोत्तरत्वस्य स्वत्वसंसर्गकराजप्रकारकेऽभेदसंसर्गकराजसंबन्धिप्रकारके च शाब्दबोधे सत्त्वान्न कारणताधिक्यमिति भावः।

---

तादृशरीतिश्च कार्यतावच्छेदकावच्छिन्ना यावत्यो व्यक्तयस्तत्प्रत्येकाधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं कारणत्वम्। तथा च राजपुरुष इत्याकाङ्क्षाज्ञानविशिष्टं प्रति तादृशाकाङ्क्षाज्ञानं कारणम्। वै० स्वाव्यवहितोत्तरत्व, स्वसामानाधिकरण्योभयसं०। न च यत्र चैत्रस्याकाङ्क्षाज्ञानं ततो यज्ञदत्तोयाऽपेक्षाबुद्धितउत्पन्ने चैत्रमैत्रगते द्वित्वे व्यभिचारः, आकाङ्क्षाज्ञानविरहिणि मैत्रे द्वित्वसत्त्वादिति वाच्यम्। क्रियासंयोगकार्यकारणभावोक्तरीत्या व्यभिचारस्य वारणीयत्वात्। अथवोक्तव्यभिचारवारणाय शाब्दत्वस्य कार्यतावच्छेदककोटौ आवश्यकत्वेपि विषयनिवेशे मानाभावात्।

न चाऽऽकाङ्क्षाज्ञानाऽव्यवहितोत्तरशाब्दं प्रति आकाङ्क्षाज्ञानस्य न हेतुत्वम्, तथा सति अप्रामाण्यज्ञानास्कन्दिताऽऽकाङ्क्षाज्ञानादपि शाब्दबोधापत्तेः। किन्तु आकाङ्क्षाज्ञानाऽव्यवहितोत्तरशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दिताऽऽकाङ्क्षाज्ञानस्य कारणत्वं वाच्यम्, यत्र राजपुरुष। नीलोघट इतिसमूहालंबनमाकाङ्क्षाज्ञानं ततो राजपुरुष इति ज्ञानं राजपदाव्यवहितोत्तरत्वाभाववति राजपदाव्यहितोत्तरत्वप्रकारकमित्यप्रामाण्यज्ञानं ततो नीलोघटइतिवाक्यादपि शाब्दबोधानुपपत्तिः। अभेदसंसर्गकनीलप्रकारघटविशेष्यकशाब्दक्षणे तत्पूर्वं वा अप्रामाण्यज्ञानानास्कन्दिताऽऽकांक्षाज्ञानविरहात्। राजसंबन्ध्यभिन्नः पुरुष इति शाब्दप्रत्येवाप्रामाण्यज्ञानानास्कन्दितआकांक्षाज्ञानस्यपेक्षिततया कार्यतावच्छेदककोटौ विषयनिवेश आवश्यकः। तथा च नीलोघट इत्याकाङ्क्षाज्ञानाव्यवहितोत्तरत्वविशिष्टाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दितनीलोघट

एवं तण्डुलं पचतीत्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादिसंबन्धेन तण्डुलादेरन्वयबोधः स्वीकर्त्तुमुचितः। कर्मत्वस्य पाकाद्यंशे प्रकारत्वे तत्र तत्र द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादि-संसर्गस्याधिकस्य विषयताकल्पने गौरवात्।

तण्डुल पचतीत्यादिवाक्यजन्यशाब्दबोधसामग्रीवलात्तण्डुलः पचतीत्यादावपि तथाविधान्वयबोधापत्तिस्तु न संभवति। तादृशान्वय-बोधे द्वितीयान्ततण्डुलपदत्वाद्यवच्छिन्नधर्मिक पचतिपदसमभिव्याहार-ज्ञानस्य हेतुतया तण्डुलः पचतीत्यादौ तादृशसामग्र्या अप्रसिद्धेः।

एवं पचति चैत्र इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशेऽन्वय-बोधस्वीकार उचितः। अन्यथोक्तरीत्या गौरवात्। तत्र तादृशान्वय-बोधस्वीकारे तत्स्थलीयसामग्रीवशात्पच्यते चैत्रः पाकश्चैत्र इत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्या वारणसंभवादिति।

---

इत्याकाङ्क्षाज्ञानस्य कारणत्वान्नानुपपत्तिरिति वाच्यम्। कार्यतावच्छेदककोटौ विषयनिवेशेपि यत्र राजपुरुष नृपतिपुरुष इति समूहालंवनमाकांक्षाज्ञानं तत एकत्राऽप्रामाण्यज्ञानं ततः शाब्दानुपपत्तिवारणाय कार्यतावच्छेदककोटावपि अप्रामाण्यज्ञानानास्कन्दितत्वं निवेश्यम्, तथा चाऽप्रामाण्यज्ञानानास्कन्दिततत्तदा-काङ्क्षाज्ञानाव्यवहितोत्तरशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दिततत्तदाकाङ्क्षा-ज्ञानस्य कारणत्वावश्यकतया विषयनिवेशे प्रयोजनाभावात्। नचाऽप्रामाण्यग्रह-धर्मिकाप्रामाण्यग्रहसत्वे कार्यमुत्पद्यते पुनस्तद्धर्मिकाऽप्रामाण्यग्रहसत्वे नोत्पद्यते इत्यप्रामाण्यज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेनाऽभावः कारणतावच्छेदककोटौ निवेशनीयः। राजसंबन्ध्यभिन्नः पुरुष इत्येकविषयकशाब्दबोधानुकूलाकाङ्क्षाज्ञानद्वयस्थलीयैकतराऽ-प्रामाण्यज्ञानव्यक्तेरभावः कारणतावच्छेदककोटौ न निवेशनीयः शाब्दबोधोत्पत्त्या व्यभिचाराभावात्, कार्यतावच्छेदककोटौ अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशोऽना-वश्यकः। तथा च कार्यतावच्छेदककोटौ विषयो निवेश्य इति वाच्यम्।

यत्रादौ राजपुरुष इति आकांक्षाज्ञानं तत अप्रामाण्यज्ञानास्कन्दितं नीलो घट इति आकाङ्क्षाज्ञानं ततो राजसंबन्ध्यभिन्नः पुरुष इति बोधः तदनन्तरं नीलोऽभिन्नो घट इति बोधापत्तिवारणाय कारणतावच्छेदककोटौ तदप्रामाण्यज्ञान-व्यक्तेरभावस्य निवेशनीयतया द्वितीयक्षणे शाब्दबोधानुपपत्तिवारणाय कार्यतावच्छे-दककोटावपि तन्निवेश आवश्यकः। तथाचाऽप्रामाण्यज्ञानानास्कन्दिततत्तदाकाङ्क्षा-ज्ञानाव्यवहितोत्तरशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दिततत्तदाकाङ्क्षाज्ञानस्य कारणत्वे विषयनिवेशो व्यर्थं इति ध्येयम्।

एवं। राज्ञः पुरुष इत्यादौ स्वत्वसंसर्गकबोधस्वीकारे। कर्मत्वप्रकारत्वे गौरवमाह। कर्मत्वस्येत्यादिना। निरूपकतासंबन्धेनेत्यादिः। तत्र तत्र। कर्मत्वे करणत्वादौ च। शक्तिकल्पने। अस्य गौरवादित्यनेनाऽन्वयः। इदमुपलक्षणम्। वृत्तिज्ञानाधीनोपस्थितिकल्पने इत्यपि बोध्यम्। तादृशवाक्यजन्येति। तण्डुलं पचतीतिवाक्यजन्येत्यर्थः। कर्मत्वादिसंसर्गस्येति। कर्मत्वादीनां संसर्गस्येत्यर्थः। निरूपकत्वसंसर्गस्येति यावत्। एवं प्रकृत्यर्थप्रतियोगिकाऽऽधेयतासंसर्गस्येत्यपि बोध्यम्। गौरवादिति। कर्मत्वस्य संसर्गत्वे तु तत्संसर्गो न भासते, अनवस्थाभयेन संसर्गसंसर्गभानानुपगमात्। तथाविधेति। कर्मतासंबन्धेन तण्डुलविशिष्टः पाक इत्याकारकेत्यर्थः। तादृशसामग्र्या इति। द्वितीयान्ततण्डुलपदसमभिव्याहारघटितसामग्र्या इत्यर्थः। अन्वयबोधस्वीकार इति। कृतिसंबन्धेन पाकविशिष्टश्चैत्र इति बोधस्वीकार इत्यर्थः। अन्यथा। चैत्राद्यंशे कृतेः प्रकारत्वे। उक्तरीत्या। कृतौ आख्यातस्य शक्तिकल्पने धात्वर्थव्यापारस्य कृतावनुकूलत्वसंसर्गकल्पने कृतेश्चाऽऽश्रयतासंसर्गकल्पने इति भावः। तत्र। चैत्रः पचतीत्यत्र। तादृशेति। कृतिसंबन्धेन पाकविशिष्टश्चैत्र इत्याकारकेत्यर्थः। तथाविधेति। कृतिसंबन्धेन पाकविशिष्टश्चैत्र इत्याकारकेत्यर्थः। उक्तरीत्यैवेति। शब्दिकरणविशिष्टाख्यातान्तधातुपदसमभिव्याहृतप्रथमान्तचैत्रपदसमभिव्याहाररूपाया आकाङ्क्षायाः प्रयोजकत्वकल्पनेनेत्यर्थः। एतावता संसर्गतावादिमतं परिष्कृतम्[1]।

---

१ अत्र जगदीशः—युज्यते चोत्तरः कल्प इति। कर्मत्वादेः संसर्गविधया भानं युज्यते इति तदर्थः। अत एव।

दर्शते राजमातङ्गास्तस्यैवाऽमी तुरङ्गमाः।
चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना॥

इत्यादौ तस्य तत्रेति तत्पदाभ्यां राज-ग्रामयोः परामर्शः। राजपदस्य राजसंबन्धिलक्षकत्वे ग्रामपदस्य ग्रामकर्मकलक्षकत्वे तत्पदेन राजग्रामयोः परामर्शो न स्यात्। तयोर्लक्ष्यार्थैकदेशत्वात्। तदादिशब्दानां पदवृत्तिज्ञानाधीनोपस्थितिविशेष्यपरामर्शकत्वात्। अन्यथा—

न हि प्रजावतीयं मे स्वं तस्मै देहि केवलम्।
नीलोमणिर्गुणः सोऽत्र भ्रात्रादिर्बोध्यते तदा॥

नहीत्यस्यबोध्यते इत्यनेनाऽन्वयः। प्रजावती। भ्रातृजाया। मणिः मणिसंबन्धी।

मैवम्। राज्ञः पुरुष इत्यादौ षष्ठ्यादेः स्वत्वादिवाचकत्वमावश्यकम्।

---

उक्तपद्यानां प्रामाणिकत्वस्य सविवादतया अकिञ्चित्करत्वम्, समासस्थले तत्पदस्य लक्ष्यार्थघटकविभक्त्यर्थविशेषणीभूतार्थपरामर्शकत्वं वेतिव्युत्पत्त्यन्तरं मनसि निधाय प्रकारतापक्षं परिष्करोति। मैवमिति। स्वत्वादिवाचकत्वमावश्यकमिति। अत्रायं संशयः। स्वत्वत्वेन वाच्यता संबन्धत्वेन वा। आद्ये स्वत्वत्वादिना विशेषरूपेण वाच्यत्वे संबन्धानामनन्ततयाऽनन्तशक्तिकल्पनापत्तिः। अतः संबन्धत्वेनैव वाच्यतोचिता। क्वचित्स्वत्वत्वादिना भानन्तु इतरबाधबलात्। अत एवाग्रे राजस्वत्वाभावरूपबाधप्रदर्शनम्। तन्न युक्तम्। विशिष्टबुद्धिनियामकत्वरूपसंबन्धत्वानुपस्थितिदशायामपि राज्ञः पुरुष इत्यादिवाक्याच्छाब्दबोधदर्शनात्। राजस्वत्वाभाववानिति बाधनिश्चयेपि

---

सः। मणिः। तदा। तच्छब्देन। इत्यसंगतं स्यात्। अतो विभक्त्यर्थस्य संसर्गतामतमेवोचितमिति।

अत्रेदं विचारणीयम्। राज्ञः पुरुष इत्यत्र शक्तिभ्रमेण षष्ठीविभक्त्या स्वत्वोपस्थितौ स्वत्वप्रकारकबोध एव स्वीकर्तव्यस्तथा च संसर्गतावादिमते गौरवम्। एवं भिन्नविषयकप्रत्यक्षे द्विविधशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने चाऽति गौरवम्। विभक्त्यर्थस्य प्रकारतामते च स्वत्वादिसंसर्गकबोधस्याऽलीकत्वेन शाब्दसामग्र्या एकविधत्वात्। अथ विभक्त्या स्वत्वोपस्थितावपि स्वत्वसंसर्गकबोध एवाऽभ्युपेतव्यः, शक्त्यकल्पनस्वत्वप्रतियोगिकसंसर्गभानाऽभावप्रयुक्तलाघवसद्भावात्। तादात्म्यसंसर्गताविचारे विशेषणविभक्त्या तादात्म्योपस्थितावपि तत्संसर्गकबोध एव स्वीकृतोग्रन्थकृतेति संसर्गतावादिमतमेव ज्यायः। न च राज्ञः पुरुषइत्यादौ राज पुरुषइत्यादौ च राजस्वत्वेलक्षणायां राजस्वत्वप्रकारकबोधस्य संसर्गतावादिमते स्वीकरणीयतया द्विविधसामग्रीकल्पने गौरवादिति वाच्यम्। राज्ञः पुरुष इत्यत्र राजपदस्य राजस्वत्वे लक्षणायां राजस्वत्वसंबन्धप्रकारकबोधस्य संसर्गतामतेऽनभ्युपगमेन सामग्रीद्वयस्य तुल्यत्वात्। न च राजस्वत्वसंबन्धलक्षणायां संसर्गतामतेपि तत्प्रकारकबोधः स्वीकरणीय एवेतिसामग्रीत्रयकल्पनाद् गौरवमिति वाच्यम्। स्वत्वादिशक्त्यकल्पनालाघवनिश्चयेन तादृशगौरवस्य दूषकत्वाऽसंभवात्। न च वक्ष्यमाणसामग्रीप्रतिबन्धकताकल्पनागौरवं संसर्गतावादिमतप्रतिकूलमिति वाच्यम्। दर्शिते राजमातंगा इत्यादि प्रामाणिकपद्यस्य प्रकारतापक्षे दुरुपपादतया गौरवस्याऽकिंचित्करत्वादिति ध्येयम्।

अन्यथा पुरुषो न राज्ञ इत्यादौ पुरुषे राजस्वत्वाभावबोधानुपपत्तेः। न हि तत्र स्वत्वादिसबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाव एव प्रतीयते न तु राजस्वत्वाभाव इति संभवति। स्वत्वसंबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः।

अत एव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थत्वं नवीनाः स्वीकुर्वन्ति। स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासंबन्धेन पुरुषेऽन्वयसंभवेपि तादृशसंबन्धस्य वृत्त्यनियामकतया संसर्गाभाव प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नाभावस्य नञा प्रतिपादनाऽसंभवात्। आश्रयतासंबन्धावच्छिन्नाभावबोधस्यैतादृशसमभिव्याहारस्थलेऽभ्युपगमे चैत्रादिसंबन्धिनि धनेऽपि आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्त्वान्नेदं चैत्रस्येति प्रयोगापत्तिः।

---

राज्ञः पुरुष इति वाक्याच्छाब्दबोधप्रसङ्गाच्च। विशेषाभाववत्तानिश्चयस्य सामान्यवत्ताबुद्ध्यप्रतिबन्धकत्वात्। एवं च स्वत्वत्वादिनैव शक्तिरुचिता। पूर्वग्रन्थे राजसंबन्धत्वेन स्वत्वकीर्तनं तु ग्रन्थकारशैली एव। अतएवाग्रे ग्रामवृत्तिसंयोगादीनां ग्रामवृत्तिकर्मतात्वेन कीर्तनम्।

अन्यथा। स्वत्वादेः संसर्गत्वे। पुरुषे इति। विशेष्यकत्वं सप्तम्यर्थः। राजस्वत्वाभाववान्पुरुष इति बोधानुपपत्तेरित्यर्थः। ननु स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान्पुरुष इत्येव बोधोऽस्तु इत्यत आह। नहीति। अस्य संभवतीत्यनेनाऽन्वयः। तत्र। राज्ञः पुरुष इत्यत्र। एवकारव्यवच्छेद्यमाह। नत्विति। प्रतियोगितानवच्छेदकत्वेनेति। येन संबन्धेन प्रतियोगिनोवृत्तित्वं प्रत्यक्षसिद्धं स एव प्रतियोगितावच्छेदकसंबन्धः। कुण्डलादिस्वामिन्यपि कुण्डलाऽसंयुक्ते कुण्डली देवदत्त इति प्रत्यक्षानुदयात् वृत्त्यनियामकस्य न प्रतियोगितावच्छेदकसंबन्धत्वमिति भावः। स्वरूप-संयोग-समवाय-कालिक-दैशिकाः वृत्तिनियामकसंबन्धाः। अत एव। वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वादेव। तस्य। स्वामित्वस्य। अन्वयसंभवेपीति। निरूपकतासंबन्धेन राजनिष्ठस्वामिताविशिष्टः पुरुष इत्यन्वयसंभवेपीत्यर्थः। तादृशसंबन्धस्य। निरूपकतासंबन्धस्य। वृत्त्यनियामकतादात्म्यसंबन्धस्यान्योन्याभावप्रतियोगितावच्छेदकत्वादाह। संसर्गाभावेति। तत्संबन्धावच्छिन्नाभावस्य। निरूपकतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य। नञा-

न च नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वेपि राज्ञः पुरुष इत्यादौ षष्ठ्याद्यर्थस्य संसर्गमर्यादया भानमुचितम्। तस्य प्रकारत्वोपगमे तत्संबन्धस्याऽधिकस्य भानकल्पनेन गौरवात्। नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीविरहात्तत्प्रकारकबोधस्य तदसमभिव्याहारस्थलेऽसंभवादिति वाच्यम्। एवं सति नञ्पदं बिना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन संबन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारे तत्र धर्मिणि तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनानुभवस्यापलापापत्तेः। राज्ञः पुरुष इति वाक्यजन्याऽप्रामाण्यज्ञानानास्कन्दितबोधदशायां पुरुषो न राज्ञ इति वाक्यादपि शाब्दबोधापत्तेः। स्वत्वाभावबुद्धौ स्वत्वसंसर्गकज्ञानस्य विरोधित्वे मानाभावात्।

---

प्रत्यायनाऽसंभवादिति। तथा च पुरुषो न राज्ञ इत्यादौ निरूपकतासंबन्धावच्छिन्नप्रतियोगिताकराजस्वामित्वाभाववान्पुरुष इति बोधासंभवादित्यर्थः। आश्रयतासंबन्धेति। आश्रयताप्रतीतिनियामकस्वरूपसमवायसंबन्धेत्यर्थः। आश्रयतात्वेन संसर्गत्वे यथाश्रुतमेव सम्यक्। नचाऽऽश्रयतात्वेन संसर्गत्वे मानाभाव इति वाच्यम्। वन्हिमानयमितिनिश्चयेपि समवायेन संयोगेन वा वन्हिरितिसंशयदर्शनादाश्रयतायाः संसर्गत्वमावश्यकमिति केचित्। एतादृशसमभिव्याहारस्थले। पुरुषोन राज्ञ इति नञ्समभिव्याहारस्थले। प्रयोगापत्तिरिति। निरूपकतासंबन्धेन स्वामित्वस्य धने सत्वेनाऽऽश्रयतासंबन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्वादिति भावः। इदमुपलक्षणम्। आश्रयतासंबन्धेन स्वामित्वस्य पुरुषेऽसत्वेन राजपुषेपि पुरुषो न राज्ञ इति प्रयोगापत्तिर्बोध्या। संसर्गमर्यादया भानमुचितमिति। नञ्समभिव्याहारस्थले षष्ठीविभक्तेरुभयमतेपि स्वत्वोपस्थाकतया स्वत्वोपस्थितौ षष्ठीविभक्तेरवश्यक्लृप्तनियतपूर्ववृत्तितया स्वत्वस्य संसर्गत्वेन भानं नोचितम्। किंच राजसंबन्धितया पुरुषं बुबोधयिषुः राज्ञः पुरुष इतिवाक्यं प्रयुङ्क्ते न तु राजापुष इति वाक्यम्। परन्तु लाघवात्स्वत्वादेः संसर्गतया भाने षष्ठीविभक्तेः स्वत्वोपस्थापकत्वस्याऽनावश्यकतया पदसाधुत्वमात्रार्थकत्वात्, साधुत्वस्य च प्रथमया निर्वाहसंभवात्। वस्तुत एवं लाघवादरे राजपुरुष इत्यादौ पुरुषपदोत्तरैकवचनार्थैकत्वसंसर्गकोटौ राजपदार्थंघटकीकृत्य स्वसमानाधिकरणराजस्वत्वसंबन्धेनैकत्वप्रकारकपुरुषविशेष्यकबोधस्वीकारे कुसृष्टिकल्पना स्यादितिध्येयम्। तस्य। षष्ठ्याद्यर्थस्य। नञ्समभिव्याहारस्यैवेति एवकारेण-

वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वेपि राज्ञः पुरुष इत्यादौ राजस्वत्वादेः प्रकारताभ्युपगमः समुचितः। अन्यथा तादृशसमभिव्याहारज्ञानघटितसामग्रीकाले राजस्वत्वाभाववान्पुरुषः सुन्दर इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वाधिक्येन गौरवात्। अस्मन्मते तादृशसमभिव्याहारज्ञानघटितसामग्र्या राजस्वत्वाभाववान्पुरुष इत्यादि बाधाभावघटिततया तत्सत्त्वे विशेष्यतावच्छेदकादिप्रकारकनिश्चयरूपकारणविरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसंभवेन तादृशसामग्र्यास्तत्र प्रतिबन्धकत्वस्याऽकल्पनात्।

---

तदसमभिव्याहारस्य व्यवच्छेदः। तत्प्रकारकेति। स्वत्वप्रकारकेत्यर्थः। सामग्रीविरहादिति। नञसमभिव्याहाररूपसामग्रीविरहादित्यर्थः। तत्प्रकारकबोधस्य। स्वत्वप्रकारकबोधस्य। तदसमभिव्याहारस्थले। नञोऽसमभिव्याहारस्थले। एवं सति। नञोऽसमभिव्याहारस्थले स्वत्वसंसर्गकबोधस्वीकारे सति। मानाभावादिति।

ननु स्वत्वाभावप्रकारकबोधानुत्पाद एव लाघवज्ञानसहकृतस्वत्वसंसर्गकनिश्चयस्य प्रतिबन्धकत्वे मानमितिचेन्न। राजस्वत्वाभाववान्पुरुष इति बोधं प्रति अनुमित्यादिसाधारणस्वरूपसंबन्धावच्छिन्नस्वत्वप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वस्य क्लृप्ततया तदन्यप्रतिबन्धकत्वकल्पने गौरवात्। उक्तबोधा-

---

न च राजविषयतानिरूपिता या स्वरूपसंबन्धातिरिक्तसंबन्धानवच्छिन्ना स्वत्वविषयता तन्निरूपितपुरुषनिष्ठविशेष्यताशालिनिश्चयत्वेनोभयसाधारणप्रतिबन्धकतासंभवादुक्तानुत्पादस्य स्वत्वसंसर्गविषयकत्वलाघवसहकृतस्य स्वत्वप्रकारकत्वकल्पनापरिपन्थित्वं दुर्वारमिति वाच्यम्। स्वत्वांशे कालिकादिना राजप्रकारकबोधस्यापि प्रतिबन्धकत्वापत्तेः। निरूपितत्वसंबन्धातिरिक्तसंबन्धानवच्छिन्नत्वं राजविषयतायां न निवेशार्हम्। स्वत्वप्रकारकबुद्धौ स्वत्वविषयताया निरूपितत्वान्यस्वरूपनिष्ठसांसर्गिकविषयतानिरूपितत्वात्। निरूपितत्वस्वरूपान्यत्वस्यापि विशेषणत्वे स्वत्वांशे स्वरूपेण राजप्रकारकबोधसंग्रहापत्तेः। समानाधिकरणविषयताया अवच्छेद्यावच्छेदकभावपक्षे राजनिष्ठप्रकारतानिरूपितस्वत्वविशेष्यतायाः पुरुषनिष्ठविशेष्यतानिरूपितत्वाभावेन स्वत्वप्रकारकबोधसंग्रहानुपपत्तेः। एवं गुरुप्रतिबन्धकत्वकल्पनातः स्वत्वप्रकारकत्वकल्पनाया एव लघीयस्त्वात्। अप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन प्रतिबन्धकताभेदस्यैवाऽऽवश्यकत्वाच्चेति संक्षेपः।

नुत्पादस्य स्वत्वप्रकारकबोधे एव प्रतिबन्धकताकल्पकत्वात् स्वत्वसंसर्गकबोधस्य प्रतिबन्धकत्वे मानाभावादिति भावः।

वृत्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वपक्षेपि स्वत्वादेः प्रकारतां व्यवस्थापयति। वृत्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वेपीति। अयंभावः। पारिमाण्डल्यान्न घट इत्यादौ जन्यत्वसंबन्धावच्छिन्नप्रतियोगिताकपारिमाण्डल्याभाववान्घट इत्येव बोधः स्वीक्रियते न तु पारिमाण्डल्यनिरूपितजन्यत्वाभाववान्घट इत्याकारकोपि। पारिमाण्डल्यनिरूपितजन्यत्वाप्रसिद्धेः। इत्थं च जन्यत्वस्येव संबन्धान्तरस्यापि प्रतियोगितावच्छेदकत्वं स्वीकार्यम्। वक्ष्यति च वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वे को दोष इति।

पारिमाण्डल्यान्न घट इत्यादौ पारिमाण्डल्यपदस्य पारिमाण्डल्यनिरूपितत्वे लक्षणा, तथा च पारिमाण्डल्यनिरूपितत्वाभाववज्जन्यतावान्घट इति बोधः। तेन वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वेपि न क्षतिः। न च पारिमाण्डल्यान्न गगनमिति प्रतीतेः प्रमात्वानुपपत्तिः, जन्यताया गगनेऽभावादिति वाच्यम्। नञर्थाभावस्य द्विधा भानात्। पारिमाण्डल्यनिरूपितत्वाभाववज्जन्यत्वाभाववद् गगनमिति बोधः। स्पष्टञ्चैतदन्ध आकाशं नपश्यतीत्यग्रे इति विभावनीयम्।

अन्यथा। स्वत्वादेः संसर्गत्वे। तादृशसमभिव्याहारेति। राज्ञः पुरुष इति समभिव्याहारेत्यर्थः। शाब्दसामग्रीकाले। स्वत्वसंबन्धेन राजवान्पुरुष इति शाब्दसामग्रीकाले। तत्र। प्रत्यक्षे तादृशसामग्र्याः। स्वत्वसंबन्धेन राजवान्पुरुष इति शाब्दसामग्र्याः। ननु तादृशगौरवं प्रकारतावादिनां समानमतआह। अस्मन्मते इति। प्रकारतावादिमते इत्यर्थः। तादृशसमभिव्याहारेति। राज्ञः पुरुष इति समभिव्याहारेत्यर्थः। बाधाभावघटिततयेति। बाधाभावो योग्यता तद्ज्ञानघटिततयेत्यर्थः। तत्सत्त्वे। बाधाभावरूपयोग्यताज्ञानघटितसामग्रीसत्वे। कारणविरहादेवेति। धर्मितावच्छेदकप्रकारकनिश्चयरूपप्रत्यक्षकारणविरहादेवेत्यर्थः। तथाविधेति। राजस्वत्वाभावरूपेत्यर्थः। प्रत्यक्षोत्पत्यसंभवेनेति। राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षानुत्पादादित्यर्थः। तादृशसामग्र्या इति। राजनिरूपितस्वत्ववान्पुरुष इति शाब्दसामग्र्या इत्यर्थः। तत्र। प्रत्यक्षे। अकल्पनादिति। कारणाऽभावप्रयुक्त एवोक्तप्रत्यक्षानुत्पाद इति उक्तप्रत्यक्षं

अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः—अन्यत्राऽन्यविधप्रत्यक्षेच्छानामुत्तेजकतया तादृशेच्छायामसत्यां चोपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तयेऽन्यादृशविषयताया एव प्रतिबध्यतावच्छेदकत्वोपगमावश्यकत्वात् ।

---

प्रति प्रतिबन्धकत्वस्याऽकल्पनादित्यर्थः । तथा च एकदा विरुद्धसामग्रीद्वयसमावेशाऽसंभवान्न प्रतिबन्धकताकल्पनावसर इति भावः । संसर्गतावादिमते उक्तप्रत्यक्षस्य भिन्नविषयकत्वेन प्रतिबन्धकताधिक्याद् गौरवं बोध्यम् ।

भिन्नविषयकप्रत्यक्षे शाब्दसामग्र्याः प्रतिबन्धकत्वं चेत्थम् । यत्र प्रत्यक्षसामग्री शाब्दसामग्री वर्तते तत्र समूहालंबनम् एकं ज्ञानं "प्रत्यक्षशाब्दात्मकं" नाभ्युपगन्तुं शक्यम्, प्रत्यक्षत्वशाब्दत्वयोः साङ्कर्यप्रसंगात् । नापि ज्ञानद्वयमेकदा संभवति, यौगपद्यानभ्युपगमात् । अत एकतरसामग्र्याः प्रतिबन्धकत्वं स्वीकृत्यैकतरज्ञानमेव स्वीकार्यम् । तत्र प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे शाब्दमात्रमुच्छिद्येत, योग्यताज्ञानादेर्मानसप्रत्यक्षसामग्रीसत्वादतः शाब्दसामग्र्याः भिन्नविषयकप्रत्यक्षे समानविषयकानुमितौ च प्रतिबन्धकत्वमिति ध्येयम् ।

अथ राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका । तत्र भिन्नविषयकप्रत्यक्षत्वस्याननुगततया लाघवाद् राजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकविषयताशालिप्रत्यक्षत्वं प्रतिबध्यतावच्छेदकम्, तथा च संसर्गतामतेऽपि न प्रतिबन्धकताधिक्यम् । तथा हि । तादृशभेदप्रतियोगितानवच्छेदकविषयताकत्वस्य घटपटादिविषयताशालिप्रत्यक्षे इव राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेऽपि सत्वात्तस्यापि उक्तप्रतिबध्यतावच्छेदकाक्रान्तत्वादित्याशंकां निराकुरुते । अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया चेति । घटपटादिप्रत्यक्षस्थलीयप्रतिबन्धकतया चेत्यर्थः । त्वन्मते । संसर्गतावादिमते । अनिर्वाहे हेतुमाह । अन्यत्रेति । घटप्रत्यक्षे इत्यर्थः । अन्यविधप्रत्यक्षेच्छानाम् । घटप्रत्यक्षं मे जायतामितीच्छानाम् । अन्यादृशविषयताया एवेति । घटादिप्रत्यक्षविषयताया एवेत्यर्थः । एवकारेण राजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकविषयताया व्यावृत्तिः । तथा च घटप्रत्यक्षं प्रति घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्रीप्रतिबन्धिकेति विशेषरूपेणैव प्रतिबध्यप्रतिबन्धकभावो वाच्यः । यदि तु तादृशभेदप्रतियोगितानवच्छेदकविषयतारूपानुगत-

विषयताकप्रत्यक्षं प्रति घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्री प्रतिबन्धिकेत्युच्यते तदाऽनुपपत्तिमाह । तादृशेच्छायामसत्यामिति । घटप्रत्यक्षं जायतामितीच्छायामसत्यामित्यर्थः । उपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तये इति । तथा चोक्तानुगतरूपेण प्रतिबध्यत्वे यत्र राज्ञः पुरुष इति शाब्दसामग्री राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेच्छा तादृशप्रत्यक्षसामग्री च तत्र तादृशप्रत्यक्षत्वस्यापि तादृशभेदप्रतियोगितानवच्छेदकविषयताकत्वरूपप्रतिबध्यतावच्छेदकाक्रान्ततया तादृशप्रत्यक्षानुपपत्तिः, घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्र्याः सत्वात् । अतो घटप्रत्यक्षं प्रत्येव घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्री प्रतिबन्धिका वाच्या । तथाचोक्तप्रत्यक्षानुपपत्तिविरहेऽपि प्रतिबन्धकताधिक्यमिति भावः ।

अयंभावः—राज्ञः पुरुष इति शाब्दसामग्रीसत्वे घटप्रत्यक्षं जायतामितीच्छासत्वे घटप्रत्यक्षसामग्रीसत्वे च घटप्रत्यक्षं जायते न तु शाब्दबोधः, अतः प्रत्यक्षोपपत्तये "तादृशभेदप्रतियोगितानवच्छेदकविषयताकत्वरूपवद्"भिन्नविषयकप्रत्यक्षं प्रति घटप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति शाब्दसामग्र्याः प्रतिबन्धकत्वे घटप्रत्यक्षेच्छासत्वे पटप्रत्यक्षेच्छाविरहेऽपि पटप्रत्यक्षसामग्री सत्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्वे पटप्रत्यक्षापत्तिः, घटप्रत्यक्षेच्छाविरहविशिष्ट राज्ञः पुरुष इति शाब्दसामग्रीरूपप्रतिबन्धकविरहात् । एवं राजस्वत्त्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षसामग्रीसत्वे घटप्रत्यक्षेच्छासत्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्वे राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षापत्तिः । घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्र्या अभावात् ।

न च भिन्नविषयकप्रत्यक्षं प्रति राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति शाब्दसामग्री प्रतिबन्धिका वाच्या । उक्तस्थलद्वये राजस्वत्त्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेच्छाविरहविशिष्ट राज्ञः पुरुष इति शाब्दसामग्र्याः प्रतिबन्धकसद्भावान्नापत्तिरिति वाच्यम् । तथा सति उक्तप्रत्यक्षेच्छायां सत्यां राज्ञः पुरुष इति शाब्दसामग्रीसत्वे घटप्रत्यक्षसामग्रीसत्वे च घटप्रत्यक्षेच्छाविरहेऽपि घटप्रत्यक्षापत्तिः राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति शाब्दसामग्रीविरहात् । अतो घटप्रत्यक्षं प्रति घटप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति शाब्दसामग्रीप्रतिबन्धिका । राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षं प्रति राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेच्छाविरहविशिष्ट राज्ञः पुरुष

इति शाब्दप्रतिबन्धिकेति रीत्याऽननुगत एव प्रतिबध्यप्रतिबन्धकभावो वाच्यः। तथा च संसर्गतावादिमते प्रतिबन्धकताधिक्यं सुदृढम्।[1]

---

१ अथात्र यद्यदिच्छासत्त्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्त्वे राजत्वावच्छिन्न-प्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितान-वच्छेदकविषयताशालिप्रत्यक्षमुत्पद्यते तादृशप्रत्यक्षं प्रति तादृशेच्छानिष्ठतत्तद्व्यक्ति-त्वावच्छिन्नाभावकूटविशिष्टराज्ञः पुरुष इति शाब्दसामग्री प्रतिबन्धिका वाच्या। तथा च राजस्वत्वाभाववान्पुरुषः सुन्दर इति प्रत्यक्षेच्छासत्त्वे तादृशप्रत्यक्ष-सामग्रीसत्त्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्त्वे च न तादृशप्रत्यक्षानुपपत्तिः, तादृशेच्छाविरहविशिष्टशाब्दसामग्रीरूपप्रतिबन्धकाभावात्। तथा च संसर्गतामतेपि न प्रतिबन्धकताधिक्यमिति चेन्न। राज्ञः पुरुष इति शाब्दसामग्रीसत्त्वे घटस्य पटस्य च प्रत्यक्षसामग्रीसत्त्वे घटप्रत्यक्षेच्छायां घटप्रत्यक्षमिव पटप्रत्यक्षापत्तिः। घटप्रत्यक्षानुरोधेन तदिच्छाव्यक्तेरुत्तेजकत्वात्। तदिच्छाविरहकूटविशिष्टशाब्द-सामग्रीरूपप्रतिबन्धकाभावात्। उत्तेजकत्वं च प्रतिबन्धकतावच्छेदकीभूताभाव-प्रतियोगित्वम्। अनुगतरूपेण प्रतिबध्यत्वाऽस्वीकारे तु पटप्रत्यक्षं प्रति पटप्रत्यक्षे-च्छाविरहविशिष्टाया एव राज्ञः पुरुष इति शाब्दसामग्र्याः प्रतिबन्धकत्वा-न्नापत्तिः।

एतेन तादृशभेदप्रतियोगितानवच्छेदकविषयताशालिप्रत्यक्षं प्रति इच्छासामा-न्याभावविशिष्टशाब्दसामग्री प्रतिबन्धिका। इच्छाभावश्च स्वविषयतावच्छेदकधर्मा-वच्छिन्नप्रत्यक्षसामग्रीविशिष्टत्व— स्वविषयतावच्छेदकावच्छिन्नशाब्दसामग्रीविशिष्टत्व संबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्व-स्वसामानाधिकरण्यैतत्त्रित्रयसंबन्धावच्छिन्न-प्रतियोगिताकः। स्वचतुष्टयम् इच्छापरम्।

घटप्रत्यक्षेच्छासत्त्वे घटप्रत्यक्षसामग्रीसत्त्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्त्वे न पटप्रत्यक्षापत्तिः। तत्र राज्ञः पुरुष इति शाब्दसामग्र्याः प्रतिबन्धकत्वात्। तादृशसामग्र्यामिच्छाभावोपि-प्रथमसंबन्धविरहात्। तथा हि स्वपदग्राह्यघट-प्रत्यक्षेच्छाविषयतावच्छेदकीभूतघटप्रत्यक्षत्वावच्छिन्नसामग्रीविरहात्। अत एव प्रथमसंबन्धनिवेशः। राजपुरुषशाब्दान्यज्ञानं जायतामितीच्छासत्त्वे पटप्रत्यक्ष-सामग्रीसत्त्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्त्वे च पटप्रत्यक्षापत्तिवारणाय द्वितीय-संबन्धनिवेशः, इति निरस्तम्। स्वस्वघटितत्वेनाननुगतरूपेण प्रतिबध्यप्रतिबन्धक-भावात्। अथेच्छावदन्यप्रत्यक्षं प्रति राज्ञः पुरुष इति शाब्दसामग्र्याः प्रतिबन्धकत्वं वाच्यम्। इच्छावत्ता च प्रयोज्यत्वसंबन्धेनेति चेत्। तादृशप्रत्यक्षत्वस्य शाब्द-

न च स्वत्वादेःप्रकारतामतेपि स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टपुरुषादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकत्वाधिक्येन गौरवम् । तत्संसर्गतामते तादृशसामग्र्याःस्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वेकारणविरहादेव तथाविधप्रत्यक्षवारणसंभवादिति वाच्यम् । मन्मते तादृशप्रत्यक्षं प्रति तथाविधसामग्र्याःप्रतिबन्धकत्वाधिक्येपि निरूपितत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टस्वत्वादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकत्वाऽकल्पनेन तदंशे साम्यात् । तथा च पूर्वोक्तराजस्वत्वाभाववान्पुरुषःसुन्दरइत्यादिर्विशिष्टवैशिष्ट्यप्रत्यक्षं प्रति राज्ञःपुरुष इत्यादिसामग्र्याःप्रतिबन्धकत्वकल्पनं संसर्गतावादिनां मतेऽधिकमिति ।

---

सामग्र्यभावकार्यतावच्छेदकत्वमपि स्वीकरणीयम् । एवं च प्रयोज्यत्वस्य कार्यतावच्छेदकघटकत्वमात्माश्रयादिदोषदूषितम् ।

ननु इच्छावदन्यत्वमेव प्रतिबध्यतावच्छेदकं वाच्यम्, इच्छावत्ता च स्वसामानाधिकरण्य स्वविषयत्वोभयसं० । तथा च नोक्तदोष इति चेन्न । प्रत्यक्षत्वेन शाब्दावगाहीच्छायां प्रत्यक्षानुत्पादप्रसंगात् । स्वविषयतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्वस्य संसर्गत्वे घटप्रत्यक्षेच्छासत्वे राज्ञः पुरुष इति शाब्दसामग्रीसत्वे घटपटयोः समूहालंबनप्रत्यक्षापत्तिः । न चाऽत्र कल्पे तत्तद्विषयकप्रत्यक्षं प्रति तत्तद्विषयकप्रत्यक्षेच्छायाः कारणत्वे पटप्रत्यक्षेच्छाविरहान्नोक्तसमूहालंबनापत्तिरिति वाच्यम् । ज्ञानं जायतामितीच्छायामपि शाब्दसामग्र्यां प्रत्यक्षोत्पत्तौ तदापत्तेर्वारयितुमशक्यत्वात् । अव्यवहितोत्तरत्वघटकनानिर्णयस्यापि कार्यतावच्छेदककोटौ निवेशास्वीकाराच्च ।

अप्रामाण्यग्रहविशिष्टज्ञानक्षणेऽप्रामाण्यग्रहाभावविशिष्टज्ञानत्वावच्छिन्नाधिकरणत्वविरहेण तादृशज्ञानत्वावच्छिन्नाभावत्वस्य सत्वेपि प्रतिबन्धकत्वेन तादृशज्ञानाधिकरणत्वस्याऽविलक्षणत्वेन तदवच्छिन्नाभावस्य सत्वाऽसंभवात्तद्घटितशाब्दसामग्र्यास्तदानीमसत्वात् । प्रतिबन्धकत्वस्याऽव्याप्यवृत्तित्वाभावेऽप्रामाण्यग्रहकालेपि बाधज्ञाने प्रतिबन्धकत्वसत्वापत्त्यां तदुत्तरक्षणे कार्यप्रतिरोधापत्त्या तस्याऽव्याप्यवृत्तित्वमवश्यं वाच्यम्, तथाचाऽव्याप्यवृत्तिधर्मावच्छिन्नाभावस्तादृशधर्माभावकाले संभवत्येवेति नोक्तदोषः । यदि च कारणीभूताभावप्रतियोगित्वमेव प्रतिबन्धकत्वं प्रतियोगित्वं च व्याप्यवृत्ति, कार्यानुत्पादे प्रतिबन्धकतावच्छेदका-

न च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकं प्रति तादृशसामग्रीप्रतिबन्धकतायां विभक्तिजन्यस्वत्वाद्युपस्थितिनिवेशाधिक्येन राजस्वत्वाभाववान्पुरुष इत्यादिबाधाद्यभावनिवेशाधिक्येन च गौरवम्। अस्मन्मते तादृशोपस्थिति, तथाविधबाधाभावादीनां तथाविधवाक्यजन्यशाब्दबोधं प्रति हेतुतया तादृशवाक्यघटितसामग्रीप्रतिबन्धकतायां तेषामनिवेशादिति वाच्यम्। भवन्मतेऽपि स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्यशाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतयां निवेशनाधिक्येन लाघवानवकाशात्। मन्मते राजस्वत्वाभाववान्पुरुषइत्यादिबाधकाभावनिवेशेनैव तादृशनिश्चयकाले प्रत्यक्षाभ्युपपत्तेस्तदभावानिवेशात्।

---

संसर्गतावादीप्रतिबन्धताधिक्यमाशंकते। न चेति। तथाविधसामग्र्याः। राज्ञः पुरुष इति शाब्दसामग्र्याः। प्रतिबन्धकत्वाधिक्येनेति। प्रकारतावादिमते तादृशप्रत्यक्षस्य भिन्नविषयकत्वादिति भावः। तत्संसर्गतामते। स्वत्वस्य संसर्गतामते। तादृशसामग्र्याः। स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दसामग्र्याः। निश्चयाभावघटिततयेति। बाधनिश्चयाभावघटिततयेत्यर्थः। तत्सत्त्वे। स्वत्वसंसर्गकशाब्दसामग्रीसत्वे इत्यर्थः। कारणविरहादेवेति। विशेष्यतावच्छेदकप्रकारकनिश्चयरूपकारणाभावादेवेत्यर्थः। तथाविधप्रत्यक्षेति। स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान्पुरुषःसुन्दर इति प्रत्यक्षेत्यर्थः। वारणसंभवादिति। तथा च संसर्गतामते न प्रतिबन्धकताधिक्यमिति भावः।

प्रकारतावादी आशङ्कां निराकरोति। मन्मते। इति प्रकारतावादिमते इत्यर्थः। तादृशप्रत्यक्षं प्रति स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान् सुन्दरः पुरुषः इतिप्रत्यक्षं प्रति। तथाविधसामग्र्याः। पुरुष राज्ञः इति शाब्दसामग्र्याः। स्वत्वादिवैशिष्ट्यबोधे। निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववानिति बोधे। तथाविधसामग्र्याः। राज्ञः-पुरुष इति शाब्दसाग्र्याः। तदंशे। संसर्गतावादिनः स्वत्वादिवैशिष्ट्यबोधे

---

वच्छिन्नसत्वमेव प्रयोजकं, कार्योत्पादे च प्रतिबन्धकतावच्छेदकावच्छिन्नाभावस्यैव सत्वमित्युक्तदोषस्य विरहादित्युच्यते तदापि निरुक्तप्रतिबन्धकतावच्छेदकावच्छिन्नाभावत्वेनाभावानां प्रवेशे न दोषः।

यत्तु राज्ञःपुरुष इत्यादौ राजस्वत्ववान्पुरुषइत्याद्यन्वयबोधोपगमे राजकीयं स्वत्वम्, राजस्वत्ववान्पुरुष इत्याकारकद्विविधानुमितेरेव तदतिरिक्ताऽविषयकत्वेन तादृशानुमिति प्रति प्रत्येकं तादृशवाक्य-घटितसामग्र्याः प्रतिबन्धकताद्वयम्। अस्मन्मते च तादृशानुमित्यो-स्तथाविधवाक्यजन्याद्राजकीयः पुरुषइत्येतादृशबोधादतिरिक्तविषय-कत्वेन तत्र तादृशसामग्र्याः प्रतिबन्धकताकल्पनं नास्ति, तथाविधा-नुमिति-तथाविधशाब्दसामग्र्योश्च सत्योरनुमितेरेवोत्पत्तेः, अपि तु राजकीयः पुरुष इत्याकारकस्वत्वसंसर्गकैकविधानुमितिं प्रत्येव तादृशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमितिलाघवमिति। तदप्य-किञ्चित्करम्।

भवन्मते यत्र यादृशानुमितिः स्वीक्रियते अस्मन्मतेपि तत्र तादृशा-नुमितेः स्वीकरणीयतयाऽनुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्व-साम्यात्, उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियते अस्माभिरपि स्वीक्रियते कुतः प्रतिबन्धकताद्वयकल्पनमिति भवतापि तादृशशाब्दं प्रति तादृशानुमितिद्वयसामग्रीद्वयस्य प्रतिबन्धकताया वाच्यतया साम्याच्च।

---

प्रतिबन्धकत्वकल्पने। साम्यादिति। यथा प्रकारतावादिमते स्वत्वसंबन्धेन-राजाभाववान्पुरुषःसुन्दर इति प्रत्यक्षे राज्ञः पुरुषइति शाब्दसामग्र्याः प्रति-बन्धकत्वम्। तथा संसर्गतावादिमते निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताक-राजाभाववत्स्वत्ववानितिप्रत्यक्षे राज्ञः पुरुष इति शाब्दसामग्र्याः प्रतिबन्ध-कत्वमित्युभयोः साम्यादिति भावः। अत्र राजस्वत्वाभाववान्पुरुषः सुन्दर ति प्रत्यक्षं प्रतिबन्धकत्वाधिक्यं संसर्गतावादिमते। तदेवाह। तथा चेति। साम्ये चेत्यर्थः।

संसर्गतावादी पुन आक्षिपति। न चेति। तादृशसामग्रीप्रतिबन्धकतायां राज्ञःपुरुष इति शाब्दसामग्रीनिष्ठप्रतिबन्धकतायां। स्वत्वाद्युपस्थितीति। आदिना निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वरूपबाधा भावपरिग्रहः। बाधाद्यभावेति। आदिना राजस्वत्वाभावव्याप्यस्वत्व-संबन्धावच्छिन्नप्रतियोगिताकराजाभाववान्पुरुष इत्यादि निश्चयाभावपरिग्रहः। स्वमते लाघवं दर्शयति। अस्मन्मते इति। संसर्गतावादिमते इत्यर्थः। तादृशोपस्थितीति। विभक्तिजन्यस्वत्वोपस्थितीत्यर्थः। तथाविधेति। राज-

एवं राजपुरुष इत्यादिसमासवाक्यात्स्वत्वसंसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः स्वत्वसंसर्गेण राजविशिष्टपुरुषतात्पर्यज्ञानादिघटिताया भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वाधिक्येन गौरवात्। तत्र राजसंबन्धिप्रकारकाऽभेदान्वयबोधस्वीकार एवोचितः।

न च भवन्मतेपि तादृशाऽभेदान्वयबोधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवमिति वाच्यम्। राजसंबन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसंबन्धेन राजविशिष्टपुरुषे तात्पर्यग्रहसत्वे भवन्मतेपि कर्मधारयत्वेनाभिमतात्तथाविधसमासवाक्यात्तादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकताया उभयमतसिद्धत्वात्।

---

स्वत्वाभाववान्पुरुष इत्याकारकेत्यर्थः। तथाविधवाक्यजन्येति। राज्ञः पुरुष इति वाक्यजन्येत्यर्थः। सामग्रीप्रतिबन्धकतायामिति। सामग्रीनिष्ठप्रतिबन्धकतायामित्यर्थः। तेषां। तादृशोपस्थिति-तथाविधबाधाभावादीनां। अनिवेशादिति। कारणकूटस्यैव सामग्रीत्वादिति भावः।

प्रकारतावादी आक्षेपं समाधत्ते। भवन्मतेपीति। संसर्गतावादिमतेपीति। तादृशवाक्यजन्येति। तादृशनिश्चयाभावस्य। स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इति निश्चयाभावस्य। तथाविधसामग्रीप्रतिबन्धकतायां। राज्ञः पुरुष इति शाब्दसामग्रीनिष्ठप्रतिबन्धकतायाम्। गौरवमिति[1]।

---

१ अथ प्रमेयत्ववान्राजाभाववान्प्रमेयत्ववान्पुरुषः इत्यादिनिश्चयाभावानामवश्यं निवेशनीयतया तेषामनुगतरूपेणैव प्रवेशः कार्यः, एवं च राजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इति निश्चयाभावस्य पृथङ्निवेशे प्रयोजनाभावः। तस्यापि राजस्वत्वाभाववान्राजाभाववान् राजस्वत्वाभाववान्पुरुष इति निश्चयाभावरूपत्वात्। निश्चयविशिष्टनिश्चयाभावः सामग्रीप्रतिबन्धकतायां निवेशनीयः। वै० स्वसामानाधिकरण्य, स्वीयराजाभावत्वावच्छिन्नप्रकारतावृत्तिविशेष्यतावच्छेदकताविशिष्टप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकत्वोभयसं०। विशेष्यतायां प्रकारतावृत्तित्वं च स्वावच्छेदकधर्मव्यापकराजाभावप्रतियोगिकत्वविशिष्टस्वरूपत्वावच्छिन्नसंसर्गतानिरूपितत्व-स्वनिरूपितत्वोभयसंबन्धेन। प्रकारतायां विशेष्यतावच्छेदकतावै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसं०, इति चेन्न। अनुमितिजननयोग्यव्याप्यवत्तानिश्चयस्यैव प्रतिबन्धकतायाः स्वीकृतत्वेन

प्रकारतावादिमते उक्तनिश्चयसत्वे प्रत्यक्षमेवोत्पत्पद्यते न शाब्दबोधः। बाधाभावरूपशाब्दसामग्र्यभावात्, उक्तनिश्चयाऽसत्वे विशेष्यतावाच्छेदकनिश्चयरूपकारणविरहादेव न प्रत्यक्षोत्पादसंभवः, इति न प्रतिबध्यप्रतिबन्धकभावकल्पनापत्तिरित्याह। मन्मते। प्रकारतावादिमते इत्यर्थः। निवेशेनैवेति। राज्ञःपुरुष इतिवाक्यजन्यशाब्दसामग्र्यामित्यादिः। एवकारेण व्याप्यवत्तानिश्चयमुद्रयोक्तनिश्चययोर्व्यावृत्तिः। तादृशनिश्चयकाले। स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इति निश्चयकाले। प्रत्यक्षाभ्युपपत्तेरिति। स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान्पुरुष इतिप्रत्यक्षस्वीकारादित्यर्थः। तदभावाऽनिवेशादिति। शाब्दसामग्रीनिष्ठ-

प्रमेयत्वव्यापकराजाभावसमानाधिकरणवाचत्स्ववत्तानिश्चयस्य घटकालीनप्रमेयत्वव्यापकराजाभावसमानाधिकरणघटकालीनप्रमेयत्ववत्तानिश्चयस्य चानुमितिजननायोग्यतयाऽप्रतिबन्धकत्वेन तत्सत्वेपि शाब्दसामग्र्या इष्टत्वेनोक्तरूपेणाऽभावप्रवेशे तदनुपपत्तेः।

इदन्तुबोध्यम्, अप्रामाण्यज्ञानाभावस्यानुगतरूपेण निवेशःसंभवति तथाहिनिश्चये अभावविशिष्टान्यत्वं निवेशनीयम्। वै० स्वाभाववत्व-स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयितावत्वोभयसं०। स्वाभाववत्ता च स्वरूपविशेष्यत्वान्यतरसंबन्धेन। अत्राभावपदेनाऽऽहार्यत्वाभाव-अप्रामाण्यज्ञानाभाव- संशयत्वाभावानामुपादानम्। तत्तद्व्यक्तित्वेनाऽप्रामाण्यज्ञानानामभावस्य प्रतिबन्धकतावच्छेदकोटौ प्रवेशे वाऽनुगतैकधर्मस्य संभव इति न संसर्गतामतखण्डनं साधीयः, जगदीशप्रभृतिभिश्च संसर्गतामतमेवानुमोदितमपि, परन्तूक्तकूटत्वस्याऽसर्वज्ञाऽज्ञेयत्वमनुचिन्त्य भट्टाचार्येण प्रकारतामतमेव स्वीकृतम्।

तथा च संसर्गतावादिमते राजस्वत्वाभाववान्पुरुषः सुन्दरः, एवं निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववानिति प्रत्यक्षद्वये शाब्दसामग्र्याः प्रतिबन्धकत्वम्, तयोर्भिन्नविषयकत्वात्। प्रकारतावादिमते प्रतिबन्धकताद्वयं न कल्पनीयम्, तयोःप्रत्यक्षयोर्बाधरूपतया बाधाभावस्य शाब्दसामग्रीघटकत्वेन विशेष्यतावच्छेदकप्रकारकनिश्चयाभावादेव प्रत्यक्षानुत्पत्तेः।

एवं संसर्गतावादिमते स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यनिरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववत्पुरुषनिश्चयस्य तादृशराजाभावव्याप्यराजस्वत्वाभाववत्पुरुषनिश्चयस्य च तदभावव्याप्यवत्तामुद्रया शाब्दधीप्रतिबन्धकतया तत्सामग्र्यां तयोरभावोपि निवेश्यः।

प्रतिबन्धकतायां राजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इति बाधस्याभावाऽनिवेशात्प्रकारतावादिमते लाघवं बोध्यम्[1] ।

---

१ अथ राजाभावव्याप्यराजस्वत्वाभाववन्पुरुष इति निश्चयाभावानिवेशेपि "नचस्वत्वादेःप्रकारतामते घटप्रत्यक्षादिकं प्रति" इत्यादिनाऽनुपदं प्रदर्शितस्य राजस्वत्वाभाववान्पुरुषः—निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्व-मिति बाधनिश्चयाभावद्वयस्य, एवं राजस्वत्वाभावव्याप्य स्वत्वसंबन्धावच्छिन्नप्रति-योगिताकराजाभाववान्पुरुषः—निरूपितस्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्या-प्यवत्स्वत्वमितिबाधव्याप्यवत्तानिश्चयद्वयस्य एवं विभक्तिजन्यस्वत्वाद्युपस्थितेरपि राज्ञःपुरुष इति शाब्दसामग्रीनिष्ठप्रतिबन्धकतायाम् निवेशनीयतया गौरवम्, संसर्गता-वादिमते तु स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान्पुरुषइत्येकविधबाधनि-श्चयाभावस्य, एवं स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वा भाववान्पुरुष इत्येकविधबाधव्याप्यवत्तानिश्चयाभावस्यैव निवेशनीयतया लाघवमिति-चेदत्र मान्याः । १ राजस्वत्वाभाववान्पुरुषः । २ राजस्वत्वव्यापकाभाववान्पुरुषः । ३ राजस्वत्वाभावव्याप्यवान्पुरुषः । ४ स्वत्वाभाववान्पुरुषः । ५ स्वत्वव्यापका-भाववान्पुरुषः । ६ स्वत्वाभावव्याप्यवान् पुरुषः । ७ निरूपितत्वसंबन्धावच्छिन्न-प्रतियोगिताकराजाभाववत्स्वत्वम् । ८ राजव्यापकाभाववत्स्वत्वम् । ९ तादृश-राजाभावव्याप्यवत्स्वत्वमितिप्रकारतावादिमते नवविधो बाधः । शाब्दसामग्र्यां नवविधबाधनिश्चयाभावा निवेशनीयाः । संसर्गतावादिमते च १ स्वत्वसंबन्धा-वच्छिन्नप्रतियोगिताकराजाभाववान्पुरुषः । २ राजव्यापकाभाववान्पुरुषः । ३ तादृशराजाभावव्याप्यवान्पुरुषः । इतित्रिविधो बाधः । एवमुक्तनवविधबाधव्याप्यसंस-र्गतावादिमतसिद्धैकैकबाधविषयकनिश्चयो बोध्यः । यथा राजस्वत्वाभावव्याप्यराजा-भाववान्पुरुषः । राजस्वत्वाभावव्याप्यराजव्यापकाभाववान्पुरुषः । राजस्वत्वाभाव-व्याप्यराजाभावव्याप्यवान्पुरुषः । एवमवशिष्टाष्टौबाधनिश्चया अपि । इति रीत्या सप्तविंशति (२७) संख्याका अभावाः प्रवेशनीयाः । एव संसर्गतावादिमतसिद्धेषु त्रिषु बाधेषु विनिगमनाविरहेण परस्परविशेष्यविशेषणभावे एकत्रबाधविशिष्टाऽपरबाधे प्रकारतावादिमतसिद्धनवबाधेषु मध्ये एकैकबाधव्याप्यत्वविषयकनिश्चयाः चतुः पञ्चा-शत्संख्याकाः ते यथा १ राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजव्यापकाभाववा-न्पुरुषः । [९] २ राजस्वत्वाभावव्याप्यराजव्यापकाभावविशिष्टराजाभाववान्पुरुषः । [९] ३ राजस्वत्वाभावव्याप्यराजव्यापकाभावविशिष्टराजाभावव्याप्यवान्पुरुषः । [९] ४ राजस्वत्वाभावव्याप्यराजाभावव्याप्यविशिष्टराजव्यापकाभाववान्पुरुषः । [९] ५ राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजाभावव्याप्यवान्पुरुषः ।

पुनरपि संसर्गतावादिदोषमुद्भावयति यत्त्विति । तदतिरिक्ताविषयकत्वेनेति । राजस्वत्ववान्पुरुष इति शाब्दबोधविषयातिरिक्ताऽविषयकत्वेनेत्यर्थः[1] ।

---

[६] राजस्वत्वाभावव्याप्यराजाभावव्याप्यविशिष्टराजाभाववान्पुरुषः । [६] इति । तेषामभावा अपि चतुः पञ्चाशत्संख्याकाः शाब्दसामग्र्यां निवेशनीयाः । एवं संसर्गतावादिमतसिद्धेषु त्रिषु बाधेषु विनिगमनाविरहेण परस्परविशेष्यविशेषणभावे एकबाधविशिष्टापरबाधविशिष्टापरबाधे प्रकारतावादिमतसिद्धनवबाधेषु मध्ये एकैकबाधव्याप्यत्वविषयकनिश्चयाश्चतुःपञ्चाशत्संख्याकाः । यथा १ राजस्वत्वाभावव्याप्य राजाभावविशिष्टराजव्यापकाभावविशिष्टराजस्वत्वाभावव्याप्यवान्पुरुषः । [६] २ राजस्वत्वाभावव्याप्य राजस्वत्वाभावव्याप्यविशिष्टराजव्यापकाभावविशिष्टराजाभाववान्पुरुषः । [६] ३ राजस्वत्वाभावव्याप्य राजव्यापकाभावविशिष्ट राजाभावविशिष्टराजस्वत्वाभावव्याप्यवान्पुरुषः । (६) ४ राजस्वत्वाभावव्याप्य राजस्वत्वाभावव्याप्य विशिष्टराजाभावविशिष्टराजव्यापकाभाववान्पुरुषः । (६) ५ राजस्वत्वाभावव्याप्यराजस्वत्वाभावव्याप्यविशिष्टराजाभावविशिष्ट राजव्यापकाभाववान्पुरुषः । (६) ६ राजस्वत्वाभावव्याप्य, राजव्यापकाभावविशिष्ट राजाभावविशिष्टराजस्वत्वाभावव्याप्यवान्पुरुषः । (६) इति । तेषामभावाअपि चतुः पञ्चाशत्संख्याकाः शाब्दसामग्र्यां राज्ञःपुरुषइतिवाक्यघटितायां निवेशनीयाः । सर्वेषामेव संकलने च प्रकारतावादिमते (१४४)चतुश्चत्वारिंशदधिकशतसंख्याकानामभावानां शाब्दसामग्रीकोटौ प्रवेशः पर्यवस्यति ।

संसर्गतावादिमते तु स्वमतसिद्धबाधत्रयान्तर्गतैकैकबाधव्याप्यत्वं प्रकारतावादिमतसिद्धेषु नवबाधेषु मध्ये एकैकबाधेऽवगाहमानाःसप्तविंशतिनिश्चयाः—यथा राजाभावव्याप्यराजस्वत्वाभाववान्पुरुषः । राजव्यापकाभावव्याप्यराजस्वत्वाभाववान्पुरुषः । राजवदवृत्तिव्याप्यराजस्वत्वाभाववान्पुरुषः । एवमष्टसु बाधेषु संसर्गतामतसिद्धबाधव्याप्यत्वं बोध्यम् ।

परन्तु एवंप्रकारेण प्रकारतावादिमतसिद्धेषु नवसु बाधेषु मध्ये द्वयोस्त्रयाणां चतुर्णां पञ्चानां षण्णां सप्तानामष्टानां नवानां विशेष्यविशेषणभावे विनिगमनाविरहादनन्तबाधेषु संसर्गतामतसिद्धबाधत्रयव्याप्यत्वावगाहिनिश्चयानामभावाः प्रवेशनीया इति महागौरवमिति । एवं प्रकारतावाद्युद्भावितराजस्वत्वाभाववान्पुरुषःसुन्दर इत्यादिभिन्नविषयकप्रत्यक्षे एव प्रतिबन्धकतागौरवं सुदृढं संसर्गतावादिमते ।

१ तदतिरिक्ताविषयकत्वं च तद्विषयताविशिष्टान्यविषयताशून्यत्वम् । वै० स्वसामानाधिकरण्य—स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसं० । पर्वतोवन्हिमान्—घट-

तादृशानुमितिं प्रतीति। तादृशानुमितिद्वयं प्रतीत्यर्थः। **प्रतिबन्धकत्वद्वयमिति** प्रतिबध्यताभेदादिति भावः। **अस्मन्मते।** संसर्गतावादिमते। **तत्र।** अनुमितौ। **नास्तीति।** समानविषयकानुमितिं प्रत्येव शाब्दसामग्र्याः प्रतिबन्धकत्वादिति भावः। **अनुमितेरेवोत्पत्तेरिति।** भिन्नविषयकत्वादिति भावः। एवकारेण शाब्दस्य व्यावृत्तिः। भिन्नविषयकशाब्दं प्रति अनुमितिसामग्र्या बलवत्वादिति यावत्। राजकीयःपुरुष इत्याकारकेति। पुरुषः स्वत्वसंबन्धेन राजवानित्याकारकेत्यर्थः। **अनुमितिंप्रत्येवेति।** एवकारेणोक्तानुमितिद्वयस्य व्यावृत्तिः। तयोरसमानविषयत्वादिति भावः। **प्रतिबन्धकत्वं कल्पनीयमिति।** तस्याः समानविषयकत्वादिति भावः। उद्भावितदोषं निरस्यति। **भवन्मते इति।** संसर्गतावादिमते इत्यर्थः। **अस्मन्मते।** प्रकारतावादिमते। **स्वीकरणीयतयेति।** तथाचोभयमते प्रतिबध्यप्रतिबन्धकभावः समान एवेत्यर्थः उपदर्शितस्थले। स्वत्वं राजकीयं-स्वत्ववान्पुरुष इति स्थले। **भवद्भिः।** संसर्गतावादिभिः। **अस्माभिः।** प्रकारतावादिभिः। **न स्वीक्रियतेइति।** ननु प्रकारतावादिनामुक्तानुमितिद्वयस्वीकारो न संभवति, समानविषयकशाब्दसामग्र्याः प्रतिबन्धकत्वादिति चेन्न। इच्छायाउत्तेजकत्वानुरोधने विशिष्यैव प्रतिबध्यप्रतिबन्धकभावः फलबलेन कल्पनीयः। एवञ्चोक्तानुमितिद्वयस्य प्रामाणिकत्वेन तत्रोक्तशाब्दसामग्र्याः प्रतिबन्धकत्वं भवद्भिरिवाऽस्माभिरपि न स्वीक्रियते इति भावः।

---

वह्नौ तन्मात्रज्ञानयोरनतिरिक्तविषयकत्ववारणायाऽऽद्यः संबन्धः। पर्वतोवह्निमान्-पर्वतवान्वह्निरितिज्ञानयोरनतिरिक्तविषयकत्ववारणाय द्वितीयसंबन्धः। स्वानवच्छेदकसंबन्धानवच्छिन्नत्वरूपः। नचैवमपि पर्वतोवह्निमान् महानसं धूमवदितिसमूहालंबनज्ञानस्याऽनतिरिक्तविषयकत्वं पर्वतोधूमवान् महानसं वह्निमदितिसमूहालंबनेस्यादिति वाच्यम्। तद्विशेष्यतावदन्यप्रकारताशून्यत्वस्य विवक्षितत्वात्। विशेष्यतावत्ता च स्वावच्छेदकावच्छिन्नविशेष्यतावन्निरूपितत्व-स्वनिरूपितप्रकारतावत्त्वोभयसं०। प्रकारतावत्ता च स्वाच्छेदकावच्छिन्नत्व-स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसं०। पर्वतोवह्निमान् द्रव्यं वह्निमदिति ज्ञानयोरनतिरिक्तविषयकत्ववारणायाऽऽद्यसंबन्धः। पर्वतःसंयोगेन घटवान् पर्वतोवह्निमानितिज्ञानयोस्तद्वारणाय द्वितीयसंबन्धः। तत्रापि प्रथमसंबन्धानिवेशे उक्तदोषतादवस्थ्यम्। पर्वतः संयोगेन वह्निमान् पर्वतः समवायेन वह्निमानितिज्ञानयोस्तद्वारणाय द्वितीयसंबन्धनिवेशः। प्रकारतावत्ता च सामानाधिकरण्यसंबन्धेनापि विशेषणीया। तेन वह्नित्वेन वह्न्यवगाहि-वह्नित्वेन घटावगाहिज्ञानयोस्तद्वारणम्। पर्याप्तिनिवेशः स्वयमूहनीयः।

समाधानान्तरमप्याह । भवतापीति । संसर्गतावादिनापीत्यर्थः । तादृशशाब्दं प्रति । स्वत्वसंसर्गकराजप्रकारकशाब्दबोधं प्रति । वाच्यतयेति । भिन्नविषयकशाब्दं प्रति अनुमितिसामग्र्या बलवत्वादिति भावः । साम्याच्चेति । संसर्गतावादिना प्रतिबन्धकताद्वयकल्पने प्रकारतावादिना प्रतिबध्यताद्वयकल्पने साम्यादिति भावः ।

"एवं च राजपुरुष इत्यादिसमासे राजादिपदस्य राजसंबन्ध्यादिलक्षणास्वीकारोपि व्यर्थः, तत्रभेदाऽन्वयस्वीकारेपि क्षतिविरहादि" त्युक्तं दूषयति । एवमिति । तादृशेति । स्वत्वसंसर्गकराजप्रकारकेत्यर्थः । तत्र । राजपुरुषइत्यादौ । स्वीकार एवेति । एवकारेण स्वत्वसंसर्गकराजप्रकारकशाब्दबोधव्यावृत्तिः । प्रकारतावादिमतेपि प्रतिबन्धकत्वं तुल्यमित्याशंकते । नचेति । भवन्मतेपि । प्रकारतावादिमतेपि भिन्नविषयकप्रत्यक्षे शाब्दसामग्र्याःप्रतिबन्धकत्वेनेतिशेषः । तादृशेति । राजसंबन्धिप्रकारकेत्यर्थः । भवन्मतेपि । संसर्गतावादिमतेपि । तथाविधसमासवाक्यादिति । राजपुरुष इति समासवाक्यादित्यर्थः । तादृशेति । राजसंबन्ध्यभिन्नः पुरुष इत्याकारकेत्यर्थः । तादृशसामग्रीप्रतिबन्धकतायाः । अभेदान्वयबोधसामग्रीप्रतिबन्धकतायाः । उभयमतसिद्धत्वादिति । तथा च स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दबोधसामग्र्याः प्रतिबन्धकत्वं संसर्गतावादिनामधिकमिति भावः । राजपुरुष इत्यत्र लुप्तषष्ठीविभक्तिस्मरणेन स्वत्वोपस्थितौ स्वत्वस्य स्वरूपेण पुरुषेऽन्वयाद्राजस्वत्ववान्पुरुष इति भेदान्वयबोधोपगमे न "निपातातिरिक्तनामार्थयोर्भेदेन नान्वय इति नियमविरोधः । प्रत्ययार्थमन्तराकृत्य तयोरन्वयबोधात् । एवं समासविग्रहवाक्ययोस्तुल्यार्थकत्वमप्युपपद्यते । तथा च राजसंबन्धिनि लक्षणा न युक्तेत्याशङ्क्य निराकरोति । यत्त्विति । लुप्तद्वितीयाविभक्तिस्मरणेनेति । प्रकारतावादिमतेपि दधिपदोत्तरलुप्तद्वितीयाविभक्तेः स्मरणमावश्यकम् । अन्यथा दधिपदार्थस्य धात्वर्थदर्शने साक्षादन्वयानुपपत्तेः ।

ननु राजपुरुष इत्यत्र लुप्तषष्ठीविभक्तेरनुसन्धाने ऋद्धस्य राजमातङ्गा इति प्रयोगापत्तिरित्याशंकते । नचेति । लुप्तविभक्तिस्मरणे एवेति एवकारेण राजसंबन्धिनि लक्षणाव्यावृत्तिः । तदा । लुप्तषष्ठीविभक्तिस्मरणात् । ऋद्धराज्ञोरभेदान्वयबोधतात्पर्येणेति शेषः । प्रयोगापत्तिरिति । ऋद्धस्य राज्ञो मातङ्गा इतिवदिति भावः । न च राज्ञे ऋद्धसमानविभक्तिकत्वाभावान्न प्रयोगापत्तिरित्यत आह । तत्रेति । ऋद्धस्य राजमातङ्गा इत्यत्रेत्यर्थः ।

अभेदान्वयबोधानुपपत्त्या ऋद्धस्य राजमातङ्गा इति प्रयोगो न भवतीति

यत्तु दधिपश्येत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शन-बोधवत् राजपुरुष इत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राजसंबन्ध-प्रकारकभेदान्वयबोधनिर्वाहे राजसंबन्धिनि निरूढलक्षणां स्वीकृत्याऽ-भेदान्वयबोधोपगमो निरर्थकः। न च षष्ठीतत्पुरुषादिस्थलेपि लुप्त-विभक्तिस्मरणे एव चेदन्वयबोधः तदा ऋद्धस्य राजमातङ्गा इत्यादि-प्रयोगापत्तिः. तत्र मातङ्गादौ राजादीनामन्वयबोधोपपत्तये राजादि-पदोत्तरषष्ठ्यादिविभक्त्यनुसन्धानस्यावश्यकत्वेन समानविभक्तिकतया राजादौ ऋद्धादिपदार्थस्याऽभेदान्वयबोधसंभवादिति वाच्यम्। यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभियुक्तानामप्रयोगः, अपि तु समासाऽघटकपदसापेक्षतया राजपदस्याऽसामर्थ्यातिदेशात् समासाऽ-साधुत्वेन। तत्सापेक्षत्वं च तदर्थान्वितस्वार्थपरत्वम्। स्वार्थश्चस्वीय-वृत्तिग्रहविशेष्यः। अतएव शरैः शातितपत्रकः चैत्रस्य दासभार्या इत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता तदर्थैकदेशशातन-दासत्वादावेव शरकरणकत्व, चैत्रनिरूपितत्वादीनामन्वयात्। तदर्था-न्वितेत्यत्राऽभेदान्वयो वा निवेशनीय इति।

---

न युक्तम्, किन्तु ऋद्धपदार्थराजपदार्थयोरन्वये राजपदार्थमातङ्गपदार्थयोः समासवृत्तिर्न स्यात्। "सविशेषणानां, वृत्तिर्न वृत्तस्य विशेषणयोगोनेति नियमात्। अस्यार्थः-सविशेषणानां विशेषणसहितानां विशेष्याणां वृत्तिर्न। यथा प्रकृते ऋद्धविशेषणयुक्तराज्ञो मातङ्गेन सह वृत्तिर्न स्यात्। वृत्तस्यच-विशेषणस्य चाविषणयेन योगोनेति। विशेषणस्य चेति सावधारणम् विशेषणस्यैवेत्यर्थः। तेन सुन्दरा राजमातङ्गा इत्यत्र सुन्दरविशेषणस्य राजमातङ्गे विशेष्येऽन्वयः। तथा च ऋद्धविशेषणयुक्तस्य राज्ञो विशेषणस्य समासरूपा वृत्तिर्न, एवं वृत्तस्य समस्तस्य राज्ञो विशेषणेन योगोपि नेति तदर्थः। असामर्थ्यातिदेशादिति। सापेक्षमसम-र्थवद्भवतीत्यतिदेशादित्यर्थः। तथा च समासाऽघटकपदसापेक्षत्वमसामर्थ्यम्। अतएवेति। तदर्थान्वितस्वार्थपरत्वमित्यस्य तदर्थान्वितस्वीयवृत्तिग्रहमुख्य-विशेष्यत्वपरत्वादेवेत्यर्थः। अभेदान्वयोवेति। तथाचाऽभेदेन तदर्थान्वित-स्वार्थकत्वमित्यर्थो बोध्यः। एवंचाऽभेदेन तदर्थान्वितस्वीयवृत्त्युपस्थाप्यत्वमेव विवक्षणीयम्। न तु स्वीयवृत्तिग्रहमुख्यविशेष्यत्वम्, प्रयोजनाभावादिति ध्येयम्। तथा च ऋद्धस्य राजमातङ्गा इति प्रयोगापत्तिवारणाद्राजसंबन्धिनि लक्षणा न युक्तेति भावः। निराकरोति। तदसदिति। तादृशसमभिव्याहारेति। राजपुरुष इति समभिव्याहारेत्यर्थः। तथाविधेति। राजसंबन्ध्यभिन्नःपुरुषइत्या-

तदसत्। स्वारसिकलक्षणाग्रहस्थलानुरोधेन तादृशसमभिव्याहारज्ञानादेस्तथाविधबोधजनकतायाः क्लृप्तत्वात्तत्र निरूढलक्षणास्वीकारे गौरवविरहात्। यत्र राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्योभयमतसिद्धतया तादृशसमभिव्याहारज्ञानस्य राजसंबन्ध्यभिन्नपुरुषबोधे कारणतायाः क्लृप्तत्वात्, तयैव निर्वाहेण सर्वत्र लुप्तविभक्तिस्मरणकल्पने मानाभावात्। न च स्वारसिकलक्षणाग्रहस्थले तत्र तादृशान्वयबोधस्योभयवादिसिद्धत्वेपि निरूढलक्षणामते संबन्धितात्पर्यस्याऽनादित्वकल्पनागौरवम्, अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति वाच्यम्। राजपुरुषइत्यादिवाक्यजन्यशाब्दबोधात्पूर्वं नियमतो लुप्तविभक्तिस्मरणकल्पनापेक्षया तात्पर्यस्याऽनादित्वकल्पनायां गौरवविरहादिति।

न चैवं दधिपश्यतीत्यादावपि दध्यादिपदस्य दधिकर्मकादौ लक्षणां स्वीकृत्य धात्वर्थेन समं तस्याऽभेदान्वयोपपादनसंभवात्तत्रापि लुप्तविभक्तिस्मरणकल्पनमनुचितमितिवाच्यम्। दध्यादिपदस्य दधिकर्मकादौ लक्षणाग्रहदशायामपि तस्य द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायां दधिकर्मकः पश्यति दधिकर्मकेण पश्यतीत्यादाविव उक्तस्थलेपि दधिकर्मकदर्शनान्वयबोधानुदयात्। भवन्मते दधिकर्मकः पश्यतीत्यत्र दधिपश्यतिस्थलीयदधिपदोत्तरपश्यतिपदस्वरूपाऽऽकाङ्क्षाज्ञानादिघटितसामग्रीसत्त्वाद्दधिकर्मकदर्शनान्वयबोधस्यापत्तेर्द्वितीयान्तदध्यादिपदत्वावच्छिन्नधर्मिकतादृशधात्वादिसमभिहारज्ञानस्य तादृशान्वयबोधे हेतुताया आवश्यकत्वात्।

---

कारकेत्यर्थः। तत्र। राजपुरुष इत्यादौ। तादृशबोधस्य। राजसंबन्ध्यभिन्नः पुरुष इति बोधस्य। उभयमतसिद्धतयेति। विभक्त्यनुसन्धानेन भेदान्वयाभ्युपगन्तुरभेदान्वयाभ्युपगन्तुश्चोभयमतसिद्धतयेत्यर्थः, न तु संसर्गतावादिप्रकारतावाद्युभयमतसिद्धतयेत्यर्थः। संसर्गतावादिना विभक्त्यश्रवणस्थलेपि विभक्त्यर्थप्रकारकबोधानभ्युपगमेन यत्त्वित्यादिग्रन्थस्य तन्मतानवलंबित्वात्। तादृशेति। राजपुरुष इत्यर्थः। तयैव। लक्षणयैव। सर्वत्रेति। राजपुरुषइत्यादौ। तत्र। राजपुरुषइत्यत्र। तादृशबोधस्य। राजसबन्ध्यभिन्नः पुरुष इत्यन्वयबोधस्य। उभयवादिसिद्धत्वेपीति। विभक्त्यनुसन्धानेन भेदान्वयवादिनोऽभेदान्वयवादिनश्चेष्टत्वेपीत्यर्थः। गौरवविरहादिति। तात्पर्यस्याऽनादित्वकल्पनेऽपि अनादित्वज्ञानस्याऽकारणत्वादिति भावः।

दधिपश्यतीत्यादौ लुप्तद्वितीयानुसन्धानस्यावश्यकत्वात्। राजसंबन्धिपुरुषाद्यन्वयबोधे च राजपदाऽव्यवहितोत्तरपुरुषपदत्वप्रकारकज्ञानस्य हेतुतायाः स्वारसिकलक्षणाग्रहस्थलानुरोधेनावश्यकल्पनीयतया राजपुरुषइत्यादौ राजादिपदस्य तृतीयाद्यन्तत्वभ्रमदशायां राजसंबन्धिपुरुषाद्यन्वयबोधापत्त्यसंभवात्, तृतीयादिविभक्त्या व्यवधानात्। दधिपश्यतीत्यादौ दधिपदाव्यवहितोत्तरत्वप्रकारकधातुपदज्ञानस्य हेतुताया अक्लृप्तत्वात्। पश्यति दधि, पश्यतिचैत्रोदधि इत्यादावपि दधिकर्मकदर्शनान्वयबोधात्ताहशज्ञानहेतुताया अशक्यकल्पनीयत्वाच्चेति।

तण्डुलं पचतीत्यादौ तण्डुलादिपदस्यैव तण्डुलादिकर्मके लक्षणा, विभक्तिस्तु साधुत्वार्था। एवं राज्ञः पुरुष इत्यादावपि राजपदस्य राजसंबन्ध्यादौ लक्षणा, विभक्तिः साधुत्वार्था। तत्तद्विभक्त्यन्तसमभिव्याहारस्य तत्तल्लाक्षणिकार्थबोधनियामकत्वान्नातिप्रसंगः। विभक्तेरेव प्रकृत्यर्थविशेषितस्वार्थे लक्षणेति तु न संभवति, विभक्तेः कुत्रापि शक्तेरक्लृप्ततया तत्र शक्यसंबन्धरूपलक्षणाया असंभवात्। तण्डुलः प्रमेय इत्यादौ विभक्त्यर्थामिश्रितस्यैव प्रकृत्यर्थस्य भानात्, प्रकृतिशक्तेः स्वार्थे क्लृप्ततया तत्र लक्षणासंभवादिति तु चिन्तनीयम्।

एवं। राजपुरुष इत्यादौ लक्षणास्वीकारे तस्य · दधिकर्मस्य तत्रापि। दधि पश्यतीत्यादावपि। तस्य। दध्यादिपदस्य। नक्तस्थलेऽपि। दधि पश्यतीत्यत्रापि। दधिकर्मकदर्शनान्वयबोधानुदयादिति। यथा दधिकर्मकः पश्यति दधिकर्मकेण पश्यतीत्यादौ दधिकर्मकदर्शनबोधो न भवति किन्तु दर्शनाश्रयो दधिकमर्मकः, एवं दधिकर्मककरणकदर्शनाश्रय इत्येव बोधो भवति तथोक्तभ्रमदशायां दधिपश्यतीत्यादौ दधिकर्मकदर्शनं न प्रतीयते इति भावः। भवन्मतेदधिकर्मके लक्षणास्वीकर्तृमते। अन्वयबोधस्यापत्तेरिति। द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायामितिशेषः। ननु राजपुरुष इत्यादावपि राजपदस्य राजसंबन्धिनि लक्षणाग्रहे राजपदस्य तृतियान्तत्वभ्रमदशायां राजसंबन्ध्यभिन्नः पुरुष इति बोधापत्तिरतआह। राजसंबन्धिपुरुषाद्यन्वयबोधे चेति। ननु मयापि द्वितीयान्तदधिपदाव्यवहितोत्तरपश्यतिपदत्वरूपसमभिव्याहारज्ञानस्याकांक्षात्वमुपेयम्, तथा च द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायां नापत्तिरित्यत आह। दधिपश्यतीत्यादावपि। अक्लृप्तत्वादिति। किन्तु दधिपद, पश्यति पदयोः समभिव्याहारस्यैवाऽऽकाङ्क्षात्वमिति भावः। ननु दधिपश्यतीत्यत्र

राजादिपदस्य राजसंबन्ध्यादौ शक्तत्वभ्रमदशायामिव तदर्थलक्षणाग्रहदशायामपि राजसंबन्धिनः पुरुष इत्यादाविव राजसंबन्धिसंबन्धीपुरुष इत्याद्यन्वयबोधस्य सर्वजनानामनुभवसिद्धत्वात्। पचति चैत्र इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशे विशेषणत्वोपगमे चैत्रो न पचतीत्यादावन्वयबोधानुपपत्तिर्द्रष्टव्या, कृतिसंबन्धस्यापि वृत्त्यनियामकतया तत्संबन्धावच्छिन्नप्रतियोगिताकाऽभावस्याऽप्रसिद्ध्या तद्बोधनाऽसंभवात्।

अथैवमपि चैत्रोजानातीत्यादौ चैत्राद्यंशे ज्ञानादेराश्रयतासंबन्धेनाऽन्वयबोधोपगमे क्षतिविरहः। आश्रयतासंबन्धस्याऽभावप्रतियोगितावच्छेदकतया न जानातीत्यादौ आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकज्ञानाद्यभावस्यैव भानसंभवात्। तथा च तत्राख्यातस्याऽऽश्रयत्वार्थकत्वनिर्युक्तिकम्।

---

द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायामापत्तिवारणायैव दधिपदाव्यवहितोत्तरपश्यतिपदत्वरूपाऽऽनुपूर्वीज्ञानस्य हेतुत्वमावश्यकमत आह। पश्यतिदधीति। तादृशज्ञानहेतुतायाः। दधिपदपश्यतिपदयोः समभिव्याहारज्ञानहेतुतायाः। अवश्यकल्पनीयत्वाच्चेति। तथा च दधिपश्यतीत्यादौ तृतीयाद्यन्तत्वभ्रमदशायां दधिकर्मकदर्शनान्वयबोधापत्तिर्दुर्वारैवेति भावः।

तण्डुलादिपदस्यैवेति। एवकारेण द्वितीयाविभक्तिव्यावृत्तिः। तण्डुलादिकर्मके लक्षणेति। नामार्थधात्वर्थयोः साक्षाद्भेदेनानन्वयनियमेन कर्मत्वे लक्षणापरित्यागः। तत्तद्विभक्त्यन्तसमभिव्याहारस्येति। अभेदसंसर्गकतण्डुलकर्मकप्रकारकधात्वर्थविशेष्यकबोधं प्रति द्वितीयान्ततण्डुलपदसमभिव्याहृतपचतिपदत्वरूपसमभिव्याहारस्येत्यर्थः। नातिप्रसंगः। तण्डुलः पचतीतिवाक्यान्न तादृशशाब्दबोधापत्तिः। ननु विनिगमनाविरहेण विभक्तेरेव लक्षणा किं न स्वीक्रियते इत्यत आह। विभक्तेरेवेति। एवकारेण प्रकृतिव्यवच्छेदः। प्रकृत्यर्थविशेषितस्वार्थे। तण्डुलकर्मकादौ। तत्र। तण्डुलकर्मकादौ। प्रकृतिलक्षणायां विनिगमकमाह। तण्डुलः प्रमेय इति। तत्र। तण्डुलकर्मकादौ।

चिन्ताबीजमाह। राजादिपदस्येति। राज्ञः पुरुष इत्यादावित्यादिः। तदर्थेति। राजपदार्थेत्यर्थः। इत्यादाविवेति। राजपुरुष इत्यत्रेति शेषः।

न च धात्वर्थज्ञानादेराश्रयतासंबन्धेन चैत्रादिरूपप्रातिपदिकार्थे साक्षात्प्रकारत्वोपगमे ज्ञानं चैत्र इत्यादावपि तथान्वयबोधापत्तिरिति वाच्यम्। तादृशान्वयबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य हेतुत्वात्। भवतोऽप्याश्रयताप्रकारकबोधे तादृशसमभिव्याहारज्ञानस्य हेतुताया आवश्यकत्वात्।

---

सर्वजनानामनुभवसिद्धत्वादिति। तथा च राजपुरुष इत्यत्र राजमात्रस्य राजपदार्थत्वे राजसंबन्धी पुरुष इति बोधः। राजसंबन्धिनो राजपदार्थत्वे राजसंबन्धिसंबन्धीपुरुष इति बोधः। विभक्तेरशक्तत्वे तादृशानुभवापलापो बोध्यः।

एवं विभक्तेरशक्तत्वे तण्डुलं पचतीति वाक्यस्य तण्डुलपरत्वे मुख्यप्रयोगत्वम्, माषादिपरत्वे गौणप्रयोगत्वमिति सर्वानुभवसिद्धमुख्याऽमुख्यत्वव्यवस्थानुपपत्तिरपि बोध्या, लक्षणाया उभयत्र तुल्यत्वात्। न च यत्र मुख्यार्थघटिते लक्षणा तत्र मुख्यत्वव्यवहार, यथा तण्डुलकर्मके लक्षणायां मुख्यत्वव्यवहार इति वाच्यम्। तण्डुलपदस्य तण्डुलसंपृक्तलक्षणास्थले मुख्यत्वापत्तेर्दुवारत्वात्। यत्र लक्षणाविभक्त्यर्थमात्रघटिता तत्र मुख्यत्वमित्यपि न वक्तुं शक्यम्, भवन्मते विभक्त्यर्थस्यैवाऽभावात्। पराभिमतविभक्त्यर्थघटिता यत्र लक्षणा तत्र मुख्यत्वमित्यपि न सम्यक्। तण्डुलकर्मके लक्षणास्वीकर्तृभवन्मते विभक्त्यर्थकर्मत्वातिरिक्तक्रियाघटितत्वादुक्तलक्ष्यार्थस्य। संप्रदानतण्डुलादिलक्षणायां क्रियाकर्मतण्डुलादिलक्षणायां च मुख्यत्वं स्यादिति।

"एवं पचति चैत्र इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशेऽन्वयबोधस्वीकार उचितः" इत्याद्युक्तं तत्राह। पचतीति। तद्बोधनाऽसंभवादिति। कृतिसंबन्धावच्छिन्नप्रतियोगिताकपाकाभावबोधनाऽसंभवादित्यर्थः।

एवमपीति। वृत्त्यनियामकस्याऽभावप्रतियोगितानवच्छेदकत्वेन न पचतीत्यादावुक्तरीत्याबोधानुपपत्त्या पचतीत्यादावाख्यातस्य कृत्यर्थकत्वेपीत्यर्थः। तादृशान्वयबोधे। आश्रयतासंसर्गकधात्वर्थप्रकारकबोधे। भवतोपि। प्रकारतावादिनोपि। आश्रयताप्रकारकबोधे। ज्ञानाश्रयत्ववांश्चैत्र इत्याकारकबोधे। तादृशसमभिव्याहारज्ञानस्य। ज्ञा धातूत्तरतिप्पदत्वरूपसमभिव्याहारज्ञानस्य। आवश्यकत्वादिति। अन्यथा ज्ञानं आश्रयत्वं चैत्र

यत्तु पचति चैत्र इत्यादौ पाककृतिमांश्चैत्रइत्याकारकाऽऽख्यातार्थ-प्रकारकशाब्दबोधोत्पत्त्या तत्राऽऽख्यातजन्यकृत्युपस्थितेर्हेतुत्वमावश्यकम्। तथा च तत्तदर्थविशेषान्निवेश्यात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुत्वकल्पने शक्यलक्ष्यसहस्रार्थभेदेनाऽऽख्यातजन्योपस्थितेः कारणताबाहुल्यमित्यर्थविशेषाननिवेश्य धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्यैव हेतुत्वमुपेयते। तथा च तादृशकारणबाधेन चैत्रादेर्धात्वर्थज्ञानविशेष्यतया भानं न संभवति।

यदि च धातुत्वप्रत्ययत्वादीनामननुगतानां दुर्निर्वचतया नैतादृशानुगतकार्यकारणभावकल्पनं संभवतीति मन्यते तदापि।

---

इत्यादावपि तादृशबोधप्रसंगादिति शेषः। न च प्रकारतावादिमते नामार्थधात्वर्थयोर्नामार्थनामार्थयोश्च भेदेनाऽन्वयस्यास्वीकारादेवोक्तस्थले न शाब्दप्रसंग इति वाच्यम्। तादृशनियमस्यापि ज्ञानं चैत्र इति समभिव्याहारस्य निराकांक्षत्वमूलकत्वात्, नियममात्रस्याऽकिञ्चित्करत्वादिति ध्येयम्। तथा च जानातीत्यत्राऽऽख्यातस्याश्रयत्वार्थकत्वं निर्युक्तिकमेव, आश्रयतासंसर्गकशाब्दबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य कारणत्वादिति भावः।

जानातीत्यत्र प्रकारेणाऽऽख्यातस्य सार्थक्यंसमर्थयति। यत्त्विति। आख्यातार्थप्रकारकेति। आख्यातस्य संसर्गमर्यादया भानं तु वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितानवच्छेदकत्वपक्षे न संभवतीत्यनुपदमेवोक्तम्। तत्र। आख्यातार्थप्रकारकशाब्दबोधे। आवश्यकमिति। अन्यथाकृतेः प्रकारत्वं न स्यात्। शक्यलक्ष्यसहस्रार्थभेदेनेति। पचतीत्यादौ शक्यार्थकृतिभेदेन-रथोगच्छति-नश्यति-जानाति-इत्यादौ लक्ष्यार्थव्यापार-प्रतियोगित्व-आश्रयत्वादिभेदेनेत्यर्थः। समानविशेष्यताप्रत्यासत्त्यैवेति। एवकारेण समवायव्यवच्छेदः। तथा च। विशेष्यतासंबन्धेन धात्वर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेनाऽऽख्यातजन्योपस्थितेर्हेतुत्वे च। तादृशकारणबाधेन। चैत्रे, विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरभावेन। न संभवतीति। एवं च चैत्रोजानातीत्यत्राऽऽख्यातस्य सार्थक्यमुपपन्नमिति भावः। यदिचेति मन्यते इति। उक्तकार्यकारणभावविरहे आश्रयतासंसर्गेण शाब्दबोधोपपत्तौ जानातीत्यत्राऽऽख्यातस्य वृत्तिकल्पनं व्यर्थमिति भावः। यदिचेत्याद्युक्तमाक्षेपं समाधत्ते। तदापीति। धात्वर्थप्रकारकबोधे प्रत्ययजन्योपस्थितेरकारणत्वे-

यत्र ज्ञाधातोरेव पाकादौ लक्षणा तत्र जानातीति वाक्यात्पाककृत्यादिप्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे तदव्यवहितोत्तरतिप्त्वादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुतायास्तत्र कल्पनीयतया तादृशकारणबाधाच्चैत्रो जानातीत्यादौ चैत्रादेर्ज्ञानविशेष्यतया भानानुपपत्तिर्दुर्वारैवेति । तदप्यसत् । प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे व्यभिचारवारणाय तादृशोपस्थितिवैशिष्ट्यस्य तादृशोपस्थितिजन्यतावच्छेदककोटौ अवश्यं निवेशनीयतया तदनुत्तरशाब्दबोधे चैत्रादेर्ज्ञानविशेष्यतया भाने तादृशकारणबाधस्याऽकिञ्चित्करत्वात् । तादृशानुपूर्वीघटकज्ञाधातुजन्यज्ञानाद्युपस्थिति, चैत्रादिविशेष्योपस्थितियोग्यताज्ञानादिघटितसामग्र्या आश्रयतासंसर्गकशाब्दबोधजनने बाधकाभावात् ।

---

पीत्यर्थः । यत्र । चैत्रोजानातीत्यत्र । पाककृत्यादिप्रकारकेति । पाकानुकूलकृत्यादिप्रकारकेत्यर्थः । कृतेः संसर्गतया भानं तु निरस्तम् । अन्वयबोधोत्पत्त्या । पाकानुकूलकृतिमांश्चैत्र इत्यन्वयबोधोत्पत्त्या । तत्र । शाब्दबोधे । तादृशकारणबाधादिति । विशेष्यतासंबन्धेन ज्ञाधात्वर्थप्रकारकशाब्दं प्रति विशेष्यतासंबन्धेन तिबादिज्ञानजन्योपस्थितिरूपकारणाभावादित्यर्थः । तथा च तादृशोपस्थितिरूपकारणादाख्यातार्थाऽऽश्रयत्वे धात्वर्थज्ञानस्य निरूपितत्वसंबन्धेनाऽन्वयार्थमाख्यातस्याश्रयत्वे वृत्तिकल्पनमावश्यकमिति भावः । यत्तुमतं निरस्यति । तदप्यसदिति । प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे । जानीते इत्यत्र ते प्रत्ययार्थविशेष्यकशाब्दबोधे । व्यभिचारवारणायेति । ज्ञाधात्वर्थप्रकारकशाब्दबोधे ज्ञाधात्वव्यवहितोत्तरतिबादिज्ञानजन्योपस्थितेः कारणत्वे व्यभिचारः जानीते इत्यत्र तिबादिज्ञानजन्योपस्थितेरभावात्तद्वारणायेत्यर्थः । तादृशोपस्थितिवैशिष्ट्यस्य । ज्ञाधात्वव्यवहितोत्तरतिबादिज्ञानजन्योपस्थितिवैशिष्ट्यस्य । तादृशेति । ज्ञाधात्वव्यवहितोत्तरतिबादिज्ञानजन्येत्यर्थः । निवेशनीयतयेति । तथा च ज्ञाधात्वव्यवहितोत्तरतिबादिज्ञानजन्योपस्थित्यव्यवहितोत्तरजायमानज्ञाधात्वर्थप्रकारकशाब्दबोधं प्रति ज्ञाधात्वव्यवहितोत्तरतिबादिज्ञानजन्योपस्थितिः समानविशेष्यतासंबन्धेन कारणम् । एवं च चैत्रोजानातीत्यादौ आश्रयतासंसर्गेण ज्ञानप्रकारकचैत्रविशेष्यकशाब्दस्य तिप्पदज्ञानजन्योपस्थित्यव्यवहितोत्तरत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया न तिबादिपदज्ञानजन्योपस्थितेरपेक्षेत्याह ।

न चैतन्मते आश्रयतासंबन्धेन ज्ञानादिप्रकारकशाब्दबोधे तादृशयोग्यताज्ञानहेतुत्वान्तरकल्पनाधिक्यम्, आश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रादितात्पर्यकात्सर्वनाम्नः साङ्केतिकशब्दान्तराद्वा तादृशसंबन्धेन ज्ञानादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सर्वमत एव प्रसिद्धावपि तादृशशाब्दबोधे पदार्थान्तरभाननैयत्येन तन्मिश्रितयोग्यताज्ञानस्य तत्र हेतुताया आवश्यकत्वात्। ज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य ज्ञानादिविशिष्टचैत्रादिविषयकशाब्दबोधे हेतुतायाः कुत्राप्यक्लृप्तत्वादिति वाच्यम्। भवन्मतेपि ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोधे तथाविधयोग्यताज्ञानहेतुताया आधिक्यात्। आश्रयतासंसर्गकज्ञानीयकारणतावच्छेदकस्य तदीयसंसर्गविषयताघटिततत्प्रकारकज्ञानकारणतावच्छेदकापेक्षया लघुशरीरतया आश्रयतायाः संसर्गतामतस्यैव लघुत्वात्।

न च यत्राश्रयत्वे ज्ञाधातुसमभिव्याहृताख्यातस्य शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधस्योभयमतसिद्धतया तत्र तादृशयोग्यताज्ञानहेतुत्वमुभयमतसिद्धमेवेति वाच्यम्। आश्रयतायाः संसर्गतावादिना तत्राप्याश्रयताप्रकारकबोधस्यानभ्युपगन्तव्यत्वादिति चेत् सत्यम्। एतदभिप्रायेणैव जानातीत्यादावाख्यातस्य निरर्थकतां मणिकार ऊरीचकार।

---

तदनुत्तरशाब्दबोधे इति। तिप्पदज्ञानजन्योपस्थित्यनुत्तरशाब्दबोधे। तादृशकारणबाधस्य। ज्ञाधात्वव्यवहितोत्तरतिबादिज्ञानजन्योपस्थित्यभावस्य। आकाङ्क्षकरत्वादिति। उक्तरीत्याऽऽश्रयतासंसर्गकज्ञानप्रकारकशाब्दबोधस्य कार्यतावच्छेदकानाक्रान्तत्वादिति भावः। तादृशानुपूर्वीघटकेति। चैत्रो-जानातीत्यानुपूर्वीघटकेत्यर्थः। आश्रयतासंसर्गकशाब्दबोधजनने। आश्रयतासंबन्धेन ज्ञानवांश्चैत्र इत्याकारकशाब्दबोधोत्पत्तौ। बाधकाभावादिति। तथाचाश्रयतायाः संसर्गतया भानसंभवे आख्यातस्य तत्र वृत्तिकल्पने गौरवमिति संक्षेपः।

अथ प्रकारतादिमते ज्ञाधात्वर्थो ज्ञानं पाकोवा - आख्यातार्थ आश्रयत्वं कृतिर्वा। उभयथापि ज्ञाधात्वर्थनिष्ठप्रकारतानिरूपितज्ञाधातूत्तरतिबर्थनिष्ठविशेष्यतांशालियोग्यताज्ञानस्यैकविधस्यैव कारणत्वम्।

संसर्गतावादिमते ज्ञाधातोः पाके लक्षणायां आख्यातस्य कृत्यर्थकत्वे

आख्यातार्थकृतिप्रकारकयोग्यताज्ञानस्य पाकानुकूलकृतिप्रकारकयोग्यताज्ञानस्य पाकानुकूलकृतिमांश्चैत्र इति बोधे कारणत्वम्। ज्ञाधातोर्मुख्यार्थपरत्वे आख्यातस्य निरर्थकतया आश्रयतासंसर्गकज्ञानप्रकारकशाब्दबोधे "आश्रयतासंबन्धेन-ज्ञानवांश्चैत्र इत्याकारके" आश्रयतासंबन्धेन ज्ञानप्रकारकयोग्यताज्ञानस्य कारणत्वान्तरं कल्पनीयमित्याशंकते। **नचेति**। **एतन्मत**। संसर्गतावादिमते। **आधिक्यमिति**। ज्ञाधातोः पाकादौ लक्षणासत्वे आख्यातस्य कृत्यर्थकत्वे पाकानुकूलकृतिप्रकारकयोग्यताज्ञानस्य कारणत्वमुभयमतसिद्धमिति भावः। **सर्वनाम्नः**। तदादिशब्दात्। स गच्छतीति वाक्यादिति यावत्। **सांकेतिकशब्दान्तराद्वेति**। डित्थादिशब्दादित्यर्थः। **तादृशसंबन्धेन**। आश्रयतासंबन्धेन। **तादृशशाब्दबोधे**। आश्रयतासंबन्धेन ज्ञानादिविशिष्ट-चैत्रविशेष्यकगमनानुकूलकृतिप्रकारकशाब्दबोधे। **पदार्थान्तरेति**। गमनानुकूलकृतिरूपपदार्थान्तरेत्यर्थः। अन्यथा केवलतच्छब्दात्पदार्थोपस्थितिरेव-स्यात्। **तन्मिश्रितेति** पदार्थान्तरमिश्रितेत्यर्थः। **तत्र**। शाब्दबोधे। **चैत्रादि-मात्रेति**। मात्रपदेन पदार्थान्तरव्यावृत्तिः। **अक्लृप्तत्वादिति**। तथा च स गच्छतीतिवाक्यादाश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रपरतत्पदघटिताज्जायमाने शाब्दबोधे आश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रविषयकयोग्यताज्ञानस्य कारणत्वेपि तादृशस्थले गच्छतीतिवाक्यार्थस्यापि भानात्तदंशेपि योग्यताज्ञानस्यापेक्षणा-त्तत्स्थलीयशाब्दसामग्र्या भिन्नतया चैत्रो जानातीत्यादौ आश्रयता-संसर्गकज्ञानविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य हेतुत्वं संसर्ग-तावादिमतेऽधिकमिति भावः। **भवन्मतेपि**। प्रकारतावादिमतेपि। **तथाविधेति**। आश्रयत्वप्रकारकेत्यर्थः। संसर्गतावादिमते लाघवमप्याह। **आश्रयतासंसर्गकज्ञानीयेति**। आश्रयतासंसर्गकशाब्दबोधनिरूपितेत्यर्थः। **कारणतावच्छेदकस्य**। योग्यताज्ञानत्वस्य। अस्य लघुशरीतया इत्यनेनान्वयः। प्रकारतावादिमते गौरवं दर्शयति। **तदीयसंसर्गविषयताघटिततयेति**। आश्रयत्वस्य यः संसर्गः "स्वरूपः" तन्निष्ठविषयताघटिततयेत्यर्थः। इदमुपलक्षणम्। आश्रयत्वस्य प्रकारत्वे पदजन्याश्रयत्वोपस्थितिघटिततयेत्यपि बोध्यम्। **तत्प्रकारकज्ञानकारणतावच्छेदकापेक्षयेति**। आश्रयत्वप्रकारकशाब्दबोधनिरूपित-कारणतावच्छेदकापेक्षया इत्यर्थः। प्रकारतावादिमते गौरवाभावं दर्शयति। **नचेति**। **यत्र**। जानातीत्यत्र। **तत्र**। जानातीत्यादौ। **तादृशेति**। आश्रयता-प्रकारकेत्यर्थः। तत्रापि आख्यातस्याऽऽश्रयत्वे शक्तिभ्रमे-स्वारसिकलक्षणा-ग्रहेपि। अनभ्युपगन्तव्यत्वादिति। किन्तु आश्रयतासंसर्गकबोधस्यैवोपगमादिति

तत्राऽऽश्रयत्वे निरूढलक्षणामभ्युपगच्छतां दीधितिकाराणां पुनरेष आशयः। यत्र ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्राद्यंशे धात्वर्थैकदेशस्य ज्ञानादेरन्वयानुपपत्त्या स्वरूप-संबन्धेन ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोध एव तत्र मणिकृता स्वीकरणीयः। तथा च तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुतायाः क्लृप्तत्वादाश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानहेतुताकल्पनमधिकमेव मणिकृन्मते।

न च दीधितिकृन्मते तादृशयोग्यताज्ञानहेतुत्वाकल्पनलाघवेऽपि जानातीत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटित-शाब्दसामग्र्या भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायां आख्यात-जन्याश्रयत्वोपस्थितिनिवेशनस्याधिक्याद् गौरवमिति वाच्यम्। भव-न्मतेपि ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दर इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे जानाति चैत्र इत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुजन्यज्ञानो-पस्थितिघटितसामग्र्याः प्रतिबन्धकताधिक्येन गौरवात्।

---

भावः। एतदभिप्रायेणैवेति : शक्तिभ्रमलक्षणाग्रहस्थलेपि आश्रयत्वस्य संसर्ग-तास्वीकाराभिप्रायेणैवेत्यर्थः।

तत्र। जानातीत्यादौ। यत्र। चैत्रोजानातीत्यत्र। तत्र। चैत्रो जाना-तीत्यादौ। अन्वयानुपपत्त्या इति। आश्रयत्वे विशेषणत्वेनाऽन्वितस्य ज्ञानस्य चैत्रे विशेषणतया ऽन्वयायोगादितिभावः। अन्वयबोध एवेति। एवकारेण ज्ञानप्रकारकत्वस्य व्यवच्छेदः। तत्र। जानातीत्यादौ। तथा च ज्ञानाश्रयता-प्रकारकबोधस्वीकारे च। तत्र। जानातीत्यत्र। मणिकृन्मते इति। प्रकारता-वादिमते तु ज्ञानाश्रयत्वप्रकारकयोग्यताज्ञानस्यैव हेतुत्वादिति लाघव बोध्यम्। प्रकारतावादिदीधितिकृन्मते गौरवं दर्शयति। नचेति। तादृशेति। आश्रय-तासंसर्गकेत्यर्थः। आनुपूर्वीज्ञानघटितेति। इदं च सामग्र्या विशेषणम्। भवन्मतेपि। संसर्गतावादिमतेपि। प्रतिबन्धकताधिक्येनेति। त्वन्मते उक्तप्रत्यक्षस्य भिन्नविषयकत्वादिति भावः। मन्मते। प्रकारतावादिमते। तादृशसामग्र्याः। चैत्रोजानातीत्यानुपूर्वीज्ञानघटितसमग्र्याः। ननु प्रकारता-वादिमतेपि आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववांश्चैत्रः सुन्दर इति प्रत्यक्षे चैत्रोजानातीत्यानुपूर्वीज्ञानघटितशाब्दसामग्र्याः प्रतिबन्धकत्वं वाच्यम्, तादृशप्रत्यक्षस्य भिन्नविषयकत्वात्। संसर्गतावादिमते तूक्तप्रत्यक्षस्य

मन्मते च तादृशसामग्र्या विरोधिज्ञानाश्रयत्वाभाववत्तानिश्चय-घटिततया तथाविधविशिष्टवैशिष्ट्यबोधसामग्र्यास्तादृशशाब्दसामग्र्या समं युगपदवस्थानाऽसंभवेन तादृशप्रतिबन्धकत्वकल्पनाविरहादित्यधिकं दर्शितदिशाऽवसेयम् ।

अथैवं रीत्या भूतले न घट इत्यादौ घटादिपदस्य घटप्रतियोगिकादौ तदुत्तरविभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य घटप्रतियोगिकाभावो भूतलवृत्तिरित्याद्याकारकप्रतियोगिताप्रकारकशाब्दबोधोपगम एव समुचितः । तथा सति तथाविधसमभिहारज्ञानघटितसामग्र्या घट प्रतियोगिकत्वाभाववानभावः प्रमेय इत्यादिविशिष्टवैशिष्ट्यबोधं प्रति प्रतिबन्धकत्वाकल्पनेन लाघवादित्युक्तनियमे निपातातिरिक्तत्वविशेषण-वैयर्थ्यमिति चेन्न ।

---

बाधघटितशाब्दसामग्र्याश्च बाधनिश्चयाभावघटिततयोक्तप्रत्यक्षसामग्र्योरेकदाऽसंवलनेन प्रतिबन्धकत्वाऽकल्पनेन लाघवमित्यत आह । अधिकमिति । निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववद्वाश्रयतावांश्चैत्र इति प्रत्यक्षे संसर्गतावादिमते । शाब्दसामग्र्याः प्रतिबन्धकत्वाधिक्यमिति पूर्वोक्तरीतिरनुसरणीयेति भावः ।

एवं रीत्येति । प्रतिबन्धकत्वाऽकल्पनप्रयुक्तलाघवेन प्रकारतास्वीकारे इत्यर्थः । भूतलवृत्तिरिति । इदमुपलक्षणम् । घटत्वावच्छिन्नप्रतियोगिताकाभावो भूतलवृत्तिरित्यपि बोध्यम् । प्रतियोगिताप्रकारकशाब्दबोधोपगम एवेति । एवकारेण प्रतियोगितासंबन्धेन घटविशिष्टाभावो भूतलवृत्तिरित्यस्य, भूतलवृत्तित्वाभाववान् घट इत्यस्य च व्यावृत्तिः । न च घटप्रतियोगिकाभावो भूतलवृत्तिरिति बोधो न प्रतियोगिताप्रकारकः, किन्तु तादात्म्येन घटप्रतियोगिकप्रकारक इति वाच्यम् । सुविभक्तेः प्रतियोगितायां लक्षणापक्षे-घटस्य यत्राधेयतयाऽन्वयः । प्रतियोगितायाश्च निरूपकत्वसम्बन्धेन नञर्थाऽभावेऽन्वयः । तथा च घटनिष्ठप्रतियोगितानिरूपकाभावो भूतलवृत्तिरिति बोधः प्रतियोगिताप्रकारक इति ध्येयम् । लाघवं दर्शयति । तथा सतीति । प्रतियोगिताप्रकारकशाब्दबोधस्वीकारे सति । घटप्रतियोगिक शाब्दबोधस्वीकारे सति । घटप्रतियोगिकप्रकारकशाब्दबोधस्वीकारे सतीत्यपि बोध्यम् । तथाविधेति । भूतले न घट इत्याकारकेत्यर्थः । घटप्रतियोगिकत्वाभाववान्प्रमेय इत्यादीति । आदिना घटनिष्ठप्रतियोगितानिरूपकत्वाभाववानभावः प्रमेय इति प्रत्यक्षस्य संग्रहः । प्रतिबन्धकत्वाऽकल्पनेनेति । उक्तप्रत्यक्षसामाग्र्याः

भूतले न घट इत्यादौ घटाभावे भूतलाद्यन्वितसप्तम्यर्थाधेयत्वस्येव तात्पर्यवशाद् घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाभावस्याऽन्वयबोधोऽप्यनुभवसिद्धः। अन्यथा तादृशवाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दितबोधस्य भूतले घट इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितायाः सर्वानुभवसिद्धाया अनुपपत्तेः। नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भान यादृशसमभिव्याहाराद्भवति तादृशसमभिव्याहारस्थले नञ्सत्वे तत्र धर्मिणि तदभावः प्रतीयते इत्यनुभवापलापप्रसंगाच्च। एवं च नञर्थाभावेऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम्।

---

भूतले न घट इति समभिव्याहारज्ञानघटितसामग्र्याश्च युगपदवस्थानाऽसंभवादिति भावः। उक्तनियमे। निपातातिरिक्तप्रातिपादिकार्थयोःक्रियातादृशप्रातिपदिकार्थयोश्च साक्षाद्भेदेन नान्वय इति नियमे। निपातातिरिक्तत्वविशेषणवैयर्थ्यमिति। निपातातिरिक्तनामार्थयोर्भेदेनान्वयो न भवतीति नियमेन निपातार्थनामार्थयोर्भेदेनान्वयो भवतीति ज्ञायते। प्रकृते च घटपदार्थघटप्रतियोगिकस्य नञर्थाभावेनाऽभेदेनैवान्वयान्निपातातिरिक्तत्वविशेषणं व्यर्थमिति भावः। एवं चन्द्र इव मुखमित्यत्र चन्द्रपदस्य चद्रप्रतियोगिके लक्षणा, तस्य इवार्थसादृश्येऽभेदेनाऽन्वयो बोध्यः। अन्यथा। भूतले न घट इति वाक्याद् भूतलवृत्तित्वाभाववान्घट इति बोधानुपगमे। तादृशवाक्यजन्यस्य। भूतले न घट इति वाक्यजन्यस्य। बोधस्य। घटा भावो भूतलवृत्तिरित्याकारकस्य। भूतले घट इत्यादिवाक्यजन्येति। अस्य बोधेऽन्वयः। स च भूतलवृत्तितावान्घटइत्याकारकः। तद्विरोधिताया इत्यर्थः। अनुपपत्तेरिति। इद च समानकारकज्ञानस्य विरोधित्वमभ्युपेत्य। ननु असमानप्रकारकज्ञानानामपि विरोधित्वं स्वीकृतम्, यथा ह्रदो वन्हिमानिति बुद्धिं प्रति ह्रदे वन्ह्यभावः वन्ह्यभावो ह्रदवृत्तिरित्यादिनिश्चयानाम्। प्रकृतेपि घटाभावो भूतलवृत्तिरित्यसमानप्रकारकनिश्चयस्यैव भूतलनिरूपितवृत्तितावान्घट इति बुद्धिविरोधित्वमस्तु इत्यत आह। नञ्पदं विनेति। एवं च। तादृशानुभवानुरोधे च। नञर्थाभावे इति। षष्ठ्यर्थे सप्तमी। अनुयोगितया। सरूपेण।

ननु जातौ जाति र्नास्तीत्यादौ जात्यभावो जातिवृत्तिरिति न बोधः, नञः प्रथमान्तत्वाभावात्, नञ्पदं निना यत्र धर्मिणीत्यादिनियमानुरोधेन जातिनिरूपितसमवायसबन्धावच्छिन्नवृत्तित्वाभावो नञा बोधनीयः, स च प्रतियोग्य-

एवं न पचति चैत्रः चैत्रस्य न धनमित्यादौ पाककृतिचैत्रस्वत्वा-द्यभावस्य नञर्थस्य चैत्रधनादावन्वयबोधोपपत्तये, घटो न पट इत्यादौ नञर्थघटादिभेदस्यान्वयबोधोपपत्तये च तदावश्यकम्। न चोक्तस्थलेषु नञोऽभाववल्लाक्षणिकतयाऽभाववता सममनुयोगिनोऽभेदान्वयबोध एव तत्रोपेयते इति वाच्यम्। तथासति सर्वत्राऽभाववत एव नञर्थतया मुख्यार्थपरनञो दुर्लभत्वापत्तेः।

अभावस्य भेदान्वयबोधोपगमेपि कार्यकारणभावकल्पनाधिक्य-विरहेणाऽभाववति लक्षणानौचित्यात्। अभाववतोऽभेदान्वयबोधोपगमे भूतले घट इति वाक्यजन्यबोधे भूतले न घटइत्यादिवाक्यजन्यबोध-स्याऽविरोधितापत्तेश्च। लाघवात्स्वरूपसंबन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वान्न तु अभेदसंसर्गकग्राह्याभावाश्रयप्रकारक-निश्चयस्येति, नीलो घट इत्यादौ विशेषणविभक्तेरभेदार्थकत्वेपि यद्यप्युक्तरीत्यालाघवं संभवति तथापि तत्रापि न नो विद्वेष इति दिक्।

---

प्रसिद्धयाऽप्रसिद्ध एव। समवायावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपेण जाति-निरूपितवृत्तित्वस्याभावो बोधनीय इति वाच्यम्। विशेषरूपेण संसर्गत्वानभ्यु-पगमात्। अतो जात्यभावो जातिर्वृत्तिरित्येव बोधो वाच्यः। एवं च नायं नियमः सार्वत्रिक इत्यत आह। एवं न पचतीति। पाककृतिचैत्रस्वत्वाद्यभावस्येति। पाककृत्यभावस्य चैत्रस्वत्वाभावस्येत्यर्थः, अभावपदस्य द्वन्द्वान्ते श्रूयमाणत्वात्। नञर्थस्य। नञन्तार्थस्य। अन्वयबोधोपपत्तये इति। अस्य तदावश्यक-मित्यनेनान्वयः। नञर्थेति। नञन्तार्थेत्यर्थः। तदावश्यकमिति। निपाता-तिरिक्तत्वविशेषणमावश्यकमित्यर्थः। आशंकते। नचेति। उक्तस्थलेषु। भूतले न घटः-न पचति-चैत्रः चैत्रस्य न धनमिति स्थलेषु। अभेदान्वय-बोध एवेति। एवकारेण भूतलवृत्तित्वाभाववान्घटः पाककृत्यभाववांश्चैत्रः चैत्रस्वत्वाभाववद्धनमितिभेदान्वयबोधस्य व्यावृत्तिः। तथा च भूतल-वृत्तित्वाभाववदभिन्नोघटः, पाककृत्यभाववदभिन्नश्चैत्रः, चैत्रस्वत्वाभाव-वदभिन्नं धनमित्यभेदान्वयबोधस्वीकारे व्यर्थमेव निपातातिरिक्तत्व-विशेषणमिति भावः। आशंकां निराकरोति। तथासतीति। अभेदान्वयबोधोपगमे सतीत्यर्थः। अभाववत एवेति। एवकारेणाऽभाव-त्वव्यावृत्तिः। मुख्यार्थपरेति। अभावपरेत्यर्थः। दुर्लभत्वापत्तेरिति। तथा

प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेन नानाविधाः। विभक्तिश्च सुप्तिङ्भेदेन द्विविधा।

---

च मुख्यार्थविरहे लक्षणापि न स्यात्, शक्यसंबन्धस्यैव लक्षणात्वात्। कार्यकारणभावकल्पनाधिक्यविरहेणेति। तथा च नञो मुख्यार्थपरत्वे नञ्पदघटितवाक्यजन्यशाब्दबोधे नञ्पदजन्याभावोपस्थितिः कारणम्। अभाववति लक्षणापक्षे नञ्पदजन्याभाववदुपस्थितिः कारणमिति साम्यमेवेति भावः। अविरोधमुपपादयति। लाघवादिति। इदं चापाततः। अभाववतस्तादात्म्येन प्रकारत्वे धर्मिपारतन्त्र्येण स्वरूपेणाभावस्यापि प्रकारत्वात्प्रतिबन्धकत्वसंभवात्। इदं रजतमित्यादिशाब्दे धर्मिपारन्त्र्येण रजतत्वादेः प्रकारत्वं निबन्धकारैरुक्तम्। अत एव भूतलावृत्तिर्घटइति बोधस्य "नामार्थयोरभेदान्वयबोधानुरोधेन" भूतलवृत्तिभेदवदभिन्नो घट इत्याकारकस्य भूतलवृत्तिर्घट इति वाक्यजन्यबोधे प्रतिबन्धकत्वमुपपद्यते।

एवं पर्वतो वन्ह्यभाववानिति वाक्यजन्यबोधस्य वन्ह्यभाववदभिन्नः पर्वत इत्याकारकस्य पर्वतोवह्निमानितिबुद्धौ विरोधित्वं संगच्छते। अन्यथा वन्ह्यभाववत्प्रकारकनिश्चयस्य वह्निप्रकारकज्ञानाऽविरोधित्वं स्यादिति। पारतन्त्र्येण भानाङ्गीकारे चाभेदेन वन्ह्यभाववतः प्रकारत्वे स्वरूपेण वन्ह्यभावस्यापि प्रकारत्वान्न प्रतिबन्धकत्वानुपपत्तिः। यद्यप्युक्तरीत्या लाघवं संभवतीति। संसर्गतावादिमते नीलतादात्म्याभाववान्घटः सुन्दर इति प्रत्यक्षस्य भिन्नविषयकतया तत्रोक्तशाब्दसामग्र्याः प्रतिबन्धकत्वमधिकम्। प्रकारतावादिमते तु उक्तप्रत्यक्षसामग्र्याः शाब्दसामग्र्याश्च युगपदवस्थानाऽसंभवात्प्रतिबन्धकत्वाऽकल्पनात्। तथापि। उक्तरीत्या लाघवसंभवेपि। तत्रापि। विशेषणविभक्तेरभेदार्थकत्वेपि। न नो विद्वेष इति। अत्र च नः सम्मतिरित्यनभिधाय न नोविद्वेष इति यदुक्तं तस्यायमाशयः। उक्तलाघवमनुसृत्य प्रकारतया तादात्म्यबोधस्य संसर्गतालाघवव्याघातकत्वे नास्माकं द्वेषः। किन्तु पदार्थव्यवस्था प्रतीतिमनुसृत्यैव भवति इति तथाविधां प्रकारतासाधिकां प्रतीतिं न श्रद्धधाम इति।

विशेष्यतासंबन्धेन नामार्थप्रकारकभेदान्वयबोधं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमित्युक्तम्, एवं च प्रसंगसंगत्या प्रत्ययं निरूपयति। प्रत्ययाश्चेति। प्रत्ययलक्षणन्तु—

याद्दशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान् ।
स ताद्दशार्थे शब्दः स्यात्प्रत्ययोऽसौ चतुर्विधः ।

सुशब्दः एकत्वार्थे वृत्तिमान् अथ च तदर्थे प्रकृतिनिपाताभ्यां भिन्नः एकत्वार्थे प्रत्यय इत्यर्थः ।

इतरार्थाऽनवच्छिन्ने स्वार्थे यो बोधनाक्षमः ।
तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते ।

स्वेतरार्थाऽविशेषितस्वार्थबोधजनकतावच्छेदकानुपूर्व्यभाववान्निपातभिन्नः शब्दः प्रत्यय इत्यर्थः । इतरार्थावच्छिन्ने एव स्वार्थे तिङर्थान्वयबोधक्षमो योः यः शब्दः स प्रत्यय इति यावत् । घटाद्यन्विते एव द्वितीयार्थकर्मत्वे तिङर्थान्वयाद् द्वितीयादेः प्रत्ययत्वम् । विस्तरस्तु शब्दशक्तिप्रकाशिकायाम् ।

प्रत्ययान्विभजते । विभक्तिकृत्तद्धितादीति । आदिना सन्क्यच्काम्य-जादीनां परिग्रहः । अत्र विभक्तिर्द्विविधा सुप्तिङ्भेदादिति प्रयोगो बोध्यः । द्विविधत्वं साध्यम्, तच्च सुप्त्वतिङ्त्वगतद्वित्वम् । साध्यता च स्वाश्रयाश्रयत्व सं० । सुब्भेद-तिङ्भेदएतदन्यतरस्य हेतुता । स्वनिरूपितप्रतियोगितावत्व-संबन्धेन[1] ।

---

1 विभक्तिलक्षणं तु

संख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु यः ।
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङ्चेति भेदतः ।

एकत्वत्वाद्यवच्छिन्नशक्तिमान्प्रत्ययः विभक्तिरित्यर्थः । प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने समर्थः स सार्थकोविभक्तिर्गीयते । तेनाख्याते वचनस्य संबन्धशक्तत्वे प्रमाणाभावेपि न क्षतिः ।

उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसंख्यावत्त्वं विधप्रत्ययार्थः । तथा च विभक्तिः उद्देश्यतावच्छेदकीभूतविभक्तित्वसमनियतवस्तुमदन्यद्वित्वसंख्यावतीति फलितार्थः । उद्देश्यतावच्छेदकसमनियतत्व चोद्देश्यतावच्छेदकव्याप्यत्वे सति उद्देश्यतावच्छेदकव्यापकत्वम् । उद्देश्यतावच्छेदकव्याप्यत्वं व्यापकत्वं च स्वाश्रयाश्रयत्वसंबन्धेन । तथाचोद्देश्यतावच्छेदकीभूतविभक्तित्वस्य व्याप्यत्वं व्यापकत्वं च ताद्दशसंबन्धेन द्वित्वेऽस्तीति भावः । अत्र च संख्यायामुद्देश्यतावच्छेदकसामानाधिकरण्यमात्रोक्तौ उद्देश्यतावच्छेदकीभूतविभक्तित्वसमानाधिकरणसुप्त्व-गतैकत्वमादाय विभक्तेरेकविधत्वप्रसंगात् । व्याप्यत्वोपादानेपि तद्दोषनादवस्थ्याद् व्यापकत्वोपादानम् । सुप्त्व-तिङ्त्व-घटत्वगतत्रित्वमादाय विभक्तेश्चतुर्विधत्वापत्ति-वारणाय व्याप्यत्वोपादानम् । विभक्तित्व-सुप्त्व-तिङ्त्वगतत्रित्वमादाय विभक्तत्व

विधत्वापत्तिवारणाय वस्तुमदन्यत्वोपादानम् । वस्तुमत्ता च स्ववृत्तित्व स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसं० । स्वत्रयं विभक्तित्व-सुप्त्व-तिङ्त्व-प्रत्येकपरम् । तथा च तादृशत्रित्वं निरुक्तोभयसंबन्धेन सुप्त्वादिविशिष्टमेवेति न त्रिविधत्वापत्तिः । अत्र-स्ववृत्तित्वानुपादाने सुप्त्वतिङ्त्वगतद्वित्वस्य स्वसमानाधिकरणस्वेतरवृत्तित्वसंबन्धेन विभक्तित्वविशिष्टत्वाद्विभक्तेर्द्विविधत्वानुपपत्तिः । तदुपादाने तु तादृशद्वित्वे-विभक्तित्ववृत्तित्वविरहात्तदुपपत्तिः । तावन्मात्रोपादाने च तद्दोषतादवस्थ्यम्, स्ववृत्तित्वसंबन्धेन द्वित्वस्य सुप्त्वादिविशिष्टत्वात् । एवं स्वेतरस्मिन् स्वसामानाधिकरण्यानुपादानेऽपि तद्दोषतादवस्थ्यम्, तादृशद्वित्वस्य सुप्त्ववृत्तित्वात् सुप्त्वेतर-तिङ्त्ववृत्तित्वाच्च ।

अथैवमपि विभक्तित्वगतैकत्वमादाय विभक्तेरेकविधत्वापत्तिः, तादृशैकत्वं उद्देश्यतावच्छेदकीभूतविभक्तित्वसमनियतं—विभक्तित्वेतरवृत्तित्वविरहेण वस्तुमदन्यदपीतिचेन्न । उद्देश्यतावच्छेदकाऽवृत्तित्वस्य संख्यायां विशेषणीयत्वात् । गगनसुप्त्वादिगतत्रित्वमादाय त्रिविधत्वापत्तिरतोऽवृत्त्यवृत्तीत्यपि विशेषणीयम् ।

तथा च विभक्तिः विभक्तित्वसमनियतवस्तुमदन्य-उद्देश्यतावच्छेदकाऽवृत्तिअवृत्त्यवृत्तिद्वित्ववती सुब्भेदतिङ्भेदैतदन्यतरस्मादिति पर्यवसितम् ।

वस्तुतो नायं ग्रन्थोऽनुमानपरः किन्तु विभाजनपरः । एवं च द्विविध इत्यत्र प्रकारत्वं विधप्रत्ययार्थः । द्विपदस्य द्वित्वाश्रयपरत्वम् । तथा च विभक्तिः द्वित्वाश्रयवदभिन्ना सुप्तिङ्वैलक्षण्यात् । भेदशब्दार्थो वैलक्षण्यम् । द्वित्वाश्रयो सुप्त्वतिङ्त्वे । तदाश्रयो सुप्तिङौ । तदभिन्नत्वं विभक्तौ । न च सुप्तिङ्गतद्वित्वमादाय कुतो नोच्यते । तथा च द्वित्ववदभिन्ना विभक्तिरिति वाच्यम् । सुपां तिङां च नानात्वेन विभक्तिश्चतुर्विध इति प्रयोगापत्तेः । न च कुतो न तादृशप्रयोग इति वाच्यम् । स्वाव्यवहितपूर्ववर्तिसंख्यावच्छिन्नवाचकपदस्य स्वसमभिव्याहृतसंख्यावच्छिन्नवाचकपदजन्यशाब्दबोधीयविशेष्यतावच्छेदकधर्मसमविभक्तिलक्षणन्तु—

संख्यात्वव्याप्यसामान्यैः शक्तिमान्प्रत्ययस्तु यः-
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङ्चेति भेदतः ।
संख्यात्वावान्तरजातिमच्छक्तत्वे सति प्रत्ययत्वं विभक्तित्वम् ।
प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने-
समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते इति ।

स्वार्थधर्मिकास्वप्रकृत्यर्थविधेयकान्वयबोधजनकत्वमित्यर्थः । प्रथमापि स्वार्थेऽभेदादौ स्वप्रकृत्यर्थविधेयकान्वयबोधं जनयति इति तत्रापि समन्वयः ।

सुब्विभक्तयः प्रथमाद्वितीयादयः सप्तेति। सुब्विभक्तिर्द्विधा। कारकविभक्तिः उपपदविभक्तिश्च। यादृशधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयीभूतार्थबोधजनकं सुप्तादृशधात्वर्थक्रियायां कारकम्। यथा ग्रामं गच्छतीत्यत्र गमधात्वर्थक्रियाविशेषणीभूतसंयोगविषयकबोधजनकत्वाद् द्वितीयायाः कारकत्वम्। एवमन्यविभक्तीनामपि। तत्क्रियानिष्ठविशेष्यतानिरूपितप्रकारत्वाभिन्ना या सुबर्थनिष्ठविशेष्यता तन्निरूपितप्रकारतावति नामार्थे कारकव्यवहारो गौणः। अतएव क्रियान्वितविभक्त्यर्थान्वितत्वं कारकत्वमिति जयरामभट्टाचार्यः। षष्ठ्यर्थसंबन्धो न धात्वर्थे प्रकारः। तण्डुलस्य पचतीत्याद्यप्रयोगात्। अतः षष्ठ्यर्थसंबन्धो न कारकम्। रजकस्य वस्त्रं ददातीत्यादौ च परिष्कार्यत्वरूपसंबन्धो वस्त्रादावन्वेति। तदुक्तम्।

कारकार्थेतरार्था च सुबृद्विधा च विभज्यते।
धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्।

तथा च षष्ठ्यर्थसंबन्धस्य धात्वर्थेऽप्रकारतया तदर्थिका षष्ठी न कारकम्। उक्तं च

क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम्।
कर्तृकर्मादिभेदेन, शेषः संबन्ध इष्यते।

शेषः—कारकादवशिष्टः संबन्ध इति यावत्। तण्डुलस्य पाचकः—मैत्रस्य भोक्तव्यमित्यादौ कर्मत्व, कर्तृत्वादिकं कारकमेव, षष्ठी तु कर्तृकर्मणोः कृतीत्यनुशासनात्। चौरस्य हिनस्ति—जलस्योपस्कुरुते-मातुःस्मरतीत्यादौ कारकार्थेव षष्ठी। नामार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयीभूतार्थबोधजनकं सुप् उपपदविभक्तिः। यथा दण्डेन घटः—भूतले घटः इत्यादौ तृतीयाद्यर्थः करणत्वादिकं न कारकं, धात्वर्थानन्वितत्वात्। अत एव दण्डघटः—भूतलघटः इत्यादिर्न समासः, कारकविभक्त्यन्तर्भाविनैव विशेषविधिं विना तत्पुरुषस्य व्युत्पन्नत्वात्। उपपदविभक्तिर्न कारकं, तदुक्तम्।

यत्सुपो यादृशार्थो न प्रकारीभूय भासते।
धात्वर्थे, तादृगर्थे सा कारकान्यार्थं सुब्भवेत्।

यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकयादृशस्वार्थप्रकारकशाब्दबोधजनकतानवच्छेदकं तादृशानुपूर्वीमत्सुप्त्वं तादृशार्थे उपपदविभक्तित्वम्। स्वपदं लक्ष्यपरम्। यथा रजकस्य वस्त्रं ददातीत्यादौ ङस्त्वरूपानुपूर्वीप्रकारकज्ञानत्वं दाधात्वर्थधर्मिक "इदर्थ"संबन्धप्रकारकशाब्दधीजनकतानवच्छेदकं ङस्त्वरूपानुपूर्वीमत्सुप् उपपदविभक्तिः। एवं सुत्वरूपानुपूर्वीप्रकारकज्ञानत्वस्य धात्वर्थधर्मिक"स्वर्थ"एकत्व-

प्रकारकशाब्दधीजनकतानवच्छेदकत्वादेकत्वार्थे सुः उपपदविभक्तिः। सुपो लक्षणं तु तत्रैव—

प्रकृत्यर्थे स्वार्थसंख्यान्वयधीहेतवः
प्रथमादिप्रभेदेन ताश्च सप्तविधा मताः।

तथा च प्रकृत्यर्थधर्मिकस्वार्थसंख्याविषयकबोधजनकतावच्छेदकानुपूर्वीमत्वं सुपां लक्षणम्। स्वं—विभक्तिः। विभक्त्यन्यप्रत्ययानां संख्यायामशक्तत्वात्। तिङर्थसंख्यायास्तु भावनान्वयिनि नामार्थे एवान्वयो न तु स्वप्रकृतिधात्वर्थे। यं यं भावनाऽन्वेति तं त संख्यानुधावतीत्युक्तेः।

प्रथमालक्षणं तु—

तादात्म्यभिन्ने स्वार्थे या प्रकृत्यर्थस्य बोधने।
न समर्था विभक्तिः सा प्रथमा परिकीर्त्यते इति।

स्वार्थे। विभक्त्यर्थे। सप्तम्यर्थो विशेष्यकत्वम्। प्रकृत्यर्थस्येति। षष्ठ्यर्थः प्रकारकत्वम्। तादात्म्यातिरिक्तस्वार्थविशेष्यकप्रकृत्यर्थप्रकारकबोधाऽजनिका या विभक्तिः सा प्रथमेत्यर्थः। द्वितीयादिविभक्तीनां तादात्म्यातिरिक्तकर्मत्वकरणत्वादिविशेष्यकं प्रकृत्यर्थबोधजनकत्वादेव तत्र तत्र नातिव्याप्तिः। प्रथमायास्तु संख्यामात्रमर्थः। संख्या च न कर्मत्वादिवत्प्रकृत्यर्थविशेष्यतया भासते, संख्याकर्मत्वयोरुभयोर्विशेष्यत्वे वाक्यभेदापत्तेः। कर्मत्वादेर्विशेषणत्वे प्रकृत्यर्थधात्वर्थयोरन्वयानुपपत्तेरित्यग्रे व्यक्तीभविष्यति। अत एव संख्यातिरिक्तसुबर्थानां प्रकृत्यर्थे विशेष्यतयैव भानमितिनियमः। इत्थमेव प्रकृत्यर्थधर्मिकस्वार्थप्रकारकान्वयबोधजनकत्वे सति विभक्तित्वमित्यपि हेयम्। द्वितीयादावतिव्याप्तेः। विशेषणवाचकपदोत्तरविभक्तेरभेदार्थकत्वमतेऽभेदमादायाऽव्याप्तिवारणाय तादात्म्यभिन्नेति। तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं तादात्म्यातिरिक्तस्वावच्छिन्नार्थधर्मिकप्रकृत्यर्थप्रकारकबोधजनकतानवच्छेदकं विभक्तित्वे सति तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वं पर्यवसितम्। आनुपूर्वीस्वपदाभ्यां सुत्वादेर्ग्रहणम्।

स्वर्गकामोयजेतेत्यादिविधिस्थले धात्वर्थमुख्यविशेष्यको बोधो भवति। कृतिसाध्यत्वं लिङर्थः। स्वर्गकाम इत्यत्राऽऽधेयत्वं प्रथमार्थः। तस्य कृतावन्वयः। तथा च स्वर्गकामवृत्तिकृतिसाध्यतावान् यागः इति बोधः। अत्र प्रथमायामव्याप्तिः। प्रथमायास्तादात्म्यभिन्नस्वार्थाऽऽधेयत्वविशेष्यकप्रकृत्यर्थप्रकारकबोधजनकत्वादित्यतो लक्षणान्तरमुक्तम्।

**सुब्विभक्तयः प्रथमा द्वितीयादयः सप्त, तत्र प्रथमार्थः प्रकृत्यर्थे विशेषणविधयाऽन्वयिनी संख्यैव ।**

एवं च विभक्तिश्च सुप्तिङ्भेदेन द्विविधेत्यस्य विभक्तिः सुप्तिङोर्भेदः परस्परवैलक्षण्यं सुप्त्वतिङ्त्वात्मकं तदभिन्नो यः विभक्तित्वसमनियतवस्तुमदन्यद्वित्ववत्प्रकारस्तद्वतीत्यर्थः । स्वार्थं अभेदविशेष्यकप्रकृत्यर्थप्रकारकबोधजनकतावच्छेदकानुपूर्वीमत्वम् । तदुक्तम्—

तादात्म्यभिन्नस्वार्थे या प्रकृत्यर्थस्य बोधने
न समर्था विभक्तिः सा प्रथमापरिकीर्त्यते इति ।

अथवा धात्वर्थावच्छिन्नतिङर्थनिष्ठप्रकारतानिरूपितविशेष्यतायदन्तनामप्रयोज्या सा प्रमा । तदुक्तम् ।

धात्वर्थेनविशिष्टस्य तिङर्थस्यान्वयंप्रति ।

यदन्तनामबोध्यत्वं तन्त्र सुप्साथवातथेति ! तत्र । तेषुमध्ये । प्रथमार्थः । अस्य संख्यैवेत्यनेनान्वयः । प्रथमार्थः प्रकृत्यर्थे एव विशेषणविधयाऽन्वयिनी एव संख्यैवेत्यवधारणत्रये तात्पर्यम् ।

प्रकृत्यर्थे एवेत्यवधारणात् स्वाश्रयकर्तृकत्वसंबन्धेन संख्यायाः प्रधानीभूतक्रियायामेवान्वय इति भ्रमो निराकृतः । एकपदोपात्तत्वेन झटित्युपस्थितेः । संबन्धलाघवाच्च प्रकृत्यर्थे एवान्वयौचित्याच्च ।

विशेषणविधयाऽन्वयिनी एवेत्यवधारणात् संख्यायां प्रकृत्यर्थस्य विशेषणत्वभ्रमोनिराकृतः । तथाहि घटमित्यादौ द्वितीयार्थकर्मत्वे प्रकृत्यर्थस्य घटस्य विशेषणतयाऽन्वयो व्यवस्थापितः । **प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेः ।** तत्र स्वार्थे संख्यातिरिक्तत्वनिवेशे गौरवादितरसुबर्थवत् ।

धात्वर्थेन विशिष्टस्य तिङर्थस्याऽन्वयं प्रति ।
यदन्तनामबोध्यत्वं तन्त्रं सुप् साथवा तथा ।

विशेष्यतासंबन्धेन धात्वर्थावच्छिन्नतिङर्थप्रकारकबोधं प्रति विशेष्यतासंबन्धेन यदन्त "सुवन्त" नामपदजन्योपस्थितेः कारणत्वम् सा सुपप्रथमेत्यर्थः । स्वर्गकामोयजेतेत्यत्र तिङर्थस्य कृतिसाध्यत्वादेः केवलस्यैव धात्वर्थेऽन्वयो न तु धात्वर्थावच्छिन्नस्येति कार्यतावच्छेदकानाक्रान्ततया यागे यदन्तनामपदजन्योपस्थितेर्विशेष्यतासंबन्धेनाऽसत्वेपि न व्यतिरेकव्यभिचारः । नियतवस्तुमदन्यसंख्याबोधकत्वेन तथा प्रयोगस्याऽसंभवात् । एवं विधप्रत्ययः । तथा च विधप्रत्ययसमभिव्याहृतसंख्यावाचकद्विपदजन्यशाब्दबोधीयविशेष्यतावच्छेदकविभक्तित्वसामनैयत्यस्य त्रित्वादिसंख्यायामसत्वात् । सामनैयत्यं च स्वाश्रयाश्रयत्वसं० । एवं संख्या । अन्यत्सर्वं पूर्ववदित्यन्यत्र विस्तरः ।

सुबर्थसंख्यापि प्रकृत्यर्थविशेष्यतयैव भासते इति। तत्रेदं वक्तव्यम्-घटमित्यादौ संख्याकर्मत्वयोःप्रकृत्यर्थविशेष्यत्वे वाक्यभेदापत्तिः। न च प्रकृत्यर्थे कर्मत्वमेव विशेषणमस्तु इति वाच्यम्। इतरसुबर्थवदिति दृष्टान्ताऽसंगतेः। अतो द्वितीयार्थसंख्यायाः प्रकृत्यर्थे विशेषणतयैव भानमुचितम्। इत्थं च प्रथमा-स्थलेपि संख्याया विशेषणतयाऽन्वये सिद्धे संख्यातिरिक्तत्वविशेषणप्रयुक्त-गौरवस्य फलमुखत्वेनाऽदोषात्।

संख्यैवेत्यवधारणेन लिङ्गपरिमाणयोः प्रथमार्थत्वभ्रमनिरासः[1]।

---

१ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रम्। प्रातिपदिकार्थो व्यक्तिः। यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः। उक्तं च नियतोपस्थितिकः प्रातिपदिकार्थ इति। तथा च -- ननु व्यक्तेः प्रकृतित एव लाभात्कथं प्रथमार्थत्वम्, अनन्यलभ्योहि शब्दार्थ इति न्यायात्। न च घटादिप्रातिपदिकार्थेषु सुपामेव शक्तिः। अनन्तानां प्रातिपदिकानां (घटादिपदानां) शक्तत्वापेक्षया एकविंशतिसंख्याकानां सुपां शक्तत्वे लाघवादिति वाच्यम्। घटादिपदानां निरर्थकत्वे प्रातिपदिकसंज्ञाविरहे तदुत्तरं स्वाद्युत्पत्तेर-प्रसक्तेः। अनुपदमेव व्यक्तीभविष्यति। प्रातिपदिकानां घटादिपदानां घटत्वे सकलघटवाचकत्वेपि घटोस्तीत्यादौ अस्तित्वेन तद्घटव्यक्तिबोधः प्रथमयेति चेन्न। घटपदेन घटोपस्थितौ अबाधिततद्घटव्यक्तेर्घटत्वेन शाब्दबोधे भानसंभवात्तद्व्यक्ति-त्वेन भानस्याऽप्रामाणिकत्वादिति प्रातिपदिकार्थस्य न प्रथमार्थत्वम्।

लिङ्गं पुंस्त्वं स्त्रीत्वं क्लीबत्वं च। तत्र शोणिताधिकशुक्रसमवेतप्राणित्वं पुंस्त्वम्। शुक्राधिकशोणितसमवेतप्राणित्वं स्त्रीत्वम्। समशुक्रशोणितोभयसमवेत-प्राणित्वं क्लीबत्वम्।

तथा च निरुक्तम्। शुक्रातिरेके पुमान्। शोणितातिरेके स्त्री। द्वाभ्यां समेन षण्ढ इति।

तटः तटी तटमित्यादौ लिङ्गयोन्यादिमत्त्वरूपलिङ्गस्य बाधात् पदसंस्कारार्थं पुंस्त्वादिना पारिभाषितत्वमात्रस्यैव स्वीकारात्, यस्मिन् कस्मिन्पदार्थे लिङ्गस्य भानाभ्युपगमेपि तटं तटी तटानि इत्येवमत्राप्यनुभवानुरोधेन लिङ्गभानस्य स्वीकरणीयतया प्रथमाया अभावेन प्रातिपदिकार्थस्यैव स्त्रीत्व-पुंस्त्वादिविशिष्टेऽर्थे निरूढलक्षणां स्वीकृत्योपपादनीयतया प्रथमास्थलेपि तथैव निर्वाहे सुपां तत्र शक्ति-कल्पनानौचित्यात्। ब्राह्मण इत्यादौ पुंस्त्वस्य प्रातिपदिकार्थत्वम्। ब्राह्मणी इत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययार्थत्वमेवाऽग्रे व्यवस्थापनीयमिति ध्येयम्।

अत एव यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतयैव भासते ।

---

सूत्रेण तु न केवलं प्रकृतिः प्रयोक्तव्येति व्युत्पत्तिः सूचिता । अतो न सूत्रवैयर्थ्यम् । तदभावे निर्विभक्तिकप्रयोगापत्तेः । प्रत्ययभिन्नस्य प्रातिपदिकसंज्ञाविधानात्प्रकृतिभ्य एव प्रत्ययविधानमित्यलम् ।

अतएवेति । प्रकृत्यर्थे विशेषणविधयाऽन्वययोग्यायाः संख्याया एव प्रथमार्थत्वे इत्यर्थः । यत्र । घट इत्यादौ । विशेष्यवाचकसमानविभक्तिकपदमिति । अस्य नास्तीत्यनेनाऽन्वयः । नीलो घट इत्यत्र विशेष्यवाचकसमानविभक्तिकं नीलपदमस्ति, एवं चन्द्र इव मुखमित्यत्र निपातमस्ति तदर्थे च घटो विशेष्यः मुखं विशेष्यम् । घट इत्यत्र तु घटस्य विशेष्यभासकसामग्र्यभावात् असौ प्रथमार्थः संख्या एव मुख्यविशेष्यतया भासते घट इत्यादौ घटवृत्ति

---

परिमाणं परिमितिः । द्रोणोव्रीहिरित्यत्र परिमाणविशेषो द्रोणः । तस्य च प्रथमार्थे परिमाणे भेदेनान्वयः । परिमाणस्य समवायेन व्रीहौ । तथा च द्रोणाऽभिन्नपरिमाणवान्व्रीहिरिति बोधः । इदमत्राऽवधेयम् । परिमाणं यदि प्रथमार्थः, तस्य प्रकृत्यर्थविशेषितस्य प्रातिपदिकान्तरार्थे भेदेनाऽन्वयस्तदा राज्ञः पुरुष इत्यादाविव व्रीहेर्द्रोणः, व्रीहौद्रोण इत्यादिप्रयोगः स्यादिति समानविभक्तिकत्वनियमो न स्यात् । परिमाणान्वयेपि समानविभक्तिकत्वं तन्त्रमिति स्वीकारापत्तेः । द्रोणाऽभेदस्य व्रीहौ बाधितत्वात् । स्वाभिन्नपरिमाणवत्वसंबन्धेन द्रोणस्य व्रीह्यावन्वयो न संभवति, उभयोरपि नामार्थत्वात् । द्रोणं व्रीहिमानयेति सामानाधिकरण्येन प्रयोगाणामानुभविकतया प्रथमायास्तत्राभावेन द्रोणपरिमाणवति लक्षणाया आवश्यकतया तत्रैव प्रथमास्थलेपि बोधनिर्वाहसंभवेन प्रथमाविभक्ति शक्तेरनङ्गीकारात्, अतः परिमाणं न प्रथमार्थ इति सिद्धम् । किन्तु संख्यैव प्रथमार्थः । तस्या यथा न प्रातिपदिकार्थत्वं तथाऽग्रे वक्ष्यते । सूत्रे सति सप्तमीविवक्षिता न तु वाचकत्वार्थिका । तथा च प्रातिपदिकार्थादिविवक्षायां प्रथमेति तदर्थः । मात्रपदात्प्रातिपदिकार्थादीतरेषु कर्मत्वादिष्वविवक्षितेषु प्रथमा भवतीति सूचितम् । वचनपदं तदर्थसंख्योपलक्षकम् । अनन्यलभ्यन्यायेन संख्याया एव प्रथमार्थत्वात् । एवं च संख्याया अविवक्षितत्वेपि नियतवचनस्थले बाधितत्वेपि च प्रथमा भवत्येव तत्प्रयोजिकायाः कर्मत्वाद्यविवक्षायाः सत्वात् ।

संख्यावाचकानां च एकवचनद्विवचनबहुवचनानामेकत्वद्वित्व बहुत्वत्वावच्छिन्नेषु शक्तिः। शक्तता च सुत्वौत्वजस्त्वादिना, न तु त्वादितिबादिसाधारणैकवचनत्वादिना। एकवचनत्वादेर्दुर्वचत्वात्। न चैकत्वादिवाचकत्वं तत्। वाचकतायाः शक्ततावच्छेदकत्वे आत्माश्रयात्। बोधकतारूपत्वे शक्तिभ्रमेण द्विवचनादीनामपि एकत्वबोधकतया अतिप्रसक्तत्वात्। न चैकवचनत्वादिकं जातिविशेषः। सुप्त्वादिना साङ्कर्यात्।

---

एकत्वमिति बोधः न तु एकत्ववान्घट इति बोधः। तथासति घटत्ववदेकत्वस्यापि प्रकृत्यर्थत्वं स्यादिति कृष्णंभट्टाः।

प्रथमान्तार्थस्य यद्विशेष्यं तद्भासकसामग्र्यभावादसौ प्रथमान्तार्थो मुख्यविशेष्यतया भासते इत्यर्थः। चैत्रोऽहमित्यादौ चैत्रइवेत्यादौ च अस्मत्पदार्थे इवार्थसादृश्ये च चैत्रस्य विशेषणत्वाद्विशेषावाचकसमानविभक्तिकपदं निपातपदं वा नास्तीत्युक्तम्, इत्यस्मद्गुरुचरणाः। संख्याया विशेषणत्वकथनेन चैत्रः इति वाक्यादेकत्वप्रकारकचैत्रमुख्यविशेष्यकबोधस्य क्लृप्तत्वेन चैत्रः पचतीत्यादावपि सति संभवे प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वमिति सूचितम्। सति संभवे इति कथनेन नैयायिकमते सर्वत्र प्रथमान्तार्थमुख्यविशेष्यक एव बोधो भवतीति नियमो नास्तीति सूचितम्। तेन पचतीत्यत्र पाकानुकूला कृतिः, एवं चैत्रेण सुप्यते इत्यत्र च चैत्रकर्तृकं शयनमित्येव बोधः। शक्तिरिति। एकत्वत्वादिकं जातिस्तदवच्छिन्ने शक्तिरित्यर्थः। गुणादिवाचकपदोत्तरसुपः अपेक्षाबुद्धिविशेषविषयत्वे लक्षणा। एकत्वत्वमखण्डोपाधिर्वा, तेनाऽपेक्षाबुद्धेरनुपस्थितिदशायां गुणादौ संख्याप्रतिपत्तेरानुभविकत्वेपि न क्षतिः। तादृशोपाधिविशिष्टैकत्वादेर्न संख्यात्मकतेति ध्येयम्। सुत्वौत्वजस्त्वादिनेति। आदेशानां नानात्वेन तन्निष्ठधर्माणां शक्ततावच्छेदकत्वे गौरवमिति भावः। एकवचनत्वादेः शक्ततावच्छेदकत्वाऽसंभवे हेतुमाह। एकवचनत्वादेरिति। दुर्वचत्वादिति। निरूपयितुमशक्यत्वादित्यर्थः। तत्। एकवचनत्वम्। एकत्वं शक्यम्, एकत्वशक्तता च सौ, शक्ततावच्छेदकम् एकवचनत्वम्, तच्चैकत्ववाचकत्वम्, वाचकता शक्तता इत्यनर्थान्तरम्। वाचकतायाः शक्ततारूपत्वे इति। स्वस्य स्वापेक्षित्वे आत्माश्रयादिति। स्वस्य स्वापेक्षित्वेऽनिष्टप्रसंग आत्माश्रयः। स्वग्रहसापेक्षग्रहकत्वमिति यावत्। वाचकत्वं यदि शक्ततावच्छेदकं स्यात्तदा शक्ताभिन्नं स्यादित्यनिष्टप्रसंगो बोध्यः। बोधकतारूपत्वे इति। एकवचनत्वस्य एकत्व

न च शक्तिसंबन्धेनैकवचनादिपदवत्त्वं तत्, तादृशाऽज्ञानदशायां च सुत्वादिना शक्तिभ्रमादेव शाब्दबोधः। एकवचनादिशब्दस्य पदद्वयात्मकतया तादृशसमुदायशक्तेरेवाऽप्रसिद्धिरिति तु नाशङ्कनीयम्। एकं वक्तीत्यादिव्युत्पत्त्या एकवचनादिशब्दस्य स्वादिबोधकत्वे एकादिशब्देपि तादृशव्यवहारापत्तेः। एकवचनादिशब्दस्य स्वादौ रूढिस्वीकारस्यावश्यकत्वादिति वाच्यम्। ग्रन्थकारीयसङ्केतेनैवोपपत्तौ एकवचनादिपदे शक्तेरप्रामाणिकत्वात्। तान्येकवचनद्विवचनेत्यादिपाणिनिसूत्रस्य तदीयसङ्केतग्रहपरतयाप्युपपत्तेः। न हि यूस्त्र्याख्यौनदीत्यनुशासनात्स्त्र्याख्येदूदन्तादिशब्दे नद्यादिपदस्य शक्तिः सिद्ध्यति, किन्तु तदीयसङ्केत एव। अत एव नद्यादिसंज्ञाऽऽधुनिकसङ्केतशालित्वात्पारिभाषिक्येव नत्वौपाधिकी।

---

बोधकतारूपत्वे इत्यर्थः। अतिप्रसक्तत्वादिति। एकत्वशक्तताया इत्यादिः। तस्यैकत्वशक्ततानवच्छेदकत्वादिति शेषः। सुप्त्वादिना साङ्कर्यादिति। सुप्त्वं विहायैकवचनत्वं तिबादौ एकवचनत्वं विहाय सुप्त्वमावादौ उभयोः समावेशः सौ इति। सुप्त्वं जातिः, सुप्पदवाच्यता किञ्चिद्धर्मावच्छिन्नेत्यनुमानसाम्राज्यात्। एतेन जातिसाङ्कर्यमेव जातिबाधकम्, अन्यथा घटजलसंयोगादिना साङ्कर्यात्पृथिवीत्वादिकमपि जातिर्न स्यात्, न हि सुप्त्वस्य जातित्वे मानमित्याक्षेपोपि निरस्तः। साङ्कर्ये सुप्त्वमिवैकवचनत्वमपि जातिर्न स्यादिति भावः। सुप्त्वादिनेत्यादिना मत्वपरिग्रहः। मत्वं विहायैकवचनत्वं सौ एकवचनत्वं विहाय मत्वं म्यामि, उभयोः समावेशोऽमि। कुत्रचित्सुत्वादिनेति पाठः। सुत्वं विहायैकवचनत्वममि एकवचनत्वं विहाय सुत्वं सुखपदघटके सौ उभयोः समावेशः सौ इति। शङ्कते। न चेति। वाच्यमित्यनेनाऽन्वयः। शक्तिसंबन्धेन। स्वजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतासंबन्धेन। तत्। एकवचनत्वम्। तथा चैकवचनपदवत्त्वेनैव "न तु सुत्वादिना स्वाद्यवगाहि" एकवचनपदवत् एकत्वे शक्तमिति शक्तिज्ञानादेकत्वोपस्थितिरिति भावः। तादृशाऽज्ञानदशायामिति। एकवचनपदवदेकत्वे शक्तमिति ज्ञानाभावदशायामित्यर्थः। सुत्वादिना शक्तिभ्रमादिति। सुपदमेकत्वे शक्तमिति शक्तिभ्रमादित्यर्थः। तादृशव्यवहारापत्तेरिति। एकवचनत्वव्यवहारापत्तेरित्यर्थः। परिहरति। ग्रन्थकारीयसङ्केतेनैवेति। एवकारेणेश्वरेच्छाया व्यावृत्तिः। अत एव। पाणिनीयसङ्केतादेव। पारिभाषिक्येवेति। एवकारव्यवच्छेद्यमाह। नत्विति। अत्र शब्दशक्तिप्रकाशिका।

अथैवमपि पाणिनिसङ्केतसंबन्धेन तादृशपदवत्त्वमेव एकत्वादि-शक्ततावच्छेदकमस्त्विति चेन्न। तादृशसङ्केतस्य केन रूपेण संबन्धता। सङ्केतत्वेनेति चेत् तर्हि कस्यचित्पुंस एकवचनपदात्सुऔजसादिर्बोद्धव्य इत्याकारकसंङ्केतस्यापि संभवादतिप्रसक्तिर्दुर्वारैव। पाणिनिसङ्केतत्वेन तथेति चेत् तर्हि व्याकरणप्रणेतुः पुरुषान्तरस्यापि तादृशसंङ्केतस्य संभवात्। तदीयसङ्केतसंबन्धेन तत्पदवत्त्वस्य डित्थादिपदात्सुऔजसा-दिर्बोद्धव्य इत्याकारकपुरुषसङ्केतसंबन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकताप्रसङ्गः। तथाचाऽगत्या आनुपूर्वी-विशेष एव शक्ततावच्छेदक इति।

---

यद्वाऽऽधुनिकसंकेतशालित्वात्पारिभाषिकम्।
जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना। इति।

पुनः शङ्कते। अथेति। एवमपीति। पारिभाषिकत्वेपीत्यर्थः। पाणिनि-सङ्केतसंबन्धेनेति। सङ्केत इच्छा। तथा च तत्पदजन्यबोधविषयत्वप्रकारक-पाणिनिसमवेतेच्छीयविशेष्यतासंबन्धेनेत्यर्थः। तादृशपदवत्त्वमेवेति। एक-वचनपदवत्त्वमेवेत्यर्थः। एवकारेण सुत्वादेर्व्यावृत्तिः। तादृशसङ्केतस्य। पाणिनिसङ्केतस्य। सङ्केतत्वेनेति चेदिति। इच्छात्वेनेति चेदित्यर्थः। सा च स्वमादिरेकवचनपदजन्यबोधविषयो भवतु इत्याकारिका। अतिप्रसक्ति-दुर्वारैवेति। एकवचनपदवत्त्वस्य औजसादावपि सत्वात्तत्रैकत्वशक्तताया अभावादिति भावः। तादृशसङ्केतस्य। एकवचनपदात्स्वमादिर्बोद्धव्य इति सङ्केतस्य। तदीयसङ्केतसंबन्धेन। पुरुषान्तरीयसंबन्धेन। तत्पदवत्त्वस्य। एकवचनपदवत्त्वस्य। अस्य शक्ततावच्छेदकत्वप्रसङ्ग इत्यनेनाऽन्वयः। स्वौजसादिरिति। अत्रादिपदस्य प्रत्येकं संबन्धात्स्वादिः—आवादिः—जसादिरित्यन्वयो बोध्यः। अन्यथा एकत्वशक्तत्वाभाववति आवादौ डित्थादि-पदवत्त्वस्य सत्वेनाऽतिप्रसक्तत्वाद्विनिगमनाविरहादित्यसंगतं स्यात्। वस्तुतः स्वमादिरित्येव पाठो युक्तः। आनुपूर्वीविशेष एवेति। सुत्व-औत्व-जस्त्व-रूपानुपूर्वीविशेष एवेत्यर्थः। एवकारेणैकवचनपदवत्त्वस्य व्यावृत्तिः। यत्त्विति। एकप्रत्ययोपस्थाप्ययोरपि कालकृत्योः परस्परमन्वयबोधादाह। एकप्रकृत्युपस्थाप्ययोरिति। आकाङ्क्षाविरहादिति। न च घटपद-सुपदयोः समभिव्याहाररूपाऽऽकाङ्क्षा अस्त्येवेति वाच्यम्। ययोरर्थयोः परस्परमन्वयबोधः तद्बोधकपदयोरेव समभिव्याहारस्याकाङ्क्षात्वात्। प्रकृते

यत्तु संख्यापि प्रकृतेरर्थः। एकवचनादिकं च एकत्वाद्यर्थे तात्पर्यग्राहकमेव। नचैवमेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकाङ्क्षाविरहाद् घटादावेकत्वाद्यन्वयानुपपत्तिः। अन्यथा हर्यादिपदादुपस्थितयोरश्वसूर्ययोराधाराधेयभावेनाऽन्वयापत्तिः। घटादिपदस्य एकत्वविशिष्टघटादौ च न शक्तिसंभवः, घटरूपं पश्येत्यादौ च संख्यानवच्छिन्नघटादेरेवान्वयबोधादिति वाच्यम्। आकाङ्क्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरपि घटैकत्वयोः परस्परमन्वयसंभवात्। अत एव खण्डशक्त्यैवाकाराद्युपस्थाप्ययोरन्ययोगव्यवच्छेदयोः परस्परमन्वयबोधः। नचैवं कर्मत्वादिकमपि प्रकृत्यर्थ एवास्तु किं तत्र द्वितीयादिशक्त्येति वाच्यम्। नामार्थधात्वर्थयोः साक्षाद्भेदेनाऽन्वयबोधस्याऽव्युत्पन्नतया कर्मत्वादेर्नामार्थत्वे तेन समं धात्वर्थाऽन्वयासंभवात्।

---

च घटैकत्वोपस्थापकपदयोरभावान्नाऽऽकाङ्क्षासंभवः। आकाङ्क्षाविरहे घटैकत्वयोः संसर्गस्य वृत्तिभास्यत्वापत्तेरिति ध्येयम्। अन्यथा। एकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वयबोधे। संख्यानवच्छिन्नघटादेरेवान्वयबोधादिति। न च संख्याविशिष्टघटे घटशब्दस्य शक्तिरस्तु, शुद्ध घटे लक्षणास्तु। अथवा विशिष्टे शुद्धे च शक्तिद्वयमस्तु, तथा च समासस्थले शुद्धशक्त्या विभक्त्यन्तस्थले च विशिष्टशक्त्या विवक्षितार्थप्रतीतिरिति वाच्यम्। विशिष्टे शक्तिकल्पनायां गौरवाल्लाघवात्संख्यामात्रे शक्तिकल्पनाया एवोचितत्वात्। आकाङ्क्षावैचित्र्यादिति। ययोः परस्परमन्वयस्तदुपस्थापकस्यैकस्यैव पदस्यानुपूर्व्या एवाकाङ्क्षात्वादिति भावः। अन्वयसंभवादिति। तथा चैकत्वे घटे च खण्डशक्तिरिति भावः। अत एव। आकाङ्क्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वयबोधादेव। परस्परमन्वयबोध इति। व्यवच्छेदे अन्ययोगस्य प्रतियोगितासंबन्धेनान्वयबोध इत्यर्थः। एवं। संख्यायाः प्रकृत्यर्थत्वे। धात्वर्थान्वयासंभवादिति। नचैवं घटघटत्वयोः संख्याप्रकृत्यर्थयोश्च कथं भेदेनाऽन्वय इति वाच्यम्। नामार्थयोरित्यनेन नामद्वयार्थयोरिति विवक्षणात्। वस्तुतो नामार्थयोरित्यत्र द्विवचनार्थद्वित्वस्य नामार्थत्वघटकवृत्तावेव फलतोऽन्वयाद् घटघटत्वयोरेकवृत्त्यैव नामार्थत्वाद् भेदेनान्वयोपपत्तिः। प्रातिपदिकार्थत्वे। संख्याया विभक्त्यर्थत्वे तु द्विवचनान्तपदान्नैकत्वबोधापत्तिः, एकत्वबोधकैकवचनस्याऽभावात्। सति तात्पर्यज्ञाने। घटपदमेकत्वविशिष्टघटं बोधयतु इत्याकारके। एकत्वादिबोध-

न च संख्यायाः प्रातिपदिकार्थत्वे सति तात्पर्यज्ञाने विनैव शक्तिभ्रमं लक्षणाग्रहं वा द्विवचनाद्यन्तपदादेकत्वादिबोधसंभवात्, एकत्वादितात्पर्येण एकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य स्वारसिकप्रयोगापत्तिरिति वाच्यम्। अनादितात्पर्यस्यैव स्वारसिकप्रयोगमूलत्वादेकवचनाद्यन्तपदस्यैव एकत्वादावनादितात्पर्योपगमेनातिप्रसङ्गविरहात्। द्व्येकयोर्द्विवचनैकवचने इत्याद्यनुशासनं च तादृशतात्पर्यग्राहकमेवेति वैयाकरणमतम्।

तदसत्। अनन्तानां प्रकृत्यानुपूर्वीणां शक्ततावच्छेदकत्वापेक्षया अल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यैवोचितत्वात्। न च प्रातिपदिकत्वमेव शक्ततावच्छेदकं न तु घटपदत्वादिकमिति न शक्त्यानन्त्यमिति वाच्यम्। प्रातिपदिकत्वस्य दुर्निर्वचत्वात्। तदज्ञानेपि एकत्वादिज्ञानस्यानुभविकत्वात्। पदत्वेन वर्णत्वेन वा शक्तत्वे विभक्तेरपि तद्वाचकतासिद्धेः। एकत्वादिशाब्दबोधात्पूर्वं वर्णत्वाद्युपस्थितेरनावश्यकत्वात्। फलानुरोधेन तत्कल्पने च कल्पनागौरवात्। एवमानुपूर्वीधर्मस्य वाचकतावच्छेदकत्वे घटपदं सुपदं च न संख्यावाचकमिति विपरीतनिश्चयकालेपि तादृशधर्मावच्छिन्नस्य वाचकताग्रहसंभवाद् घट इत्यादौ संख्याया बोधापत्तिः।

---

संभवादिति। प्रकृतेरेवैकत्वसंख्याबोधकत्वस्वीकारात्तस्याश्च द्विवचनान्तप्रयोगेपि सत्वादितिभावः। स्वारसिकप्रयोगापत्तिरिति। स्वतो रसः-इच्छा-बुबोधयिषा इति यावत्। तस्यां स्वतस्त्वं च शक्तिभ्रमाऽजन्यलक्षणाग्रहाजन्यत्वे सति प्रयोजनानुसन्धानाजन्यत्वम्। तादृशबुबोधयिषाधीनप्रयोगः स्वारसिकप्रयोगः। एकत्वतात्पर्येण घटौ इति प्रयोगोपि शक्तिभ्रमानधीनतया "गङ्गायां घोष इत्यादौ शैत्यपावनादिप्रतिपत्तिवत्" प्रयोजनानुसन्धानाजन्यतया च स्वारसिकः प्रयोगः स्यादिति भावः।

अनादितात्पर्यमूलकत्वमेव स्वतस्त्वम्, लाघवात्। तथा च घटौ इत्यस्यानादितात्पर्यमूलकबुबोधयिषाजन्यत्वाभावान्न स्वारसिकत्वमित्याह। अनादितात्पर्यस्येति। एकवचनाद्यन्तपदस्यैवेति। एवकारेण द्विवचनाद्यन्तपदस्य व्यावृत्तिः। अतिप्रसङ्गविरहादिति। द्विवचनान्तपदस्य स्वारसिकप्रयोगापत्तिविरहादित्यर्थः। एकवचनान्तपदस्यैवैकत्वादावनादितात्पर्यंन्तु द्विवचनान्तपदस्येत्यत्र मानमाह द्व्येकयोरिति। तादृशेति। अनादीत्यर्थः। एकवचनान्तप-

अथ विभक्तीनां संख्यार्थकतामते प्रकृतिविभक्त्योरेकवाक्यताविरह-निश्चयदशायां विभक्त्युपस्थाप्यैकत्वादेः प्रकृत्यर्थेऽन्वयबोधवारणाय तयोः समभिव्याहारज्ञानस्य घटादिविशेष्यकैकत्वान्वयबोधं प्रति कारण-त्वमधिकं कल्पनीयम्। एकपदोपस्थापितयोर्घटैकत्वयोरन्वयबोधोपगमे च न समभिव्याहारज्ञानस्य तत्र हेतुता कल्प्यते इति लाघवात्प्रकृत्या-द्यानुपूर्वीणां संख्यावाचकतावच्छेदकत्वमुपेयते इति चेन्न आकाङ्क्षा-विचारे समभिव्याहाराकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात्।

---

घटादितात्पर्यस्याऽनादित्वे सूत्रेण बोधिते घटादिविशेष्यकैकत्वप्रकारकबोधे स्वाद्यन्तघटपदधर्मिकतात्पर्यज्ञानस्य घटः इत्यानुपूर्वीज्ञानस्य वा हेतुतया घटौ इति वाक्यादेकत्वप्रकारकघटविशेष्यकशाब्दबोधस्याऽनिष्टत्वादिति भावः। दुर्निर्वचत्वादिति। निरूपयितुमशक्यत्वादिति भावः। धातुप्रत्ययप्रत्ययान्त-भिन्नार्थावच्छेदकत्वस्य, प्रथमानिष्ठविशेष्यतानिरूपिताव्यवहितोत्तरत्वसंबन्धा-वच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वरूपस्य वा प्रातिपदिकत्वस्य सुवचत्वादाह। एतदज्ञानेपीति। घटपदं प्रातिपदिकमिति ज्ञानाभावेपीत्यर्थः। आनुभविकत्वादिति। तथा च येनरूपेण यस्य ज्ञानान्नियमतो यद्बोधः तद्रूपस्यैव तत्र शक्ततावच्छेदकत्वं तच्च सुत्वादिरूपानुपूर्व्या एवेति भावः। पदत्वेनेति। ननु पदत्वं शक्तिमत्त्वं तच्च शक्तेरेव शक्ततापि शक्तिरूपैव। तथा च शक्ततावच्छेदकं पदत्वं न संभवति। अवच्छेद्यावच्छेदकयोरैक्याल्लाघवाच्चाह। वर्णत्वेन वेति। तद्वाचकतासिद्धेरिति। एकत्ववाचकतासिद्धेरित्यर्थः। प्रातिपदिकपक्षोक्तदोषं स्मारयति। एकत्वादिति। अनावश्यकत्वाच्चेति। अभावादित्यर्थः। समाधानान्तरमाह। एवमिति। आनुपूर्वीभिन्नधर्मस्य। वर्णत्वस्य। तादृशेति। वर्णत्वेत्यर्थः। वाचकताग्रहसंभवादिति। वर्णत्वावच्छिन्नधर्मिक-संख्यावाचकताग्रहसंभवादित्यर्थः। एकधर्मावच्छिन्ने वाचकत्वाभावग्रहस्याऽ-न्यधर्मावच्छिन्ने वाचकत्वग्रहाविरोधित्वादिति भावः।

संख्यायाः प्रकृत्यर्थत्वमेव व्यवस्थापयितुं शंकते। अथेति। एकवाक्य-ताविरहनिश्चयदशायामिति। प्रकृतिप्रत्यययोः संभूयैकार्थप्रतीतीच्छयोच्चरि-तत्वाभावनिर्णयदशायामित्यर्थः। एकवाक्यत्वं च संभूयैकार्थप्रतीतीच्छयो-च्चरितत्वम्। निरूप्यनिरूपकभावापन्न"पदार्थद्वय"विषयताकबोधजनन-योग्यत्वम्। तदुत्थाप्याकाङ्क्षानिवर्तकत्वम्, तन्निवर्तनीयाकाङ्क्षोत्थापका-न्यतरवत्त्वं वा। तत्प्रयोज्यविषयतया साक्षात्परंपरया वा निरूपिता या विषयता

अथैवमपि विभक्तेः संख्यार्थकत्वे विनिगमनाविरहेण प्रकृतिधर्मिकस्य विभक्तिधर्मिकस्य च संख्याप्रकारकान्वयबोधपरत्वज्ञानस्य हेतुता कल्पनीया।

---

तत्प्रयोजकत्वमिति स्वयमेव वक्ष्यति। शाब्दबोधशरणायेति। ययोः पदयोः संभूयैकार्थप्रतीतीच्छयोच्चरितत्वाभावनिर्णयः तत्तदर्थयोरन्वयबोधो न भवतीत्यनुभवसिद्धमिति भावः। तयोः। प्रकृतिप्रत्यययोः। समभिव्याहारज्ञानस्येति। इदं पदमनेन सहाऽन्वयबोधं जनयतु इतीच्छयोच्चरितत्वज्ञानस्येत्यर्थः। तादृशज्ञानस्य एकार्थप्रतीतीच्छयोच्चरितत्वाभावरूपैकवाक्यताविरहनिश्चयविरोधित्वादिति भावः। एतेन समभिहारो यदि पौर्वापर्यमात्रं तदोक्तैकवाक्यताविरहज्ञानकालेपि तद्ज्ञानसंभवेनोक्तापत्तेः समभिहारज्ञानकारणत्वकल्पनेपि वारणाऽसंभवादिति निरस्तम्। तत्र। घटविशेष्यकैकत्वप्रकारकान्वयबोधे। न कल्प्यते इति। प्रथमायास्तात्पर्यग्राहकत्वाभावादप्रयोगसाधुत्वार्थकत्वाच्च, साधुत्वार्थमुच्चरितत्वेनाऽर्थप्रतीतीच्छयोच्चरितत्वाभावेन एकवाक्यताविरहग्रहेऽपि शाब्दबोधस्येष्टत्वाच्छक्तिविरहे पदत्वाभावेन समभिव्याहाराभावान्न तद्ग्रहस्य हेतुत्वं कल्प्यते इत्यर्थः। निराकृतत्वादिति। विभक्तेः संख्यावाचकतापक्षेपीति शेषः। आकाङ्क्षाविचारे घटः कर्मत्वं आनयनं कृतिरित्यादौ घटकर्मकानयनानुकूलकृतिप्रकारकशाब्दबोधवारणाय, अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ राज्ञः पुरुष इति नैकं वाक्यमिति निश्चयेपि आसत्तियोग्यताऽऽकाङ्क्षादेः सत्त्वाच्छाब्दबोधवारणाय च समभिव्याहारज्ञानस्य कारणत्वं व्यवस्थापितम्। एवमपि नानार्थकशब्दानुरोधेन तात्पर्यज्ञानस्य हेतुत्वमावश्यकम्, तात्पर्यं च इदं वाक्यमेतदर्थान्वितैतदर्थविषयताकबोधं जनयतु इतीच्छारूपम्, तथा च तादृशेच्छयोच्चरितत्वबुद्धेः कारणत्वं फलितम्। न तु इदं पदमेतदर्थबोधेच्छयोच्चरितमिति तात्पर्यज्ञानस्य, नानार्थकानेकपदघटितवाक्यस्थलेऽनेककारणत्वापत्तेः पदतात्पर्यस्याऽनेकत्वात्। तथा च सति अयमेति पुत्रोराज्ञः पुरुषोपसार्यतामित्यादौ निरुक्तैकवाक्यताविरहनिश्चयदशायां राजसंबन्धान्वितपुरुषबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानरूपकारणाभावेनैव शाब्दबोधस्याऽसंभवः, सति च तात्पर्यग्रहे एकवाक्यत्वस्य समभिव्याहारस्य वा संशये व्यतिरेकनिश्चये वा शाब्दबोध इष्ट एवेति न समभिव्याहारज्ञानं कारणम्। तात्पर्यघटकवाक्यत्वं पूर्वापरीभूतपदसमूहत्वमेवेति ध्येयम्।

विभक्तेर्द्योतकत्वमते तु विभक्तितात्पर्यविरहेण प्रकृतिधर्मिकमेव तात्पर्यज्ञानं तादृशान्वयधीहेतुरिति लाघवमिति चेन्न। विभक्तेः संख्यावाचकताविरहेपि प्रकृतिविभक्त्योरानुपूर्वीज्ञानस्य तादृशान्वयबोधहेतुताया निर्विभक्तिकादिपदज्ञानादन्वयबोधवारणायावश्यकल्पनीयतया संख्यावाचकप्रकृतेरिव तदवाचकविभक्तेरपि संख्यान्वयबोधकत्वप्रकारकेच्छाविषयत्वरूपतादृशबोधपरत्वसंभवेन विभक्तिधर्मिकतद्ज्ञानहेतुताया विनिगमनाविरहेणाऽऽवश्यकत्वात्।

अथ स्वादीनां संख्यावाचकत्वकल्पनापेक्षया प्रकृतेस्तत्र लक्षणैवोचिता, शक्यलक्ष्ययोः परस्परमन्वयोपगमे क्षतिविरहात्, प्रथमाविभक्तेः कुत्रापि शक्तेरक्लृप्ततया तस्या शक्यसंबन्धरूपालक्षणा न संभवति, द्वितीयादेः कर्मत्वादौ शक्तत्वेपि तादृशविभक्तेस्तत्समभिव्याहृतप्रकृतेर्वा संख्यायां लक्षणेत्यत्र विनिगमकं दुर्लभम्।

---

एवमपीति। तात्पर्यज्ञानस्य कारणत्वमाश्रित्य समभिव्याहारज्ञानस्याकारणत्वे तत्प्रयुक्तगौरवविरहेपीत्यर्थः। हेतुताकल्पनीयेति। घटपदं घटविशेष्यकैकत्वप्रकारकबोधेच्छयोच्चरितम्, एवं सुपदं तादृशबोधेच्छयोच्चरितमित्याकारकतात्पर्यज्ञानस्य हेतुता कल्पनीयेत्यर्थः। प्रकृतिधर्मिकमेव तात्पर्यज्ञानमिति। प्रकृतिः संख्याप्रकारकान्वयबोधं जनयतु इत्याकारकतात्पर्यज्ञानमेवेत्यर्थः। तादृशेति। घटादिविशेष्यकसंख्याप्रकारकेत्यर्थः। आनुपूर्वीज्ञानस्य। घटः इति घटपदाव्यवहितोत्तरसुत्वरूपानुपूर्वीज्ञानस्य वेत्यर्थः। तादृशेति। घटादिविशेष्यकसंख्याप्रकारकेत्यर्थः। निर्विभक्तिकादिपदज्ञानादिति। घटरूपमित्याकारकादित्यर्थः। विभक्तिधर्मिकतद्ज्ञानहेतुतायाः। विभक्तिधर्मिकतात्पर्यज्ञानहेतुताया इत्यर्थः। तात्पर्यज्ञानं च घटपदसमभिव्याहृतसुपदं संख्याप्रकारकान्वयबोधजनकं भवतु इत्याकारकम्। आवश्यकत्वादिति। तात्पर्यज्ञानस्य शक्त्यघटितत्वेन विभक्तेरवाचकत्वेपि सुपदमेकत्वप्रकारकबोधेच्छयोच्चरितमिति तात्पर्यग्रहसंभवादिति भावः। अथ तात्पर्यज्ञानस्य कारणत्वे मानाभाव इति चेद्। सैन्धवमानयेत्यादौ नानार्थकस्थले लवणाश्वयोरुपस्थितावपि एकस्यैव कस्यचिदर्थस्य बोध इत्यत्र नियामकं किञ्चित्कल्पनीयं तदेव तात्पर्यम्, तद्ज्ञानस्याकारणत्वे तस्य नियामकत्वाऽसंभवात्तद्ज्ञानं कारणम्। किं चान्यार्थपरत्वज्ञाने तदर्थबोधानुत्पादात्तदर्थबोधेऽन्यार्थपरत्वज्ञानस्य प्रतिबन्धकत्वे तदभावस्य कारणत्वे च गौरवात्तात्पर्य-

न चैकत्वाद्यन्वयबोधे घटपदादिज्ञानजन्योपस्थितित्वेनानन्तहेतुताकल्पनमपेक्ष्य स्वादिपदज्ञानजन्यतदुपस्थितित्वेन कतिपयहेतुताकल्पनायां लाघवात्, कतिपयशक्तिकल्पने गौरवमकिञ्चित्करम्। सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वेनैककारणताकल्पनं तु न सम्यक्। निर्विभक्तिककुम्भपदादितः संख्योपस्थितौ तदगृहीतवृत्तिकघटादिपदे तत्तद्विभक्त्यन्तत्वज्ञानवतः पुंसो घटादौ संख्यान्वयबोधप्रसंगात्। घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनैकत्वादिविषयकशाब्दबोधहेतुतां कल्पयित्वा विभक्तिघटादिपदानुपूर्वीज्ञान-तादृशोपस्थित्योः परस्परसहकारेण फलजनकताया अवश्याभ्युपेयत्वादिति वाच्यम्।

---

ज्ञानस्यैव कारणत्वे लाघवम्। न च तत्कारणप्रकरणज्ञानस्यैव कारणत्वमस्तु इति वाच्यम्। प्रकरणस्यानन्त्यात् तात्पर्यज्ञानजनकत्वेनानुगमे तु लाघवात्तात्पर्यज्ञानस्यैव कारणत्वात्। नचैवं नानार्थकस्थले एव तत्कारणमस्तु इति वाच्यम्। यद्विशेषयोरिति न्यायेन सर्वत्र तत्सिद्धेः। नव्यास्तु तात्पर्यज्ञानस्य कारणत्वम् अवच्छेदावच्छेदेन सामाधिकरण्येन वा। नाद्यः सैन्धवमानयेति वाक्यत्वावच्छिन्नधर्मिकलवणाद्यर्थपरत्वज्ञानत्वेन कारणत्वेऽवच्छेदकावच्छेदेन तद्ग्रहस्य नियमतो भ्रमत्वात्। नापि द्वितीयः—सामानाधिकरण्येन तात्पर्यग्रहस्य इदं वाक्यं न लवणपरमिति ग्रहेपि संभवेन तदानीमपि तच्छाब्दबोधापत्तेः। किन्तु इदं वाक्यमेतत्परमिति ज्ञानत्वेनैव कारणत्वं वाच्यम्, तच्च तत्तद्वाक्यभेदेन भिन्नमिति तत्कारणीभूतप्रकरणव्यक्तेरेव तथात्वमुचितम्। नचाऽस्मिन्पक्षे प्रकृतग्रन्थासंगतिः। प्रकृतग्रन्थस्य विभक्तेः संख्यावाचकत्वेऽधिककारणत्वाभावे एव मुख्यतात्पर्यादिति वदन्ति।

तत्र। संख्यायां। लक्षणैवेति। एवकारेण विभक्तेः संख्यावाचकत्वव्यावृत्तिः। क्षतिविरहादिति। न चैकशब्दाद्युगपद्वृत्तिद्वयोपस्थापितयोरर्थयोर्नान्वयबोधः। अन्यथा घटपटौस्त इति प्रयोगस्थले घटौ स्तः पटौस्त इत्यपि प्रयोगो युक्तः स्यात्, शक्त्या घटस्य लक्षणया पटस्य भानसंभवादिति वाच्यम्। एकवृत्त्युपस्थापितयोरन्ययोगव्यवच्छेदयोरप्याकाङ्क्षावैचित्र्येणान्वयः स्वीक्रियते, तथैवाऽऽकाङ्क्षावैचित्र्येण प्रकृतेपि तत्स्वीकारे क्षतिविरहात्। संख्यातिरिक्तविषयकबोधस्थले एव युगपद्वृत्तिद्वयानङ्गीकारः फलानुरोधेन कल्प्यते इति भावः। ननु संख्यायां विभक्तेरेव लक्षणाऽस्तु इत्यत आह। प्रथमाविभक्तेः कुत्रापीति। इदं च विशेषणविभक्तेर्नाऽभेदार्थकत्वमिति मतेन। तादृशविभक्तेः। द्वितीयाविभक्तेः।

घटादिपदस्यैकत्वादौ लक्षणाग्रहसत्त्वे घटः प्रमेय इति वाक्यात् एकत्वं प्रमेयम्, इत्याद्यन्वयबोधस्य सर्वसंमततया तदनुरोधेनैकत्वादि विषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुतायाः सर्वसम्मतत्वात्।

तत्समभिव्याहृतेति। द्वितीयासमभिव्याहृतेत्यर्थः। दुर्लभमिति। प्रथमाविभक्तिस्थले संख्यायां प्रकृतेः, अन्यत्र द्वितीयादिविभक्तेरिति वैषम्यं च बोध्यम्।

लाघवात्संख्यायां विभक्तेः शक्तिरेव स्वीकर्तव्येति शंकते। नचेति। कतिपयशक्तिकल्पते गौरवमकिंचित्करमिति। अनन्तप्रकृतीनां लक्षणापेक्षया कतिपयविभक्तीनां शक्तिकल्पने लाघवादिति भावः। ननु एकत्वादिसंख्याप्रकारकबोधे न घटपटादिवृत्तिज्ञानजन्यैकत्वाद्युपस्थितित्वेन कारणता किन्तु सामान्यतः पदवृत्तिज्ञानजन्यैकत्वाद्युपस्थितित्वेनेति न गौरवमत आह। सामान्यत इति। निर्विभक्तिककुम्भपदात्। कुम्भरूपमित्यत्र निर्विभक्तिककुम्भपदात्। तदगृहीतेति। एकत्वसंख्याद्यगृहीतेत्यर्थः। घटादौ संख्यान्वयबोधप्रसंगादिति। घटपदात्संख्याया अनुपस्थितत्वेपि कुम्भपदादुपस्थितत्वात् सामान्यतः पदवृत्तिज्ञानजन्यसंख्योपस्थितेरेव कारणत्वादिति भावः। तद्वारणायेति शेषः। घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनेति सावधारणम्। तेन सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वस्य व्यावृत्तिः। विभक्तिघटादिपदानुपूर्वीज्ञानेति। घटपदाव्यहितोत्तरसुत्वरूपानुपूर्वीज्ञानेत्यर्थः। तेन निर्विभक्तिकघटादिपदान्न संख्यान्वयबोधः। तादृशोपस्थित्योरिति। घटाद्युपस्थिति-एकत्वाद्युपस्थित्योरित्यर्थः। परस्परसहकारेणेति। तथा च घटविषयकोपस्थितेः—एकत्वविषयकोपस्थितेश्च घटविशेष्यकैकत्वप्रकारकशाब्दबोधजनने घटपदोत्तरसुत्वरूपानुपूर्वीज्ञानं सहकारीत्यर्थः। अवश्याभ्युपेयत्वादिति। तथा चाऽनन्तप्रकृतिजन्योपस्थितित्वेन हेतुत्वकल्पनापेक्षया कतिपयस्वादिविभक्तिजन्यैकत्वाद्युपस्थितित्वेन हेतुत्वे लाघवमिति भावः। प्रकृतीनामनन्तत्वेपि प्रकृतिजन्यैकत्वोपस्थितेः कारणत्वमावश्यकमित्याह। घटादिपदस्येति। सर्वसम्मतत्वादिति। तथा च संख्यायाः प्रकृत्यर्थत्वमेव युक्तमिति भावः।

"अथ स्वादीनां संख्यावाचकत्वकल्पनापेक्षया प्रकृतेर्लक्षणैवोचिता" इत्यादिनाऽऽशङ्कितं परिहरति। मैवमिति। तच्छाब्दबोधहेतुत्वकल्पनम्।

मैवम्। यादृशयादृशपदानां लक्षणाया एकत्वादिशाब्दधीजनकत्वं नोभयवादिसिद्धं तादृशानन्तपदज्ञानजन्यैकत्वाद्युपस्थितीनां तच्छाब्द-हेतुत्वकल्पनं प्रकृतेः संख्यावाचकतावादिनामधिकमिति तत्कल्पनापेक्षया चाल्पतरत्वादिपदजन्यैकत्वाद्युपस्थितिहेतुताकल्पनमेव लाघवम्।

एतेन संख्याविशेषावच्छिन्नघटादिर्लक्षणया प्रकृतेरर्थः। न तु संख्याविभक्त्यर्थः। शाब्दबोधे विभक्तिजन्यसंख्योपस्थितिहेतुता-कल्पनाधिक्येन गौरवात्। घटादिपदस्यैकत्वादिविशिष्टघटादौ लक्षणा-ग्रहदशायां सर्वमते एव तज्जन्यविशिष्टविषयकोपस्थित्या विशिष्ट-विषयकशाब्दधीजननात्तथाविधोपस्थितिहेतुतायाः सर्वानुमतत्वात्। पदान्तराऽसमभिव्याहृताद् घट इत्यादिपदादेकत्वादिविशिष्टघटादि-शाब्दबोधस्त्वलीक एव। तद्विषयकस्मरणस्य तत्रोपगमात्। तथाचोक्तं सर्वं हि वाक्यं क्रियायां परिसमाप्यते इत्यपि निरस्तम्। यादृशपदानां लक्षणया एकत्वादिविशिष्टस्वार्थबोधहेतुत्वं नोभयवादिसिद्धं तादृशा-नन्तपदजन्यविशिष्टोपस्थितीनां शाब्दबोधहेतुताकल्पनामपेक्ष्य विभक्ति-जन्यसंख्योपस्थितीनामल्पानां तत्कल्पने लाघवात्।

---

एकत्वादिसंख्याविषयकशाब्दबोधहेतुत्वकल्पनम्। तत्कल्पनापेक्षयेति। प्रकृतिजन्यैकत्वाद्युपस्थितिकल्पनापेक्षयेत्यर्थः। एकशब्दाद्वृत्तिद्वयकल्पने वृत्तिद्वयोपस्थापितयोरर्थयोः परस्परमन्वयबोधे च गौरवमतोघटादिपदानामे-कत्वविशिष्टघटादौ लक्षणास्वीकर्तृणामतमुपन्यस्य दूषयति। एतेनेति। वक्ष्यमाणदोषेणेत्यर्थः। प्रकृतेरर्थइति। तथा च लक्षणारूपैकवृत्त्या शाब्दबोधः संपद्यते इति भावः। सर्वानुमतत्वादिति। तथा च नातिरिक्तवृत्ति-कल्पनापीतिभावः। ननु घट इत्यादौ घटपदस्यैव एकत्वविशिष्टघटलक्षकत्वे शाब्दबोधानुपपत्तिः। शाब्दबोधस्य पदार्थद्वयसंसर्गावगाहित्वनियमात्। अतो घटादिपदाद् घटस्य, एकवचनाच्चैकत्वस्योपस्थितिः स्वीकार्येति विभक्ति-जन्यैकत्वोपस्थितिः क्लृप्तैव। तथा च तत्रैव गौरवमत आह। पदान्तराऽ-समभिव्याहृतादिति। तद्विषयकस्मरणस्येति सावधारणम्। एकत्व-विशिष्टघटविषयकस्मरणस्यैवेत्यर्थः। तत्र। पदान्तरासमभिव्याहृतस्थले। उपगमादिति। शब्दसमनन्तरजायमानत्वरूपदोषवशादुपस्थितौ शाब्दत्वानु-भवस्य शाब्दयामीत्याकारकस्य भ्रमत्वादिति भावः। एतेनेत्यनेन सूचितं दोषं सूचयति। यादृशपदानामिति। उपदर्शितलाघवं विभक्तेः संख्या-

इदं पुनरिहावधेयम्। विभक्तेः संख्याबोधकत्वे समानविषयकानुमित्यादिकं प्रति शाब्दसामग्रीप्रतिबन्धकतायां या प्रातिपदिकजन्या घटाद्युपस्थितिर्या च विभक्तिजन्या संख्योपस्थितिः प्रवेश्या तयोश्च मिथो विशेष्यविशेषणभावे विनिगमनाविरहात्प्रतिबन्धकताबाहुल्यम्। प्रकृतेर्विशिष्टलाक्षणिकत्वे तु तदुभयस्थलीयविशिष्टविषयकोपस्थितिरेकैव सामग्र्यामन्तर्भवतीति लाघवम्। न च विशिष्टविषयकोपस्थितेरपि एकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादिप्रकारताशालित्वेन वा प्रवेश इति विनिगमनाविरहात्साम्यमिति वाच्यम्। भवन्मते योग्यताज्ञान-घटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कम्।

मन्मते तत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं दर्शितोभयरूपेण वैशिष्ट्यं निवेश्य तदुभयं प्रत्येकं तादृशरूपद्वयावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्य च द्वयमिति तच्चतुष्टयमात्रमिति रीत्याऽस्माकमल्पतरतत्कल्पने महल्लाघवम्।

---

वाचकत्वसाधनाय नालम्, विभक्तेः संख्यावाचकत्वे गौरवं दर्शयति। इदं पुनरिहावधेयमिति। समानविषयकानुमित्यादिकं प्रतीति। आदिना भिन्नविषयकप्रत्यक्षपरिग्रहः। तयोश्चेति। घटपदजन्यघटोपस्थितिविभक्तिजन्यैकत्वोपस्थित्योश्चेत्यर्थः। विनिगमनाविरहादिति। घटपदजन्योपस्थितिविशिष्टविभक्तिजन्यसंख्योपस्थितेः प्रतिबन्धकत्वमुत विभक्तिजन्यसंख्योपस्थितिविशिष्टघटपदजन्योपस्थितेः प्रतिबन्धकत्वमिति विनिगमनाविरहो बोध्यः। प्रकृतेः। घटपदस्य। विशिष्टलाक्षणिकत्वे त्विति। एकत्वविशिष्टघटे लाक्षणिकत्वे तु इत्यर्थः। तदुभयस्थलीयेति। घटादिप्रकृत्यर्थविषयकसंख्याविषयकोभयस्थानीयेत्यर्थः। विशिष्टविषयकोपस्थितिरेकैवेति। संख्याविशिष्टप्रकृत्यर्थविषयकोपस्थितिरेकैवास्तीत्यर्थः। सामग्र्यां। एकत्वप्रकारकघटविशेष्यकशाब्दबोधसामग्र्याम्। एवं समानविषयकानुमितिप्रतिबन्धकसामग्र्यामित्यपि बोध्यम्। भवन्मते। संख्याया विभक्त्यर्थत्वमते। प्रतिबध्यप्रतिबन्धकभावषट्कमिति। यथा—१ योग्यताज्ञानविशिष्टघटोपस्थितिर्विशिष्टैकत्वोपस्थितेः। २ योग्यताज्ञानविशिष्टैकत्वोपस्थितिविशिष्टघटोपस्थितेः। ३ घटोपस्थितिविशिष्टयोग्यताज्ञानविशिष्टैकत्वोपस्थितेः। ४ एकत्वोपस्थिति-

विशिष्टयोग्यताज्ञानविशिष्टघटोपस्थितेः । ५ घटोपस्थितिविशिष्टैकत्वोपस्थितिविशिष्टयोग्यताज्ञानस्य । ६ एकत्वोपस्थितिविशिष्टघटोपस्थितिविशिष्टयोग्यताज्ञानस्येतिषट्कप्रतिबध्यप्रतिबन्धकभावाः । मन्मते । संख्याविशिष्टप्रकृत्यर्थे लक्षणास्वीकर्तृमते । तत्र । सामाग्र्यां । विशिष्टविषयकोपस्थितेः । संख्याविशिष्टप्रकृत्यर्थघटादिविषयकोपस्थितेः । दर्शितोभयरूपेण । घटनिष्ठविशेष्यतानिरूपितएकत्वप्रकारताशालित्वेन — एकत्वप्रकारतानिरूपितघटविशेष्यताशालित्वेनेत्यर्थः । तदुभयं । प्रतिबन्धकताद्वयम् । तादृशोपस्थितिद्वयविशिष्टयोग्यताज्ञानमिति प्रतिबन्धकताद्वयम् । द्वयमिति । योग्यताज्ञानविशिष्टतादृशोपस्थितिद्वयमिति प्रतिबन्धकताद्वयमित्यर्थः । तच्चतुष्टयमात्रमिति । प्रतिबन्धकताचतुष्टयमित्यर्थः । यथा—१ एकत्वप्रकारतानिरूपितघटविशेष्यताशाल्युपस्थितिविशिष्टयोग्यताज्ञानस्य । २ घटविशेष्यतानिरूपितैकत्वप्रकारताशाल्युपस्थितिविशिष्टयोग्यताज्ञानस्य । एवं योग्यताज्ञानविशिष्टतादृशोपस्थितिद्वयस्येति । अस्माकं । संख्याविशिष्टप्रकृतौ लक्षणावादिनां । अल्पतरतत्कल्पने । अल्पसंख्याकप्रतिबन्धकताकल्पने महल्लाघवमिति[1]प्रादय उपसर्गा अपि न प्रकर्षादिवाचकाः तेषां प्रकर्षादिवाचकत्वे शाब्दबोधसामग्र्यां प्रादिजन्यप्रकर्षाद्युपस्थितेः प्रवेशात्तस्याश्च समानविषयकानुमितिं प्रति प्रतिबन्धकत्वे योग्यताज्ञानेन सह विशेष्यविशेषणभावे विनिगमनाविरहात्प्रतिबन्धकताबाहुल्यं स्यादतो धातोरेव प्रकर्षादिविशिष्टधात्वर्थे लक्षणेत्याशयेनाह । तादृशरीत्यैव चेति । घट इत्यादौ प्रदर्शितरीत्यैव चेत्यर्थः । रीतिं दर्शयति । धातूनामेवेति । एवकारेण प्रादेरुपसर्गस्य व्यावृत्तिः । द्योतका एवेति । एवकारव्यावृत्तमाह । नत्वित्ति । प्रकर्षादिवाचकत्वे योग्यताज्ञान—उपसर्गजन्यप्रकर्षोपस्थिति—धातुजन्यनमनोपस्थितीनां विशेष्यविशेषणभावे विनिगमनाविरहात्प्रतिबन्धकत्वषट्कं स्यात् । प्रकर्षविशिष्टनमने धातोर्लक्षणापक्षे तु प्रतिबन्धकत्वचतुष्टयमात्रं बोध्यम् । अन्यथा । उक्तलाघवास्वीकारे । तज्जनकताकल्पने । शाब्दधीजनकताकल्पने ।

---

१ इदमत्रविचारणीयम् । शक्तिग्राहकप्रमाणानि शब्दविशेषस्यार्थविशेषे शक्तिं निश्चिन्वन्ति । तत्र शक्ततावच्छेदक-शक्यतावच्छेदकयोरेव लाघवगौरवापेक्षा । नत्वन्यत्र "कार्यकारणभावे" । शक्ततावच्छेदक-शक्यतावच्छेदकयोः शक्तिघटकत्वात् । घटपदाद् घटो बोद्धव्य इत्याकारिकया शक्त्या तयोर्विषयीकरणात् । शक्तिग्रहेऽन्तरङ्गत्वात्तयोरेवोपस्थितिध्रौव्येण तयोरेव लाघवगौरवग्रहस्यापेक्षणीयत्वात् । अन्यस्य तदानीमनुपस्थितत्वेन तल्लाघवगौरवग्रहस्याऽनपेक्षणीयत्वाच्च ।

तादृशरीत्यैव च प्रणमतीत्यादौ प्रकर्षविशिष्टनतिर्धातूनामेवार्थः। प्रादयो द्योतका एव न तु प्रकर्षादिवाचकाः इति सर्वानुमतः पन्थाः परिष्कर्तुं शक्यते। अन्यथा अनन्तधातुजन्यप्रकर्षादिविशिष्टतत्तत्स्वार्थोपस्थितीनां शाब्दधीजनकतामपेक्ष्य कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवात् स्वादीनामिव प्रादीनामपि वाचकता निराबाधा सिद्ध्येतेति।

---

पर्याप्तिसंबन्धेनैवेति। एवकारव्यवच्छेद्यमाह। नत्विति। तथासति। समवायादिना संख्याया विशेषणत्वे। आकाशपदस्य लक्षणया घटाकाशपरत्वे द्विवचनान्तप्रयोगस्येष्टत्वादाह। एकव्यक्तिबोधपरादिति। तत्तदर्थयोः। द्विवचनबहुवचनार्थयोः। तद्दोषत्वादवस्थ्यमिति। द्विवचनबहुवचनापत्ति-

---

अत एव कार्यान्वितघटत्वं न शक्यतावच्छेदकं। व्यवस्थितायां च शक्तौ पश्चाज्जायमानापि गौरवबुद्धिः फलमुखगौरवविषयकत्वादकिञ्चित्करी। अत एव प्रमाणेन शब्दस्याऽनित्यत्वे सिद्धे पश्चाज्जायमानापि तद्ध्वंसतत्प्रागभावानन्त्यकल्पनागौरवबुद्धिरकिञ्चित्करी। एवं च घट आनीयतां घटमानय घटावानय छात्रान्पाठय तण्डुलैर्ब्राह्मणान्भोजयेत्यादौ द्व्येकयोर्द्विवचनैकवचने-बहुषुवचनं-कर्मणिद्वितीया-कर्तृकरणयोस्तृतीयेत्यनुशासनैः कोषैश्च घटादिप्रातिपदिकानां घटादौ स्वादीनामेकत्वादौ अमादिद्वितीयादेः कर्मत्वे तृतीयायाः करणत्वे शक्तिः प्रतिपादिता, पश्चात्प्रतिबन्धकत्वगौरवं फलमुखतयाऽकिञ्चित्करम्। प्रकारतामतव्यवस्थापनावसरोक्तमपि लाघवगौरवं न शक्तिव्यवस्थापकमपि तु व्यवस्थिताया अनुग्राहकमिति। अथ यदि पश्चादुपनिबद्धलाघवगौरवग्रहैः शक्तिव्यवस्था स्वीक्रियेत तदा स्वादिसमभिव्याहृतघटादिपदानां एकत्वविशिष्टघट इव अमादिसमभिव्याहृतानां तेषां घटकर्मत्वादौ लक्षणां स्वीकृत्य विभक्तिमात्रस्य निरर्थकतात्वात्। एवं ततोऽल्पानां विभक्तीनामेव एकत्वविशिष्टघटे घटविशिष्टकर्मत्वादौ वा स्वीकुरु लक्षणाम्। एवं प्रतिबन्धकलाघवमिवानन्तानां प्रकृतीनां शक्यकल्पनालाघवमप्यधिकं भविष्यति। न च विभक्तीनामक्लृप्तशक्तिकत्वान्न लक्षणासंभव इति वाच्यम्। प्रकृतिं विना प्रत्ययस्य, प्रत्ययं विना प्रकृतेः प्रयोगविरहादुभयविविक्तस्य लाघवात्। लाघवेन लक्षणानिर्वाहाय संख्यामात्रे कतिपयविभक्तीनां शक्तिकल्पनाया न्याय्यत्वात्। प्रकृतिलक्षणानिर्वाहायानन्तप्रकृतौ अनन्तशक्तिकल्पनापत्तेः। न च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति वाच्यम्। संसर्गतावादिना विभक्तेरर्थस्यैवानभ्युपगमेन तस्य मूलत एव समुच्छेदात्। तस्माद्विभक्तिशक्तिव्यवस्थैव साधीयसीति ध्येयम्।

संख्यायाश्च प्रकृत्यर्थे पर्याप्तिसंबन्धेनैव विशेषणत्वम्, न तु समवायादिना, तथा सति एकव्यक्तिबोधपरादाकाशशब्दादपि द्विवचनबहुवचनाद्यापत्तेः। तदर्थयोर्द्वित्वबहुत्वयोः समवायादिनाऽऽकाशाद्यन्वय योग्यत्वात्। न च पर्याप्तेः संसर्गत्वेपि तद्दोषतादवस्थ्यम्, घटाकाशादौ द्वित्वादेः पर्याप्तिसत्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात् प्रत्येकस्योभयानतिरिक्तत्वादिति वाच्यम्। उद्देश्यतावच्छेदव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमात्।

आकाशत्वादिव्याप्यताया द्वित्वादिपर्याप्तावसत्वेनाऽतिप्रसंगविरहात्। वैशिष्ट्यं च वैज्ञानिकं न तु वास्तवम्। तेन यत्र योग्यताभ्रमजन्य अत्राकाशौ इत्यादिवाक्यजन्यद्वित्वादिप्रकारकाकाशबोधस्तत्र विशिष्टसंसर्गोप्रसिद्धावपि न क्षतिः। द्वित्वादिपर्याप्तावन्यत्र प्रसिद्धस्याकाशत्वादिव्याप्यत्वस्य भ्रान्तेस्तत्रोपगमात्। सम्बन्धतावच्छेदकांशे प्रकारतायां भ्रमस्य सर्वानुभवसिद्धत्वेपि व्याप्यत्वांशे भ्रमत्वस्याऽन्यत्रोपपादितत्वात्।

---

तादवस्थ्यमित्यर्थः। तत्र बाधकाभावमाह। घटाकाशादाविति। तत्पर्याप्तिः। द्वित्वपर्याप्तिः। तत्र हेतुमाह। प्रत्येकस्योभयानतिरिक्तत्वादिति। प्रत्येकस्योभयस्वरूपत्वादित्यर्थः। प्रत्येकस्मिन्नुभयभेदाभावादिति नार्थः। घटो न घटपटौ इति प्रतीतेरेव बाधकत्वात्। वस्तुत उभयस्य प्रत्येकानतिरिक्तत्वादिति पाठः समीचीनः प्रतिभाति, घटपटौ न घट इतिप्रतीतेरसिद्धेः। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदानंगीकारादितिचिन्त्यम्। असत्वेनेति। द्वित्वपर्याप्तेर्घटादावपि सत्वादिति भावः। अतिप्रसंगविरहादिति। आकाशौ इति प्रयोगविरहादित्यर्थः। ननु आकाशत्वव्याप्यद्वित्वपर्याप्तिरेवाऽप्रसिद्धा, शुद्धपर्याप्तिसंबन्धेन समवायेन वा द्वित्वस्याकाशेपि सत्वादाकाशौ इति प्रतीत्यापत्तिरत आह। वैशिष्ट्यं चेति। द्वित्वपर्याप्तौ उद्देश्यतावच्छेदकव्याप्यत्ववैशिष्ट्यं चेत्यर्थः। वैज्ञानिकमिति। उद्देश्यतावच्छेदकव्याप्यत्वप्रकारेण ज्ञायमानत्वमित्यर्थः। भ्रमप्रमासाधारणप्रतियोगित्वसंबन्धावच्छिन्न उद्देश्यतावच्छेदकत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपिताधिकरणत्वावच्छिन्नविषयतानिरूपितवृत्तित्वत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतावत्त्वरूपमिति यावत्। न तु वास्तवमिति। वस्तुभूतपर्याप्तिधर्म इत्यर्थः। तेन। द्वित्वपर्याप्तिरुद्देश्यतावच्छेदकव्याप्येतिज्ञानीयपर्याप्तौ उद्देश्यतावच्छेदकव्याप्यत्वनिवेशेन। विशिष्टसंसर्गोऽप्रसिद्धावपीति।

न च प्रकृत्यर्थतावच्छेदके एव व्यापकतासंबन्धेन द्वित्वान्वयधीः किं नोपेयते इति वाच्यम्। घटावित्यादौ घटत्वादीनां स्वरूपत एवोपस्थिततया तत्रोक्तान्वयबोधस्यासंभवात्। स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वरूपपरंपराया एव द्वित्वादेः संबन्धतास्वीकारे च व्यापकतारूपसंबन्धतावच्छेदकांशे भ्रमत्वस्यावश्यकतया उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः संबन्धतोपेक्षाया निर्बीजत्वात्।

अथात्र व्याप्तिर्व्यापकसामानाधिकरण्यरूपैव वाच्या, न तु तद्वदन्यावृत्तित्वरूपा, केवलान्वयिधर्मस्य प्रकृत्यर्थतावच्छेदकता यत्र तत्राप्रसिद्धेः, एवं चोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्त्यपेक्षया लघोः स्वव्यापकतादृशधर्मवत्त्वस्यैव संबन्धत्वमुचितमिति चेत्तर्हि आकाशो न द्वावित्यादिवाक्यजन्यबोधदशायामपि आकाशावित्यादिवाक्याद् द्वित्वबोधापत्तिः। तथा हि आकाशो न द्वावित्यादितो द्वित्वावच्छिन्नभेदः प्रतीयते। स च न स्वव्यापकाकाशत्ववत्त्वादिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकः। तादृशसंबन्धेन द्वित्ववतोऽप्रसिद्धेः। अपि तु पर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताक एव। तत्काले च पर्याप्तिसंबन्धेन द्वित्वविशिष्टबुद्धिरेव प्रतिबध्यते, न तूक्तपरंपरासंबन्धेन तद्विशिष्टबुद्धिरपीति।

---

आकाशत्वव्याप्यत्वविशिष्टद्वित्वपर्याप्तेरप्रसिद्धावपीत्यर्थः। न क्षतिः। अत्राकाशौ इति प्रयोगस्य नानुपपत्तिः। क्वचित्प्रसिद्धस्यान्यत्र भ्रमो भवतीति आकाशत्वव्याप्यत्वस्य प्रसिद्धिमाह। द्वित्वादिपर्याप्ताविति। अस्य भ्रान्तेरुपगमादित्यनेनाऽन्वयः। अन्यत्र। शब्दादौ। अन्यत्रोपपादितत्वादिति। संसर्गकोटौ प्रकारविशेष्यभावाभावेन प्रकारत्वघटितभ्रमत्वस्याऽसंभवेपि विशेष्यविशेषणभावाभ्युपगमेन विशेषणघटितस्य विशेष्यताविशिष्टविशेषणताकत्वरूपस्य भ्रमत्वस्यान्यत्रोपपादितत्वादित्यर्थः। वै०स्वनिरूपितत्व-स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वोभयसं०। निरूपकतावत्ता च प्रसिद्धचतुष्टयसंबन्धेन।

द्वित्वपर्याप्तौ उद्देश्यतावच्छेदकव्याप्यत्वभाने उद्देश्यतावच्छेदके द्वित्वादिव्यापकत्वमर्थात्सिद्धम्, तथा च नाप्रसिद्धिरित्याशंकते। नचेति। प्रकृत्यर्थतावच्छेदके एवेति। एवकारेण द्वित्वादौ उद्देश्यतावच्छेदकव्याप्यत्वव्यावृत्तिः। तत्र। घटत्वादौ। असंभवादिति। अन्वयितावच्छेदकरूपेणान्वयिनः उपस्थितिरूपकारणाभावादितिभावः।

अथाऽऽकाशो न द्वावित्यादौ केवलपर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदो यत्र बोधयितुं न शक्यते। आकाशेऽप्युक्तयुक्त्या द्वित्वपर्याप्तेः सत्वेन तत्र तेन संबन्धेन तद्वद्भेदस्य बोधयितुमशक्यत्वात्। आकाशत्वव्याप्यपर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वादिमद्भेदश्चाप्रसिद्ध एवेति चेन्न। द्वित्वादिपर्याप्तेरुभयादिवृत्तिधर्मेणैवावच्छेदात्। तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तेन संबन्धेन द्वित्वादिमद्भेदस्य च तद्वति वृत्तौ बाधकाभावात्।

---

अथ यत्राऽनेकवृत्तिधर्मः उद्देश्यतावच्छेदकः तत्र शुद्धपर्याप्तिरेव संसर्गः। यत्र तु एकमात्रवृत्तिधर्मस्तथा, तत्र व्यापकत्वं संसर्गः। तथाचोद्देश्यतावच्छेदकीभूतगगनत्वे व्यापकतासंबन्धेन द्वित्वविरहान्नाकाशौ इत्यादेः प्रामाण्यापत्तिरिति चेन्न। संसर्गप्रयोजकाऽऽकाङ्क्षाया उभयत्र तुल्यत्वे वैषम्ये मानाभावात्। अन्वयितावच्छेदकरूपेण घटत्वादेरनुपस्थित्या व्यापकतासंबन्धेन द्वित्वभानानुपपत्तिः। एकमात्रघटसत्वेपि घटावित्यस्य प्रामाण्यापत्तिश्च, व्यापकतासंबन्धेन द्वित्वस्य घटत्वे सत्वात्। भ्रमत्वस्याऽऽवश्यकतयेति। द्वित्वव्यापकत्वाभाववति आकाशत्वे द्वित्वव्यापकत्वविशेषणकत्वादिति भावः। विशिष्टपर्याप्तेः। साक्षात्संबन्धस्येति शेषः।

अथेति। अत्रेति। उद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धे इत्यर्थः। घटकत्वं सप्तम्यर्थः। तादृशसंबन्धघटिका व्याप्तिरिति यावत्। व्यापकसामानाधिकरण्यरूपैवेति। पर्याप्तिसमानाधिकरणभेदप्रतियोगितानवच्छेदकोद्देश्यतावच्छेदकसामानाधिकरण्यरूपैवेत्यर्थः। एवकारव्यवच्छेद्यं दर्शयति। नत्विति। तद्वदन्यावृत्तित्वरूपेति। उद्देश्यतावच्छेदकवदन्यावृत्तित्वरूपेत्यर्थः। प्रमेयत्ववदन्यावृत्तित्वरूपेति यावत्। यत्र। प्रमेयौ इत्यादौ। अप्रसिद्धेति। प्रमेयत्ववदन्यत्वाप्रसिद्धेरित्यर्थः। एवं च। व्यापकसामानाधिकरण्यरूपव्याप्तिनिवेशे च। लघोः रूपसामानाधिकरण्यानिवेशेनेत्यादिः। स्वव्यापकेति। स्वं द्वित्वादि। तादृशधर्मवत्वस्यैवेति। उद्देश्यतावच्छेदकाभूताऽऽकाशत्ववत्वस्यैवेत्यर्थः। एवकारेण सामानाधिकरण्यव्यावृत्तिः। स च। द्वित्वावच्छिन्नभेदश्च। स्वव्यापकेत्यादि। स्वव्यापकाकाशत्ववत्वसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकइत्यर्थः। तादृशसंबधेन। स्वव्यापकाकाशत्ववत्वसंबन्धेन। पर्याप्तिसंबन्धावच्छिन्नेति। अस्याऽवच्छेदकतायामन्वयः। प्रतियोगितावच्छेदकताक-

न चैवं घटपटौ न द्वौ इति प्रयोग आपद्येत। घटपटयोरपि प्रत्येकं द्वित्वावच्छिन्नभेदसत्वादिति वाच्यम्। द्विवचनाद्युपस्थापितद्वित्वावच्छेदेनैव द्वित्वावच्छिन्नभेदस्य बाधेन तादृशप्रयोगाभावोपपत्तेः। नञा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदश्च उद्देश्यतावच्छेदकावच्छेदेनैव बोध्यते इति व्युत्पत्तेर्द्वित्वसामानाधिकरण्येन तद्बाधस्याकिञ्चित्करत्वात्।

---

एवेति। द्वित्वावच्छिन्नभेदः प्रतीयते इति पूर्वेणान्वयः। तत्काले। पर्याप्तिसंबन्धेन द्वित्वावच्छिन्नभेदप्रतीतिकाले। द्वित्वविशिष्टबुद्धिरेवेति। पर्याप्तिसंबन्धेन आकाशादौ इति बुद्धिरेवेत्यर्थः। एवकारव्यवच्छेद्यमाह। नत्विति। उक्तपरंपरासंबन्धेन। स्वव्यापकाकाशत्ववत्वसंबन्धेन। तद्विशिष्टबुद्धिरपीति। द्वित्वविशिष्टरपीत्यर्थः। स्वव्यापकाकाशत्ववत्वसंबन्धेनाकाशौ इति विशिष्टबुद्धिरपीति यावत्। प्रतिबध्यते इति पूर्वेणान्वयः। तथाचोद्देश्यतावच्छेदकव्याप्यपर्याप्तिरेव संसर्ग इति भावः। पर्याप्तिसंबन्धावच्छिन्नाऽवच्छेदकतापि वक्तुं न शक्यते इत्याशङ्कते। अथेति। उक्तयुक्त्या। उभयस्य प्रत्येकानतिरिक्तत्वादिति युक्त्या। तथा च घटाकाशोभयगतद्वित्वस्याकाशेपि सत्वादिति यावत्। तत्र। आकाशे। तेन संबन्धेन। पर्याप्तिसंबन्धेन। तद्वद्भेदस्य। द्वित्ववद्भेदस्य। उद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धावच्छिन्नावच्छेदकतापि वक्तुं न शक्यते इत्याह। आकाशत्वव्याप्येति। आशङ्कां निरस्यति। द्वित्वादिपर्याप्तेरिति। उभयादिवृत्तिधर्मेणैवेति। द्वित्वादिनैवेत्यर्थः। एवकारेण प्रत्येकमात्रवृत्तिधर्मस्य गगनत्वतद्व्यक्तित्वादेर्व्यवच्छेदः। तदनवच्छेदकेति। द्वित्वपर्याप्त्यनवच्छेदकेत्यर्थः। तद्वद्भेदस्य। द्वित्वपर्याप्तिमद्भेदस्य। तेन संबन्धेन। पर्याप्तिसंबन्धेन। तद्वति वृत्तौ। द्वित्वादिमति वृत्तौ। तथा च द्वित्वाद्यवच्छेदेन आकाशे द्वित्वसत्वेपि आकाशत्वावच्छेदेन द्वित्वाभावसत्वे बाधकाभाव इति भावः।

एवं। प्रत्येकमात्रवृत्तिधर्मावच्छेदेन द्वित्वादिमद्भेदसत्वे। प्रत्येकं। प्रत्येकमात्रवृत्तिधर्मावच्छेदेन। द्विवचनाद्युपस्थापितेति। घटपटौ इति द्विवचनाद्युपस्थापितेत्यर्थः। द्वित्वावच्छेदेनैवेति। एवकारेण प्रत्येकवृत्तिधर्मव्यावृत्तिः। तादृशाप्रयोगाभावोपपत्तेरिति। घटपटौ न द्वौ इति प्रयोगाभावोपपत्तेरित्यर्थः। इदमुपलक्षणम्। अयं न द्वौ इति प्रयोगोपपत्तेश्चेत्यपि बोध्यम्।

न च घटत्वादेरतिप्रसक्तस्तया द्वित्वादिपर्याप्तेरनवच्छेदकत्वात्तदवच्छेदेन द्वित्ववद्भेदस्य भवतामप्यनुमतत्वात्प्रकृत्यर्थगतैकत्वाऽविवक्षायां घटो न द्वावित्यादिप्रयोगापत्तिरिति वाच्यम्। तादृशप्रयोगाभावे घटत्वादेर्द्वित्वपर्याप्तेरिव द्वित्वादिमद्भेदस्याप्यनुयोगितावच्छेदकताया अप्रामाणिकत्वात्। प्रतियोगितावच्छेदकानवच्छेदकताया भेदावच्छेदकतानियतत्वासिद्धेः। अस्तु वाऽतिप्रसक्तोपि घटत्वादिर्द्वित्वपर्याप्तेरवच्छेदकः, घटौ इत्यादिप्रतीतिवत्वात्। वस्तुतस्तु घटत्वादेः प्रत्येकं द्वित्वपर्याप्त्यनवच्छेदकत्वेपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया तदवच्छिन्नावच्छेदकत्वमव्याहतमेव।

---

नापि द्वित्वसामानाधिकरण्येन द्वित्वादिमद्भेदावगाहिघटपटौ न स्त इति प्रतीत्यापत्तिरपि संभवतीत्याह। नचेति। तदबाधस्येति। द्वित्वावच्छिन्नभेदस्य अबाधेपि सत्वेपीति यावत्। अकिञ्चित्करत्वादिति। घटपटौ न द्वौ इति प्रतीतेः प्रामाण्यासाधकत्वादित्यर्थः। तदवच्छेदेन। घटत्वावच्छेदेन। भवतामपीति। अवच्छेदावच्छेदेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्वीकर्तृणामपीत्यर्थः। एकत्वविवक्षायान्तु नापत्तिः, एकत्वस्य द्वित्वानुयोगितानवच्छेदकत्वादाह। एकत्वाविवक्षायामपीति। भेदावच्छेदकतानियतत्वाऽसिद्धेरिति। भेदावच्छेदकताव्याप्यत्वासिद्धेरित्यर्थः। यो यद्धर्मस्यानवच्छेदकः स तदभावस्यावच्छेदक इति व्याप्तौ मानाभावादिति भावः। गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसंगादिति तत्रैवोक्तम्। प्रतीतिबलादिति। घटौ इत्यादिप्रतीतौ घटत्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वस्वीकारादिति भावः। तदवच्छिन्नेति। द्वित्वपर्याप्तित्वावच्छिन्नेत्यर्थः। तथा च घटत्वावच्छेदेन द्वित्वस्यैव सत्वादेकत्वाविवक्षायामपि न घटो न द्वौ इति प्रतीत्यापत्तिः, घटत्वावच्छेदेन द्वित्वादिमद्भेदस्याऽसत्वादिति भावः। समवायसंबन्धावच्छिन्नेति। अस्य प्रतियोगितावच्छेदकतायामन्वयः। तथा च समवायसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदविषयिकैरेवेत्यर्थः। एवकारेण पर्याप्तिसंबन्धावच्छिन्नत्वस्य व्यावृत्तिः। द्वित्वादिपर्याप्तेरिव द्वित्वादिसमवायस्यापि द्वित्वाद्येवानुयोगितावच्छेदकमित्याह। आकाशादाविति। द्वित्वादेरेवेति। एवकारो भिन्नक्रमः, द्वित्वादेरुभयादिवृत्तिधर्ममात्रावच्छिन्नत्वोपगमादेवेत्यर्थः। मात्रपदेन प्रत्येकवृत्तिधर्मस्य व्यावृत्तिः। उभयादिवृत्तिर्यो धर्मस्तन्मात्रावच्छिन्नानुयोगिताकत्वोपगमादिति यावत्। तदनवच्छेदकेति। द्वित्वानुयोगितानवच्छेदकेत्यर्थः।

अथ पर्याप्त्याख्यविलक्षणसंबन्ध एवाप्रामाणिकः तत्कथं तत्संबन्धता। आकाशो न द्वौ इति प्रतीतिस्तु समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वावच्छिन्नभेदविषयिकैवास्ताम्। आकाशादौ द्वित्वसमवायसत्त्वेपि द्वित्वादेरेवोभयादिवृत्तिधर्ममात्रावच्छिन्नत्वोपगमात्तदनवच्छेदकाकाशत्वाद्यवच्छेदेन समवायसंबन्धेन तद्वतो भेदस्य वृत्तौ बाधकाभावादिति चेन्न। आकाशावित्यादिवाक्यजन्यशाब्दबोधस्याऽप्रमात्वानुपपत्त्यैव तादृशसंबन्धसिद्धेः। तादृशबुद्धेः समवायविषयकत्वे प्रमात्वनिराकरणस्य कर्तुमशक्यत्वात्। उद्देश्यतावच्छेदकव्याप्तिविशिष्टसमवायस्य संसर्गतोपगमे घटावित्यादिवाक्यस्याप्यप्रामाण्यापत्तिः। समवायस्यैक्येन घटादिनिष्ठस्य द्वित्वादिसमवायस्य पटादावपि सत्त्वेन घटत्वाद्यव्याप्यत्वात्।

न चोद्देश्यतावच्छेदकव्याप्यद्वित्वादिसमवायत्वेनैव संबन्धतास्तु- द्वित्वादिसमवायस्य घटत्वाद्यव्याप्यत्वेपि द्वित्वादेस्तद्व्याप्यतया न घटौ इत्यादेरप्रमाणतेति वाच्यम्। एवं सति तथाविधद्वित्वादेरेव लाघवेन द्वित्वादिसंबन्धतौचित्यात्। अथास्त्वेवमेव तावतापि पर्याप्तिसंबन्धस्य विलयादिति चेन्न। द्वित्वादिस्वरूपस्यैव द्वित्वादिपर्याप्तितयाऽभिमतसिद्धेः। उक्तं च दीधितिकृता, पर्याप्तिश्चायमेकोघटः-इमौ द्वौ इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेष इति। समवायस्य नानात्वमते च द्वित्वादिसमवाय एव तत्पर्याप्तिः न तु स्वरूपमतिरिक्तपदार्थो वेत्यन्यदेतत्।

---

तद्वतोभेदस्य। द्वित्ववत्प्रतियोगिकभेदस्य। बाधकाभावादिति। घटाकाशगतद्वित्वावच्छेदेन द्वित्वस्याकाशे सत्वेपि आकाशत्वावच्छेदेन द्वित्ववद्भेदस्यापि सत्वादिति भावः। तादृशेति। पर्याप्तात्यर्थः। तादृशबुद्धेः। आकाशत्वानुयोगिताकद्वित्वविषयकशाब्दबुद्धेः। अशक्यत्वादिति। घटाकाशगतद्वित्वसमवायस्याकाशेपि सत्वादिति भावः। यद्यपि आकाशे समवायेन द्वित्वं नाकाशत्वावच्छेन, किन्तु घटाकाशगतद्वित्वावच्छेदेनैवेति आकाशौ इति वाक्यजन्यबुद्धेरप्रमात्वमुपपन्नमेव। तथापि तत्संबन्धावच्छेदकस्य तदवच्छेदकस्य तदवच्छेदकतानियमाद् द्वित्वसमवायावच्छेदकस्याकाशत्वस्य द्वित्वादेरप्यवच्छेदकतया प्रमात्वं बोध्यम्। संसर्गतोपगमे इति। तथा चाकाशौ इति वाक्यजन्यबोधस्य न प्रमात्वम्, समवाये आकाशत्वव्याप्यत्वाभावात्। द्वित्वादिसमवायत्वेनैवेति। एवकारेणोद्देश्यतावच्छेदव्याप्यसमवायस्य

यत्तु आकाशं न द्वे इति प्रतीतिवदाकाशं न द्वित्ववदिति प्रतीतेः प्रमात्वस्य वारणाय समवायेन द्वित्वादिमद्भेद आकाशत्वावच्छेदेन न स्वीकर्तव्यः। तथा च पर्याप्तेरविलक्षणत्वे आकाशो न द्वे इत्यादि प्रतीतेरप्यप्रमात्वापत्तिरिति। तन्न। आकाशं न द्वित्ववदिति प्रतीतौ द्वित्वसमवायावच्छिन्नभेद एव विषयः मतुपा संबन्ध्युल्लेखात्, न तु द्वित्वावच्छिन्नभेदः। एवं चाकाशत्वावच्छेदेन द्वित्वावच्छिन्नभेद एव स्वीकर्तव्यः, न तु तत्संबन्धावच्छिन्नभेद इत्याकाशं न द्वे इति प्रतीतेरप्रमात्वस्य आकाशं न द्वित्ववदिति प्रतीतेर्वा प्रमात्वस्य न प्रसंग इति।

---

"द्वित्वाघटितस्य" व्यावृत्तिः। तद्व्याप्यतया। घटत्वव्याप्यतया। समवायसंबन्धेनेति शेषः। एवं सति। उद्देश्यतावच्छेदकव्याप्यद्वित्वसमवायस्य संसर्गत्वे सति। तथाविधेति। उद्देश्यतावच्छेदकव्याप्येत्यर्थः। द्वित्वादेरेवेति। एवकारेण समवायव्यावृत्तिः। उक्तं चेति। अवच्छेदकत्वनिरुक्तौ इति शेषः। द्वित्वादिसमवाय एवेति। उद्देश्यतावच्छेदकव्याप्येत्यादिः। एवकारेण पर्याप्तिव्यवच्छेदः। तथा च न घटौ इत्यादेः प्रमात्वानुपपत्तिः। द्वित्वसमवायस्य घटत्वव्याप्यत्वादिति भावः। पर्याप्तिसाधनाय प्रकारान्तरमुपन्यस्यति। यत्त्विति। समवायेन द्वित्वादिमद्भेद इति। समवायसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेकताकप्रतियोगिताकभेद इत्यर्थः। न स्वीकर्तव्य इति। पर्याप्त्यनंगीकारे आकाशं न द्वे इति प्रतीतावपि समवायसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद एवाकाशत्वावच्छेदेन भासेत तादृशश्च भेदो नाकाशत्वावच्छेदेन वर्तते इति तादृशभेदो न स्वीकर्तव्य इत्यर्थः। अन्यथोक्तभेदावगाहिन्या आकाशं न द्वित्ववदिति प्रतीतेरपि प्रमात्वं स्यादतः आकाशं न द्वे इति प्रतीतौ पर्याप्तिसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद एव विषयो वाच्यः, तथा च पर्याप्ति स्वीकार आवश्यक इति भावः। उक्तार्थमेव प्रतिपादयति। तथाचेति। आकाशत्वावच्छेदेन समवायेन द्वित्वादिमद्भेदस्यास्वीकारे चेत्यर्थः। पर्याप्तेरविलक्षणत्वे। पर्याप्तेः समवायरूपत्वे। अभ्रमत्वापत्तिरिति। समवायेन द्वित्वादिमद्भेदस्याकाशत्वावच्छेदेनाकाशे विरहादिति भावः। आकाशं न द्वित्ववदिति प्रतीतौ मत्वर्थः संबन्धी, संबन्धश्चात्र समवायः, स च प्रकारतया भासते, तथाचाकाशं द्वित्वसमवायवद्भिन्नमिति बोधः स्यात्, तस्याऽनभ्युपगमेन न प्रमात्वापत्तिः। न वा आकाशं न द्वे इति प्रतीतेः

अथोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्वसंबन्धतास्वीकारे धवखदिरौ छिनत्तीत्यादौ तदुद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्यं द्वित्वादिद्वयमेव प्रत्येतव्यम्, नतु धवखदिरादिपर्याप्तद्वित्वादिकम्, यथाचैकैकधवखदिरादितात्पर्येण तथाप्रयोगानुपपत्तिरिति द्वित्वान्वयितावच्छेदकमपेक्षाबुद्धिविशेषविषयत्वादिरूपमुभयादिनिष्ठं साहित्यं द्वन्द्वसमासार्थो वाच्यः, तथा च मीमांसकमतप्रवेश इति चेन्न।

---

प्रमात्वानुपपत्तिः, तस्याः समवायसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदावगाहनादिति नोक्तरीत्या पर्याप्तिः सिध्यतीत्याशयेनाह। तत्रेति। द्वित्वसमवायावच्छिन्नभेद एवेति। द्वित्वसमवायनिष्ठावच्छेदकताकप्रतियोगिताकभेद एवेत्यर्थः। तत्र हेतुमाह। मतुपा संबन्ध्युल्लेखादिति। एवकारव्यवच्छेद्यमाह। नत्विति। द्वित्वावच्छिन्नभेदइति। समवायसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद इत्यर्थः। आकाशं न द्वे इति प्रतीतेरप्रमात्वं निराकरोति। एवं चेति। आकाशं न द्वे इति प्रतीतौ संबन्धिवाचकपदाभावे चेत्यर्थः। द्वित्वावच्छिन्नभेद एवेति। समवायसंबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद इत्यर्थः। एवकारव्यवच्छेद्यमाह। नत्विति। तत्संबन्धावच्छिन्नभेद इति। द्वित्वसमवायनिष्ठावच्छेदकताकप्रतियोगिताकभेद इत्यर्थः। स्वीकर्तव्य इति शेषः।

आकाशौ इति प्रतीतेः प्रमात्ववारणायोद्देश्यतावच्छेदकव्याप्यपर्याप्तेः संसर्गत्वेऽनुपपत्तिमाशंकते। अथेति। द्वित्वादिद्वयमेवेति। धवद्वयगतद्वित्वम्, खदिरद्वयगतद्वित्वमेतदुभयमेवेत्यर्थः। एवकारव्यवच्छेद्यमाह। नत्विति। धवखदिरपर्याप्तद्वित्वादिकमिति। धवत्वखदिरत्व-व्याप्यमिति पूर्वेणान्वयः। तादृशद्वित्वस्य खदिरे सत्त्वात्तत्र चोद्देश्यतावच्छेदकीभूतधवत्वाभावात्, एवमुद्देश्यतावच्छेदकीभूतखदिरत्वाभाववति धवे तादृशद्वित्वस्य सत्वादिति भावः। तथा च। द्वित्वद्वयस्योद्देश्यतावच्छेदकत्वे च। तथा प्रयोगानुपपत्तिरिति। धवखदिरौ इति प्रयोगानुपपत्तिरित्यर्थः। इति। अतः। साहित्यमिति। तद्व्याप्यत्वस्य धवखदिरपर्याप्तद्वित्वे क्षतत्वान्नैकैक धवखदिरबोधानुपपत्तिरिति भावः। तथा च। द्वन्द्वे लक्षणास्वीकारे च। मीमांसकमतप्रवेश इति। मीमांसका हि साहित्यं द्वन्द्वसमासार्थः। तच्चापेक्षाबुद्धिविशेषविषयत्वरूपम्, तदवच्छेदेन विभक्त्यर्थद्वित्वान्वयः। अन्यथा धवखदिरौ इत्यादौ धवद्वयखदिरद्वयादिधीः स्यात्। आकाशौ इत्यादिप्रयोगस्य-

यत्रैकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमः। यत्र धर्मद्वयादेस्तथात्वं तत्र केवला पर्याप्तिः समवाय एव वा संसर्ग इत्युपगमात्, त्रिनैव साहित्यस्यान्वयिवच्छेदकतां एकैकतात्पर्येण धवखदिरौ इत्यादिप्रयोगोपपत्तेः।

न चैवमेकैकधवखदिरादितात्पर्येण धवौ खदिरौ इत्यादिप्रयोगापत्तिः। तादृशवाक्यद्वयविषयकसमूहालंबनजन्यसमूहालंबनशाब्दबोधस्य नानाधर्मावच्छिन्नोद्देश्यताकतया शुद्धपर्याप्तेरपि संसर्गतयाऽवगाहनसंभवादिति वाच्यम्। यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकैव द्वित्वादिप्रकारता तत्रैव शुद्धायाः पर्याप्तेः समवायस्य वा संसर्गतया भानात्। धवौ खदिरौ इत्यादिनानावाक्यजन्यसमूहालंबनशाब्दबोधे विशेष्यताभेदेन प्रकारताभेदेन चोद्देश्यतावच्छेदकधवत्वादिव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमेन एकैकधवखदिरादितात्पर्येण तथाप्रयोगाऽसंभवात्। धवखदिरौ इत्यादिसमासोत्तरद्विवचनेन धवत्वखदिरत्वाद्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालिज्ञानमेव जन्यते। तादृशवाक्यजन्यबोधस्य समूहालंबनात्मकतया विशेष्यताभेदेन प्रकारताभेदाभावात्।

---

प्रमात्ववारणाय विभक्तेः प्रकृत्यर्थतावच्छेदकव्याप्यसंख्याबोधकत्वव्युत्पत्तेः। एवं साहित्यमेव प्रकृत्यर्थतावच्छेदकं तद्व्याप्यं धवखदिरगतद्वित्वमेवेति धवखदिरद्वयस्यैव बोधः। न तु धवद्वयखदिरद्वयादेरिति प्राहुः।

समाधत्ते। यत्रेति। संसर्गतानियम इति। तेनाकाशौ इत्यादिप्रयोगस्य न प्रामाण्यम्। यत्र धर्मद्वयादेरिति। विरुद्धधर्मद्वयादेरित्यर्थः। तेन विभुत्वस्याकाशेऽन्वयतात्पर्येण न विभ्वाकाशौ इत्यादिप्रयोगस्य प्रामाण्यम्। आकाशत्वविभुत्वयोर्विरोधाभावात्। तत्र केवलपर्याप्तेः संसर्गत्वाभावात्। तथात्वम्। उद्देश्यतावच्छेदकत्वम्। अत्रेदं वाच्यम्। यत्र विरुद्धधर्मद्वयोद्देश्यतावच्छेदकत्वम् तत्र द्वित्वान्वयबोधे द्विवचनमेव साकाङ्क्षम्। तेन कालाकाशौ इति प्रयोगस्य न प्रामाण्यम्। एवं। यत्र धर्मद्वयस्योद्देश्यतावच्छेदकत्वं तत्र केवलपर्याप्तेः संसर्गत्वे। शुद्धपर्याप्तेरपीति। अपिना उद्देश्यतावच्छेदकव्याप्यपर्याप्तेः समुच्चयः।

यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकद्वित्वादिप्रकारतेति। ननु धवखदिरौ इत्यत्र धवखदिरनिष्ठायां कस्यामपि विशेष्यतायां नानाधर्मा-

यथाहि—समूहालंबनानात्मके "खड्गी चैत्रः कुण्डली"त्याकारकनानाविशेषणकैकविशेष्यकज्ञानेन नानाप्रकारतानिरूपितैकविशेष्यता, तथा तथाविधे धवखदिरौ इत्याद्याकारके नानाविशेष्यकैकविशेषणकज्ञाने विशेष्यताभेदेपि अभिन्नैव द्वित्वादिप्रकारता। अन्यथा समूहालंबनत्वस्तद्वैलक्षण्यानुपपत्तेः। समासघटकधवखदिरादिपदानामेकवाक्यतानुपपत्तेश्च। तत्प्रयोज्यविषयतया साक्षात्परंपरया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैवैकवाक्यतापदार्थत्वात्।

---

वच्छिन्नत्वं नास्तीति चेन्न। धर्मविशिष्टा या एकद्वित्वप्रकारतेतितदर्थात्। वै०स्वावच्छिन्नविशेष्यतानिरूपित्व, स्वभिन्नधर्मावच्छिन्नविशेष्यतानिरूपितत्वोभयसं०। तत्रैवेति। यत्र एकैव प्रकारता तत्रैवेत्यर्थः। प्रकारताभेदेन चेति। एकद्वित्वप्रकारत्वाभावादुक्तनियमानाक्रान्ततयेति शेषः। तथाप्रयोगासंभवादिति। धवौ खदिरौ इति प्रयोगासंभवादित्यर्थः। तत्रोद्देश्यतावच्छेदकं धवत्वं खदिरत्वं च धवत्वव्याप्यद्वित्वपर्याप्तिर्धवद्वये खदिरत्वव्याप्यद्वित्वपर्याप्तिः खदिरद्वये न तु प्रत्येकस्मिन्निति भावः। ज्ञानमेवेति। एवकारेण नानाविशेष्यतानिरूपितद्वित्वद्वयप्रकारताशालिज्ञानव्यावृत्तिः। तादृशवाक्यजन्येति। धवखदिरौ इति वाक्यजन्येत्यर्थः। समूहालंबनानात्मकतयेति। समूहालंबनत्वं च प्रकारताद्वयनिरूपितमुख्यविशेष्यताद्वयशालित्वम्। विशेष्यताभेदेन प्रकारताभेदाभावादिति। अत्र दृष्टान्तमाह। यथाहीत्यादिना। तथाविधे। समूहालंवनानात्मके। अभिन्नैव। एकैव। अन्यथा। द्वित्वादिप्रकारताया भिन्नत्वोपगमे। तद्वैलक्षण्यानुपपत्तेरिति। असमूहालंबनस्य वैलक्षण्यानुपपत्तेरित्यर्थः। धवौ खदिरौ इति समूहालंबनतो धवखदिरौ इत्यसमूहालंवनस्य भेदो न स्यादिति यावत्। धवखदिरौ इत्यादौ विशेष्यताभेदेन प्रकारताभेदोपगमे समूहालम्बनत्वं स्यादिति भावः। विशेष्यताभेदेन प्रकारताभेदे बाधकान्तरमप्याह। एकवाक्यत्वानुपपत्तेरिति। तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदत्वम्, एकवाक्यत्वम्। पदविशिष्टपदत्वम्। वै० स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वसं०। विषयतानिरूपितत्वं च साक्षात्परंपरया बोध्यम्। यथा राजपुरुष इत्यत्र राजपदप्रयोज्यशाब्दबोधीयप्रकारतानिरूपितविशेष्यताप्रयोजकत्वं पुरुषपदे। एवं पुरुषपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं राजपदे। परंपरया धवखदिरौ इत्यत्र यथा धवपदप्रयोज्यविषयतानिरूपितद्वित्वविषय-

न चैतादृशैकवाक्यताविरहेपि क्षतिविरहः। तथासति समासस्यैवानुपपत्तेः। अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ राजपुरुष पदादीनां समासवारणाय समर्थपदानामेव समासानुशासनात्। सामर्थ्यस्य निरुक्तैकवाक्यतारूपत्वात्। जलपृथिव्योः स्नेहगन्धौ इत्यादितोपि न जले स्नेहः—पृथिव्यां गन्ध इत्याकारकसमूहालंबनबोधः किन्तु तद्विलक्षणो द्वित्वादिनिष्ठैकप्रकारतानिरूपितजलत्व-पृथिवीत्वाद्यवच्छिन्नविशेष्यतात्मकप्रकारताद्वयनिरूपिताधेयत्वप्रकारतानिरूपितं यद्धर्मितावच्छेदकद्वित्वादिनिष्ठैकप्रकारतानिरूपकस्नेहत्व-गन्धत्वावच्छिन्न-विशेष्यताद्वयं तद्वानिति। अतो न कुत्राप्येकवाक्यताभङ्गः।

---

तानिरूपितविषयताप्रयोजकत्वं खदिरपदे। यदि विशेष्यताभेदेन प्रकारताभिन्ना स्यात्तदा निरुक्तैकवाक्यता न स्यादिति भावः। क्षतिविरह इति। तथा च विशेष्यताभेदेन प्रकारताभेदोऽस्तु इति भावः। तथा सति। उक्तैकवाक्यताविरहे सति। विशेष्यताभेदेन प्रकारताभेदे सतीति यावत्। एकवाक्यतार्थमेव विशेष्यताभेदेपि द्वित्वप्रकारताया ऐक्यं स्वीक्रियत इति भावः। समासस्यैवानुपपत्तेरिति। धवखदिरौ इत्यादौ समासो न स्यादित्यर्थः। अत एकवाक्यता स्वीकार्येति भावः। अयमेतीति। अयमेति पुत्रो राज्ञः इत्येकं वाक्यम्, पुरुषोपसार्यतामित्यपरम्। समासवारणायेति। सापेक्षमसमर्थवद्भवतीति व्युत्पत्त्या अयमेतीति वाक्यघटकराजपदस्य समासाघटके पुत्रपदसापेक्षत्वेन, पुरुषपदस्य च समासाघटक अपसार्यतां पदसापेक्षत्वेना सामर्थ्यात्तयोः राजपुरुषपदयोः समासवारणायेत्यर्थः। समासानुशासनादिति। अनुशासनं च। समर्थः पदविधिरिति। निरुक्तैकवाक्यतारूपत्वादिति। तत्पदप्रयोज्यविषयतानिरूपिताप्रयोजकत्वरूपत्वादित्यर्थः। तथा च राजपदप्रयोज्यविषयतानिरूपितसंबन्धविषयतानिरूपितविषयताप्रयोजकत्वं पुत्रपदे एव न तु पुरुषपदे। पुरुषपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वमपसार्यतां पदे न तु राजपदे इति नैकवाक्यत्वम्। तथा च धवखदिरौ इत्यत्र विशेष्यताभेदेन द्वित्वप्रकारताभेदे निरुक्तैकवाक्यताविरहेण समासो न स्यादिति भावः। किन्त्विति। अत्र द्वित्वविशिष्टपृथिवीजलनिरूपितवृत्तितावन्तौ द्वित्वविशिष्टौ स्नेहगन्धौ इति बोधः। तद्विलक्षणः। समूहालंबनविलक्षणः। न कुत्राप्येकवाक्यताभङ्ग इति। जलपदप्रयोज्यविषयत्व, पृथिवीपदप्रयोज्यविषयत्वयोः, स्नेहपदप्रयोज्यविषयत्व गन्धपदप्रयोज्यविषयतयोश्च परस्परं साक्षान्निरूप्यनिरूपकभावविरहेपि द्विवचनार्थद्वित्वद्वारा

चैत्रो मैत्रश्च गच्छत इत्यादावाख्यातार्थद्वित्वप्रकारेण भासमाने चैत्रमैत्रोभयादौ गमनाश्रयत्वाद्यन्वयेन निरुक्तैकवाक्यतासंभवेपि समासविधेर्विभाषाधिकारीयत्वादसमासः। तत्र विशेष्यताभेदभिन्न-द्वित्वनिष्ठप्रकारताद्वयप्रतियोगी समूहालंबनात्मकबोध इति न सम्यक्। तथासति उक्तयुक्त्या एकैकचैत्रमैत्रादितात्पर्येण तथाप्रयोगानुपपत्तेः।

आख्यातोपस्थापितद्वित्वादिकं उभयादिरूपान्वयितावच्छेदका-वच्छिन्ने एवान्वेतीति व्युत्पत्तिः, तेनोक्तप्रयोगदर्शनात्क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वाऽनियमेपि घटद्वयादितात्पर्येण घटस्तिष्ठत इत्यादयो न प्रयोगाः। एकवचनान्तक्रियापदे च तादृश-विशेष्यवाचकपदप्रयोग एव साधुः। अतो घटास्तिष्ठतीत्यादयो न प्रयोगाः।

---

"परंपरया" निरूप्यनिरूपकभावान्नैकवाक्यताभंग इत्यर्थः। ननु चैत्रपद-प्रयोज्यविषयतानिरूपितद्वित्वविषयतानिरूपितविषयताप्रयोजकत्वरूपैकवाक्य-ताया मैत्रे सत्वेन चैत्रमैत्रौ गच्छत इत्येव प्रयोगः स्यादित्याशङ्कयाह। चैत्रो मैत्रश्चेति। द्वित्वादिप्रकारेणेति। द्वित्वादिविशेष्यतयेत्यर्थः। द्वित्वादिः प्रकारो यत्रेति व्युत्पत्तेः। विभाषाधिकारीयत्वादिति। तथा च चैत्रमैत्रौ गच्छत इत्यपि प्रयोगो भवत्येव। तत्र। चैत्रो मैत्रश्च गच्छत इत्यत्र। प्रतियोगी। निरूपकः। समूहालंबनात्मकबोध इति। यदि चात्र विशेष्य-ताभेदेन प्रकारताभिन्ना न स्यात्तर्हि एकवाक्यत्वात्समासः स्यात्, अतो द्वित्वादिनिष्ठा प्रकारतापि भिन्नैव स्वीकर्तव्या, तथा च समूहालंबनात्मक एव बोध इति भावः। तथासति। विशेष्यताभेदेन प्रकारताभेदे सति। उक्त-युक्त्या। यत्रैकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदक-व्याप्यपर्याप्तेः संसर्गतानियमः इत्युक्तयुक्त्या। तथाप्रयोगानुपपत्तेरिति। चैत्रो मैत्रश्च गच्छतीति प्रयोगानुपपत्तेरित्यर्थः। अत्रोद्देश्यतावच्छेदकं चैत्रत्वं मैत्रत्वं न तद्व्याप्यपर्याप्तिश्चैत्रद्वये मैत्रद्वये चेति चैत्रद्वयमैत्रद्वयतात्पर्येण तथा प्रयोगः स्यादिति भावः।

आख्यातोपस्थापितद्वित्वादिकं चेति। असमानवचनकविशेष्यवाचक-पदस्थले इत्यादिः। तेन घटौ स्त इत्यादौ घटत्वस्यैवाऽन्वयितावच्छेदकत्वेपि न द्विवचनानुपपत्तिः, विशेष्यविशेषणवाचकपदयोः समानवचनत्वात्। उभयादिरूपान्वयितावच्छेदकावच्छिन्ने एवेति। चैत्रो मैत्रश्च गच्छत

अथैकघटादिव्यक्तेरेतद्देशवृत्तितादशायामत्र घटौस्तः घटाः सन्तीति कथं न प्रयोगाः, घटादौ घटत्वादिव्याप्तिवि शष्टपर्याप्तिसंबन्धेन द्वित्वादेः स्वरूपादिसंबन्धेनैतद्देशवृत्तित्वाश्रयत्वादेश्च सत्वात्। न च द्वित्वेनोपस्थितयोर्द्वयोरेव व्यक्त्योरेवं बहुत्वेनोपस्थितासु बहुषु व्यक्तिषु विधेयान्वयाद्व्यक्त्यन्तरेष्वेतद्देशवृत्तित्वाश्रयत्वादेश्च बाधान्न तादृशप्रयोग इति वाच्यम्। व्यक्त्यन्तरेऽयोग्यतया तादृशविधेयानवगाहिन एकघटे तदवगाहिनो बोधस्योत्पत्तौ बाधकाभावात्। तथा तात्पर्येण तथा प्रयोगस्य दुर्वारत्वात्।

न च व्यासज्यवृत्तिधर्मो यत्रान्वयितस्तत्र यावत्सु अन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वय इति व्युत्पत्तिस्तन्निर्वाहाय च तादृशधर्मावच्छिन्ने इतरान्वयबोधजनकसामग्र्या उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकं वक्तव्यमिति द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वान्वयबोधो न संभवतीति न तादृशबोधतात्पर्येण तादृशप्रयोगापत्तिरिति वाच्यम्। योग्यताभ्रमेणाकाशावत्र स्त इत्यादिवाक्यात् द्वित्वादिना एकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधात्तादृशव्युत्पत्तेस्तन्निर्वाहककार्यकारणभावस्य च कल्पनाऽसंभवात्।

---

इत्यत्र चैत्रत्वमैत्रत्वोभयादिरूपं यदन्वयितावच्छेदकं तदवच्छिन्ने एवेत्यर्थः। एवकारेण केवलचैत्रत्वमैत्रत्वाद्यवच्छिन्ने द्वित्वान्वयस्य व्यावृत्तिः। उभयादीत्यादिनाऽऽख्यातोपस्थापितत्रित्वादिकं धर्मत्रयरूपान्वयितावच्छेदकावच्छिन्ने एवान्वेतीत्यपि बोध्यम्। तेन चैत्रो मैत्रश्च गच्छन्तीत्यस्यापि न प्रामाण्यम्। तेन। उक्तनियमेन। अस्य घटस्तिष्ठत इत्यादयो न प्रयोगा इत्यनेनाऽन्वयः। उक्तप्रयोगदर्शनात्। चैत्रो मैत्रश्च गच्छत इति प्रयोगदर्शनात्। न प्रयोगा इति। आख्यातोपस्थापितद्वित्वस्य घटद्वये एवान्वयसंभवादेकवचनान्तघटपदस्य घटद्वयानुपस्थापकत्वादिति भावः। तादृशेति। एकवचनान्तेत्यर्थः। घटास्तिष्ठतीत्यादयो न प्रयोगा इति। आख्यातार्थकत्वाविवक्षायामपीत्यादिः।

आशङ्कते। अथेति। द्वित्वादेरिति। अस्य सत्वादित्यनेनान्वयः। घटद्वयवृत्तिद्वित्वस्य प्रत्येकघटेपि सत्वादिति भावः। विधेयान्वयादिति। विधेयस्य एतद्देशवृत्तित्वाश्रयत्वस्याऽन्वयादित्यर्थः। अयोग्यतयेति। योग्यताज्ञानरूपकारणाभावेनेत्यर्थः। तादृशविधेयानवगाहिन इति। व्यक्त्यन्तरे

यत्तु द्वित्वावच्छिन्नोद्देश्यताकबुद्धौ उद्देश्यतावच्छेदकव्यापकतानियमताँ विधेयसंसर्गे भासते इतिव्युत्पत्तिः । यत्र चोद्देश्यतावच्छेदकविशिष्टाधिकरणाऽप्रसिद्ध्या तद्व्यापकत्वमप्रसिद्धम्, तत्रापि खण्डशः प्रसिद्धानां तत्तद्घटकपदार्थानां विशेष्यविशेषणभावापन्नानां भानसम्भवान्न पीतशंखावत्रेत्यादौ तादृशव्युत्पत्तिभङ्गः । एवं चैकघटादिव्यक्तिमात्राधिकरणपरस्यात्र घटौ स्त इत्यादिवाक्यस्याऽप्रामाण्यं सुघटमेव, उद्देश्यतावच्छेदकीभूतघटमात्रवृत्तिद्वित्वव्यापकतायास्तादृशवाक्यप्रतिपाद्याया विधेयसंसर्गे बाधादिति ।

---

एतद्देशवृत्तित्वानवगाहिनोपीत्यर्थः । एकघटे । एतद्देशवृत्तिघटे । तदवगाहिनः । एतद्देशवृत्तित्वाश्रयत्वावगाहिनः । तथा तात्पर्येण । एतद्देशवृत्त्येकघटे एतद्देशवृत्तित्वाश्रयत्वबोधतात्पर्येण । तथा प्रयोगस्य । अत्र घटौ स्त इति प्रयोगस्य । व्यासज्यवृत्तिधर्मः । द्वित्वादिकम् । यत्र । अत्र घटौ स्त इत्यत्र । यावत्सु । घटद्वये । अन्वयितावच्छेदकस्य । द्वित्वादेः । तावतामेव । घटद्वयस्यैव । एवकारेण द्वित्वाश्रयप्रत्येकघटस्य व्यावृत्तिः । पदार्थान्तरेण । एतद्देशवृत्तित्वाश्रयत्वादिना । अन्वय इति । व्यासज्यवृत्तिधर्मस्य यावद्व्यक्तिषु अन्वयो भवति तावद्व्यक्तिष्वेव पदार्थान्तरस्यान्वय इत्यर्थः । तन्निर्वाहाय च । व्युत्पत्तिनिर्वाहाय च । तादृशधर्मावच्छिन्ने । व्यासज्यवृत्तिधर्मावच्छिन्ने । इतरान्वयबोधजनकसामग्र्या इति । एतद्देशवृत्तित्वान्वयबोधजनकाकाङ्क्षायोग्यताज्ञानघटितसामग्र्या इत्यर्थः । उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेवेति । एवकारेणोभयत्वाश्रययत्किञ्चिद्विशेष्यकपदार्थान्तरान्वयबुद्धित्वस्य व्यावृत्तिः । योग्यताभ्रमेणेति । आकाशौ द्वौ इति भ्रमेणेत्यर्थः । तादृशव्युत्पत्तेरिति । यावत्सु अन्वयितावच्छेदकस्य पर्याप्तिस्तदाश्रयस्याऽप्रसिद्ध्या "यावत्सु अन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणाऽन्वय इति व्युत्पत्तेरित्यर्थः । कार्यकारणभावस्य चेति । व्यासज्यवृत्तिधर्मावच्छिन्ने इतरपदार्थान्वयबोधजनकसामग्र्याः उभयत्वावच्छिन्नविशेष्यकपदार्थान्तर"एतद्देशवृत्तित्वाश्रयत्वप्रकारकबोधत्वावच्छिन्नं प्रत्येव कारणत्वमिति कार्यकारणभावस्य च कल्पनाऽसंभवादित्यर्थः ।

एकघटादिव्यक्तेरेतद्देशवृत्तितादशायां यत्र घटौ स्तः, अत्र घटाः सन्तीत्यादिप्रयोगाणामप्रामाण्यं प्रकारान्तरेणोपपादयति । यत्त्विति । ननु पीतशंखौ अत्र स्त इति वाक्यजन्यबोधे उद्देश्यतावच्छेदकीभूतद्वित्वव्यापकपीतशंखत्व-

तदपि तुच्छम्। अत्र घटौ स्त इत्यादौ द्वित्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य च तदधिकरणावृत्तिघटादिनिष्ठाभावप्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गतावच्छेदके बाधाद्घटद्वयाधिकरणपरतादृशवाक्यस्याप्रामाण्यापत्तेः। तत्तद्द्वित्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य तत्तद्विधेयसंसर्गांशे भानोपगमस्तु न संभवति, तत्तद्द्वित्वेनानुपस्थितेः। न च तदवच्छिन्नस्य संसर्गतया भाने तेन रूपेणोपस्थितिर्नापेक्ष्येति वाच्यम्। तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमित्याकारकतात्पर्यज्ञाने संसर्गस्य विशेषणतया तद्भाननिर्वाहाय संसर्गघटकोपस्थितेरपि शाब्दबोधात्प्रागावश्यकत्वात्। प्रकृतसंसर्गेण एकपदार्थविशिष्टापरपदार्थबोधपरत्वज्ञानस्य प्रकृतवाक्यार्थविषयकतया प्रागसंभवेनोपदर्शिततात्पर्यज्ञानस्यैव शाब्दधीहेतुत्वोपगमात्। एवं वाक्यार्थघटकसंसर्गस्यानुपगमे घटौ इत्यादौ वाक्यभेदप्रसङ्गाच्च।

---

वत्वमप्रसिद्धम्, तथाहि उद्देश्यतावच्छेदकव्यापकत्वम्, उद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम्, तथा चोद्देश्यतावच्छेदकाधिकरणाऽप्रसिद्धिरत आह। यत्रेति। तद्व्यापकत्वम्। द्वित्वव्यापकत्वम्। विशेष्यविशेषणभावापन्नानामिति। तथा चोद्देश्यतावच्छेदकविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितभेदविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितावच्छेदकत्वविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतावत्त्वेन भानसंभवादिति भावः। विधेयसंसर्गे। एतद्देशवृत्तित्वप्रतियोगिकस्वरूपसंबन्धे। बाधादिति। द्वित्ववद्देशान्तरीयघटनिष्ठभेदप्रतियोगितावच्छेदकत्वादुक्तसंबन्धस्येति भावः। देशान्तरीयघटद्वयमपि द्वित्ववत्तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकमेवैतद्देशवृत्तित्वप्रतियोगिकस्वरूपमित्याह। तदधिकरणावृत्तीति। द्वित्ववद्घटाधिकरणैतद्देशावृत्तीत्यर्थः। घटादिनिष्ठेति। घटद्वयान्तरादिनिष्ठेत्यर्थः। तत्तद्विधेयसंसर्गे। एतद्देशवृत्तित्वप्रतियोगिकस्वरूपसंबन्धे। तदवच्छिन्नस्य। तत्तद्द्वित्वावच्छिन्नस्य। संसर्गतया। संसर्गघटकतया। तेन रूपेण। तत्तद्द्वित्वत्वेन रूपेण। इत्याकारकतात्पर्यज्ञाने इति। अत्र घटौ स्त इति वाक्यं तद्द्वित्वव्यापकैतद्देशवृत्तित्वप्रतियोगिकस्वरूपसंबन्धावच्छिन्नैतद्देशवृत्तित्वप्रकारतानिरूपितघटनिष्ठविशेष्यताशालिशाब्दबोधेच्छयोच्चरितमिति तात्पर्यज्ञाने इत्यर्थः। तद्भाननिर्वाहाय। संसर्गभाननिर्वाहाय। संसर्गघटकोप-

अत्रोच्यते व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यतादृशधर्मवत्त्वमपि विधेयसंसर्गतया भासते इति व्युत्पत्तिः। व्याप्यत्वं च तद्वदन्यावृत्तित्वं व्यतिरेकिस्थले। तादृशधर्मवत्त्वं चोद्देश्यतावच्छेदकताघटकसंबन्धेन बोध्यम्।

अत्र घटौ स्त इत्यादौ एतद्देशवर्तमानत्वादिरूपविधेयस्य तद्वदन्यावृत्तित्वरूपव्याप्तिमच्चैतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव घटत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छेदकताटकसंबन्धावच्छिन्नं तद्वत्त्वं च घटादौ बाधितमिति न तादृशवाक्यस्य प्रामाण्यम्। अधिकरणस्य घटद्वयादिमत्त्वे च घटत्वादिव्याप्यं द्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसंबन्धेन तद्वत्त्वं घटादावबाधितमिति तादृशवाक्यस्य प्रामाण्यं निर्वहतीति।

---

स्थितेरपीति। संसर्गघटकतद्द्वित्वोपस्थितेरपीत्यर्थः। अपिना विशेषणविशेष्ययोः समुच्चयः। घटौ स्त इति वाक्यं तद्द्वित्वव्यापकैतद्देशवृत्तित्वप्रतियोगिकत्वरूपेणैतद्देशवृत्तित्वविशिष्टघटविषयकबोधेच्छयोच्चरितमिति तात्पर्यज्ञाने तत्तद्द्वित्वादेः संसर्गतया भानेपि तादृशतात्पर्यज्ञानस्य न कारणत्वमित्याह। प्रकृतसंसर्गेणेति। एतद्देशवृत्तित्वप्रतियोगिकस्वरूपेणेत्यर्थः। एकपदार्थविशिष्टेति। एतद्देशवृत्तित्वविशिष्टेत्यर्थः। अपरपदार्थेति। घटपदार्थेत्यर्थः। प्रागसंभवेनेति। शाब्दबोधात्प्रागसंभवेनेत्यर्थः। उपदर्शिततात्पर्यज्ञानस्यैवेति। तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिबोधपरमिति तात्पर्यज्ञानस्यैवेत्यर्थः। तत्तद्द्वित्वस्य संसर्गघटकत्वे दोषान्तरमप्याह। एवमिति। वाक्यभेदप्रसङ्गाच्चेति। तत्तद्द्वित्वघटितस्य संसर्गत्वे तत्तद्द्वित्वभेदात् संसर्गभेदः संसर्गभेदे च वाक्यभेदादित्यर्थः। संसर्गभेदस्य वाक्यभेदनियामकत्वादिति भावः।

अथेत्यादिनाऽऽशङ्कितं समाधत्ते। अत्रोच्यतेइति। स्वव्याप्यतादृशधर्मवत्त्वमपीति। स्वपदं विधेयपरम्। तादृशधर्मश्च उद्देश्यतावच्छेदकीभूतव्यासज्यवृत्तिद्वित्वादिरूपो धर्मः। एतद्देशवृत्तित्वव्याप्यद्वित्वत्वसंबन्ध इति यावत्। अपिना यत्राऽव्यासज्यवृत्तिधर्मोऽन्वयितावच्छेदकः तत्र विधेयस्य स्वरूपसंबन्धः समुच्चीयते। एवं चाऽत्र घटौ स्त इत्यत्र एतद्देशनिरूपितवृत्तितावन्तौ द्वित्ववन्तौ घटौ इति बोधः। वृत्तितावत्त्वं स्वरूप एतद्देशवृत्तित्वव्याप्यद्वित्ववत्त्वोभयसं०। संसर्गघटकद्वित्ववत्ता च उद्देश्यतावच्छेदकव्याप्य-

केवलान्वयिविधेयकस्थले च द्वित्वत्वाद्यवच्छिन्नत्वव्यापकत्वमेव संसर्गघटकम्। केवलान्वयिनि तादृशव्यापकताया अक्षतत्वात्। न तु तत्तद्द्वित्वत्वावच्छिन्नव्यापकत्वमिति न पूर्वोक्तदोषावकाशः।

---

पर्याप्तिसंबन्धेन। एतद्देशे एकघटसत्वे च एतद्देशवृत्तित्वाभाववति देशान्तरीयघटे द्वित्वस्य सत्त्वेन द्वितीयसंबन्धाभावेन न अत्र घटौ स्त इति प्रयोगापत्तिः। स्वरूपसंबन्धनिवेशाद् घटशून्यदेशेऽत्र घटोस्तीति न प्रतीतिः, कालिकेनैतद्देशवृत्तितावत्यपि घटे स्वरूपेणैतद्देशवृत्तित्वविरहात्। व्याप्यत्वं चेति। विधेयव्याप्यत्वं चेत्यर्थः। एतद्देशदेशान्तरस्थघटयोर्द्वित्वस्य नैतद्देशवृत्तित्वव्याप्यत्वम्, एतद्देशवृत्तित्वाभाववति देशान्तरस्थघटे द्वित्वस्य सत्वात्। ननु एतद्देशवृत्तित्वव्याप्योद्देश्यतावच्छेदकवत्वस्य कालिकेन देशान्तरस्थघटेपि सत्त्वात्तद्दोपतादवस्थ्यमत आह। तादृशधर्मवत्वं चेति। विधेयव्याप्योद्देश्यतावच्छेदकीभूतव्यासज्यवृत्तिद्वित्वादिमत्वं चेत्यर्थः। उद्देश्यतावच्छेदकताघटकसंबन्धेनेति। घटत्वव्याप्यपर्याप्तिसंबन्धेनेत्यर्थः। एतद्देशे एकघटस्यैकपटस्य च सत्वे अत्र घटौ स्त इति प्रतीतेर्न संभव इत्याह। अत्रेति। एतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे। मात्रपदेन घटान्तरस्य व्यावृत्तिः। तद्वदन्यावृत्तित्वरूपव्याप्तिमच्चेति। विधेयवदन्यावृत्तित्वरूपव्याप्तिमच्चेत्यर्थः। एतद्देशवृत्तित्वरूपविधेयव्याप्यमिति यावत्। अस्य घटपटादिनिष्ठद्वित्वमेवेत्यनेनाऽन्वयः।

एवकारेण देशान्तरीयघटसमवेतद्वित्वस्य व्यावृत्तिः। एतद्देशवृत्तित्वाभाववति देशान्तरीयघटे तादृशद्वित्वस्य सत्वात्। ननु तथापि एवकाराऽसंगतिः, घटद्वयगतद्वित्वस्यापि विधेयव्याप्यत्वादित्यत उक्तम्, एकघटव्यक्तिमात्राधिकरणत्वे इति। मात्रपदेन घटद्वयव्यावृत्तिः। तद्वत्त्वमिति। उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन विधेयव्याप्यद्वित्ववत्वमित्यर्थः। बाधितमेवेति। घटत्वाभाववति पटे पर्याप्तेः सत्वात्। अत्र घटौ स्त इत्यादिव्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबोधस्थले विधेयव्याप्यद्वित्ववत्वसंबन्धेन विधेयान्वयादेतद्देशे एकघटैकपटसत्वदशायामेतद्देशवृत्तित्वरूपविधेयव्याप्यद्वित्वरूपविधेयसंबन्धो घटपटोभयस्मिन्नेवास्ति न तु घटे तत्र घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्वस्य बाधात्, एतद्देशदेशान्तरस्थघटद्वयगतद्वित्वे चैतद्देशवृत्तित्वव्याप्यत्वस्य बाधादित्यर्थः। एतद्देशे

अत एव वक्ष्यति। अधिकरणस्य। घटदयादिमत्वे चेति।

घटावानयति चैत्र इत्यादौ चैत्रकर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकाधेयतादिसंबन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नः। तेन चैत्रादौ एकघटादिव्यक्तिमात्रानयनकर्तृत्वे न तादृशप्रयोगः। द्वित्वादिमत्वं च प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसंबन्धेन बोध्यम्। तेन चैत्रस्य पटादिसहितैकघटादिव्यक्त्यानयनकर्तृत्वेऽपि न तादृशप्रयोगः। एवमन्यत्राप्यूहनीयम्।

यत्राऽनेकवृत्तिधर्मो द्वित्वान्वयितावच्छेदतया भासते तत्रोभयादिनैव समं पदार्थान्तरस्याऽन्वयः। यत्रैकमात्रवृत्तिधर्मस्तथा तत्रैकेनापि व्युत्पत्तिभेदावलंबनात्कार्यकारणभाववैचित्र्याच्च सर्वं समञ्जसमित्यपि वदन्ति।

---

घटद्वयसत्वे अत्र घटौस्त इति प्रतीतेः प्रमात्वमुपपादयति। अधिकरणद्वयस्येति। तथा। एतद्देशवृत्तित्वरूपविधेयव्याप्यम्। तद्वत्वम्। विधेयव्याप्यद्वित्ववत्वम्। तथा च घटद्वये घटत्वव्याप्यपर्याप्तिसंबन्धेन एतद्देशवृत्तित्वव्याप्यद्वित्वमस्त्येवेति भावः। तादृशवाक्यस्य। अत्र घटौ स्त इति वाक्यस्य।

घटौ प्रमेयौ इत्यादौ तादात्म्येन प्रमेयविधेयकस्थले प्रमेयवदन्याप्रसिद्धिः, व्यापकसामानाधिकरण्यरूपव्याप्तेः प्रसिद्धत्वेपि सामानाधिकरण्यांशस्याऽनतिप्रयोजनकत्वमतो लाघवाच्चाह। केवलान्वयिविधेयकस्थले इति। द्वित्वत्वावच्छिन्नेति। उद्देश्यतावच्छेदकेत्यर्थः। तादृशव्यापकतायाः। उद्देश्यतावच्छेदकव्यापकतायाः। अच्चतत्वादिति। तथा च स्वनिष्ठव्यापकतानिरूपकोद्देश्यतावच्छेदकवत्वं संसर्गः। स्वपदं विधेयपरम्। न पूर्वोक्तदोषावकाश इति। न वाक्यभेदप्रसंग इत्यर्थः। घटावानयति चैत्र इत्यत्र आधेयतासंबन्धेन घटो द्वितीयार्थकर्मत्वे विशेषणम्। तत्राधेयतायां चैत्रकर्तृकानयनकर्मत्वव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकत्वं विशेषणम्। तस्य फलमाह। तेनेति। निरूपकताकत्वपर्यन्तविवक्षणेन। न तादृशप्रयोग इति। न घटावानयति चैत्र इति प्रयोग इत्यर्थः। एकस्मिन्घटे चैत्रकर्तृकानयनकर्मत्वव्याप्यद्वित्वस्याभावात्, द्वित्वस्यानयनकर्मत्वाभाववति देशान्तरस्थ घटेपि सत्वादिति भावः। तेन। घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्वस्य विवक्षणेन। न तादृशप्रयोग इति। न घटावानयति चैत्र इति प्रयोग इत्यर्थः। घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्वस्य घटेऽभावात्। घटत्वाभाववति

अथ घटादिव्यक्तिभेदेनानयनकर्मताभिन्नेति प्रतिसन्दधानस्य पुंसो-घटावानयतीति वाक्याच्छाब्दबोधानुपपत्तिः। तस्य कर्मतात्वावच्छेदेना-धेयतासंसर्गावच्छिन्नप्रतियोगिताकस्य द्वित्वावच्छिन्नघटाभावस्य निश्चय-संभवात्। तस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वा-दिति चेन्न।

---

पटेऽपि पर्याप्तिसंबन्धेन द्वित्वस्य सत्वादिति भावः। अन्यत्र। घटावानयति चैत्र इत्यादौ। ऊहनीयमिति। चैत्रकर्तृकानयनकर्मत्वव्याप्यबहुत्ववद्घट-विशिष्टकर्मतानिरूपकानयनानुकूलकृतिमांश्चैत्र इति बोध ऊहनीय इत्यर्थः। वै॰आधेयतासं॰। मतान्तरमाह। यत्र। अत्र घटौस्त इत्यादौ। अनेक-वृत्तिधर्मः। घटत्वादि। उभयादिनैवेति। घटद्वयेनैवेत्यर्थः। एवकारेणैक-घटस्य व्यावृत्तिः। व्युत्पत्त्यन्तरमाह। यत्र। आकाशौ स्त इत्यादौ। एकमात्र-वृत्तिधर्मः। आकाशत्वादिः। तथा। द्वित्वान्वयितावच्छेदकः। एकेनापि समम्। आकाशेनापि सममित्यर्थः। पदार्थान्तरस्याऽन्वय इति पूर्वेणान्वयः। पदार्थान्तरस्य। एतद्देशवृत्तित्वाश्रयत्वस्य। एतेनाकाशौ अत्र स्त इत्यादौ योग्यताभ्रमेण भ्रमात्मकशाब्दबोधस्यानुभविकत्वात्, तत्रानेकवृत्तिधर्मस्यो-द्देश्यतानवच्छेदकत्वात्तत्संग्रहानुपपत्तिरिति निरस्तम्। द्वितीयव्युत्पत्तेः स्वीकारात्। व्युत्पत्तिभेदावलंबनादिति। एतद्व्युत्पत्तिस्वीकारादित्यर्थः। कार्यकारणभाववैचित्र्याच्चेति। द्वित्वविशिष्टघटविशेष्यकैतद्देशवृत्तित्व-प्रकारकान्वयबोधं प्रति अत्रपदसमभिव्याहृतद्विवचनान्तघटपदज्ञानत्वेन कारणता। एवं द्वित्वविशिष्टाकाशविशेष्यकपदार्थान्तरान्वयबोधं प्रति अत्र पदसमभिव्याहृतद्विवचनान्ताकाशपदज्ञानत्वेन कारणतायाश्च कल्पनादिति भावः।

ननु घटावानयति चैत्र इत्यत्र द्वित्वविशिष्टघटप्रकारकर्मताविशेष्यक-बोधानुपपत्तिः। संयोगानुकूलव्यापारानुकूलव्यापारस्य धात्वर्थतया तज्जन्य-संयोगानुकूलव्यापारस्य कर्मतारूपत्वात्, व्यापारश्चाश्रयभेदेन भिन्न इति एकस्यां कर्मतायां द्वित्ववद्घटवैशिष्ट्याभावाद् घटावानयति चैत्र इति वाक्याच्छाब्दबोधानुपपत्तिमाशङ्कते। अथेति। प्रतिसन्दधानस्य। ज्ञानवतः। निश्चयसंभवादिति। कर्मत्वमाधेयतासंबन्धावच्छिन्नप्रतियोगिताकद्वित्ववद्-घटाभाववदिति निश्चयसंभवादित्यर्थः। द्वित्वविशिष्टघटस्याऽऽधेयतासंबन्धेन कर्मतामात्रेऽसत्वादिति भावः। तस्य। तादृशनिश्चयस्य। तादृशसंसर्गकेति।

उभयत्वाद्यवच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्ननिरूपिताधेयता-संसर्गावगाहिज्ञानमेव प्रतिबध्नाति न तु केवलं विशेष्ये विशेषणमिति-रीत्या जायमानमुभयत्वादिविशिष्टज्ञानम्। अतो विशेषदर्शिनां तादृश-वाक्याद्दोषायत्तमाधेयत्वांशे उभयत्वावच्छिन्ननिरूपितत्वावगाहिभ्रमात्मकं ज्ञानं न भवत्येव अपि तु तदंशे तदनवगाहिप्रमात्मकं ज्ञानमिति उभयत्वावच्छिन्ननिरूपिताधेयत्वंचोभयादिवृत्तावेकस्मिन्धर्मे एव न तु प्रत्येकमात्रवृत्ताविति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञानस्य भ्रमत्व-मित्यवधेयम्।

संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित्प्रतीयन्ते। यथा संपन्नौ व्रीहियवौ इत्यादौ एतत्तत्त्वं प्रागेवाभिहितम्। विरुद्धसंख्यावच्छिन्न-वाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदक संख्यायामेवान्वेति। यथा शतमेकं द्वेशते त्रीणिशतानीत्यत्र शतत्वादौ एकत्वद्वित्वबहुत्वानामन्वयः। अत एव च एकशतद्विशततात्पर्येण न शतानीति प्रयोगः। तत्र प्रकृत्यर्थस्य शतस्य बहुत्वाद्यन्वययोग्यत्वेपि प्रकृत्यर्थतावच्छेदकशतत्वांशे बहुत्वाद्यन्वय एव बहुवचनस्य साकांक्ष-त्वात् तत्र च योग्यताविरहात्।

---

आधेय ता संसर्ग केत्यर्थः। द्वित्वादिना घटादिविशिष्टधीविरोधित्वादिति। कर्मत्वमाधेयतासंबन्धेन घटवदितिधीविरोधित्वादित्यर्थः। समाधत्ते। उभयत्वावच्छिन्नाभाववत्ताज्ञानमिति। द्वित्वावच्छिन्न "घटनिष्ठ" निरूपकता-काधेयतासंबन्धावच्छिन्नप्रतियोगिताकद्वित्वविशिष्टघटाभाववत्ताज्ञानमित्यर्थ। इदं च विशिष्टवैशिष्ट्यावगाहिज्ञानम्। उभयत्वावच्छिन्ननिरूपितसंसर्गाव-गाहिज्ञानमेवेति। द्वित्वावच्छिन्ननिरूपकताकाधेयतासंसर्गावगाहि "तादृशा-धेयतासंबन्धेन कर्मत्वं घटवदि त" ज्ञानमेवेत्यर्थः। विशिष्टवैशिष्ट्यावगाहि-ज्ञानमेवेति यावत्। एवकारेणाधेयतासंसर्गकद्वित्वोपलक्षितघटप्रकारककर्मत्व-विशेष्यकज्ञानव्यावृत्तिः। घटावानयति चैत्र इति वाक्यजन्य ज्ञानं तु केवला-धेयतासंसर्गकद्वित्वोपलक्षितघटप्रकारककर्मत्वविशेष्यकम्, प्रत्येकस्यापि घटस्य द्वित्वाश्रयतया द्वित्वाश्रयघटवृत्तित्वस्य कर्मत्वे सत्वादिति भावः। अतः विशेष्ये विशेषणमिति रीत्या जायमानत्वात्। विशेषदर्शिनामिति। घटादि-व्यक्तिभेदेनानयनकर्मताभिन्ना– आनयनकर्मत्वमुभयत्वावच्छिन्ननिरूपकतानिरू-पिताधेयत्वाभाववत् – आनयनकर्मत्वनिष्ठाधेयत्वमुभयत्वावच्छिन्ननिरूपितत्वा-भावदितिज्ञानवतामित्यर्थः। तादृशवाक्यात्। घटावानयति चैत्र

न चैकशतेपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसंभवादेकशतनिष्ठशतत्वेपि बहुत्वान्वययोग्यताऽक्षतैवेति वाच्यम् । परस्परसमानाधिकरणद्वयावृत्तिबहुत्वस्यैव शतादिपदोत्तरबहुवचनार्थत्वात्, तादृशबहुत्वस्य एकशतादिवृत्तिनानाशतत्वादौ बाधात् । अथवा तत्रापि बहुत्वमेव बहुवचनार्थः । परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिरेवाकाङ्क्षानिरूपकः संबन्धः ।

इतिवाक्यात् । दोषायत्तामिति । आधेयत्वांशे दोषायत्तामित्यर्थः । दोषाधीनमिति यावत् । आधेयत्वांशे उभयत्वावच्छिन्ननिरूपितत्वावगाहीति । आनयनकर्मत्वनिष्ठाधेयत्वं उभयत्वावच्छिन्ननिरूपितत्ववदित्याकारकमित्यर्थः । न भवत्येवेति । न भवितुमर्हत्येवेत्यर्थः । विशेषदर्शनविरोधित्वादिति भावः । एवकारव्यवच्छेद्यमाह । अपि तु इति । तदंशे । आधेयत्वांशे । तदनवगाहि । उभयत्वावच्छिन्ननिरूपितत्वानवगाहि । आनयनकर्मत्वविशेष्यकोभयत्वावच्छिन्ननिरूपकतानिरूपितत्वप्रकारकज्ञानस्य भ्रमत्वे प्रयोजकमाह । उभयत्वावच्छिन्ननिरूपिताधेयत्वं चेति । उभयत्वावच्छिन्ननिरूकतानिरूपिताधेयत्वं चेत्यर्थः । एकस्मिन्धर्मे एव । यथा द्वित्वादौ । एवकारव्यवच्छेद्यमाह । न तु प्रत्येकवृत्तिधर्मे इति । यथा प्रकृते आनयनकर्मत्वे । कर्मत्वांशे इति । आनयनकर्मत्वविशेष्यकेत्यर्थः । तादृशाधेयत्वावगाहिज्ञानस्येति । उभयत्वावच्छिन्ननिरूकतानिरूपिताधेयत्वप्रकारकज्ञानस्येत्यर्थः । भ्रमत्वमिति । उभयत्वावच्छिन्ननिरूपितआधेयत्वाभाववति कर्मत्वे तादृशाधेयताप्रकारकत्वाद्भ्रमत्वमित्यर्थः । संख्याश्चेति । विभक्त्यर्थसंख्याश्चेत्यर्थः । नापि पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोध इत्याह । एतत्तत्त्वमिति । प्रागेव । संपन्नो व्रीहिरित्यस्य व्याख्यानावसरे एव । अत्रापि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व संबन्धेन द्विवचनार्थद्वित्वस्य प्रकृत्यर्थव्रीहियवयोरप्यन्वयः संभवतीति बोध्यम् । विरुद्धेति । विभक्त्यर्थसंख्याविरुद्धेत्यर्थः । प्रकृत्यर्थतावच्छेदकसंख्यायामेवेति । शतत्वे एवेत्यर्थः । एवकारेण प्रकृत्यर्थस्य शतत्वावच्छिन्नस्य व्यावृत्तिः । विरोधेन शतत्वावच्छिन्ने एकत्वान्वयाऽसंभवात् । शतत्वस्य चैक्यादिति भावः । उदाहरति । शतमेकमिति । एकपदं स्पष्टार्थम् । विभक्तेरेव संख्याबोधकत्वात् । एवमग्रेपि । तथा च शतमित्यस्मादेकत्वविशिष्टं यच्छतत्वं तद्वदिति बोधः । एवमग्रेपि । अतएव च । विभक्त्यर्थसंख्यायाः प्रकृत्यर्थतावच्छेदकीभूतसंख्यायामन्वयादेव च । तत्र । प्रयोगे । बहुत्वान्वये एवेति । एवकारेण प्रकृत्यर्थस्य शतादेर्व्यावृत्तिः । तत्र च । शतत्वे च । परस्परेति । परस्पर-

यत्तु द्वे शते—त्रीणि शतानीत्यादौ संख्यैव शतादिशब्दार्थः। न तु संख्येयं, संख्येयस्य तदर्थत्वे "विंशत्याद्याः सदैकत्वे सर्वाः संख्येय-संख्ययो"रित्यनुशासनविरोधाद् द्विवचनादिसाधुतानुपपत्तेः। गवां-शतानीत्यादौ षष्ठ्यर्थान्वयानुपपत्तेश्च। न चाऽभेदः षष्ठ्यार्थः। तथा सति ब्राह्मणा दशेत्यत्र ब्राह्मणानां दश इत्यपि स्यात्। अस्माकं चाऽऽदशतः संख्याः संख्येये वर्तन्ते अतः परं संख्याने संख्येये चेत्यनुशासनाद्दशादि-शब्दानां शतादिशब्दवत्संख्यानर्थकत्वाभावात् दशत्वादिसंख्यायाः पदार्थतावच्छेदकत्वेन तत्र षष्ठ्यर्थसंबन्धान्वयाऽसंभवेन न तथा प्रयोग इति।

---

समानाधिकरणं यच्छतत्वद्वयं "एकस्मिन्नेव शते नानापुरुषीयापेक्षाबुद्धिविशेष-विषयत्वरूपशतत्वद्वयं" तदवृत्तित्वस्य बहुत्वे बाधादित्यर्थः। तत्रापि। एकशते शतानीतिप्रयोगेपि। बहुत्वमेवेति। एवकारेण परस्परसमानाधि-करणद्वयावृत्तित्वस्य व्यावृत्तिः। पर्याप्तिरेवेति। एवकारेण केवलपर्याप्तेर्व्या-वृत्तिः। एवं च बहुत्वपर्याप्तौ परस्परसमानाधिकरणशतद्वयवृत्तित्वादेव एक-शतद्विशततात्पर्येण न शतानीति प्रयोगः। सप्तशतीत्यादावपि सप्तपदार्थस्य शतत्वसंख्यायामभेदेनाऽन्वयः। सप्ताऽभिन्नशतत्वसंख्यावतीति बोधः। क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्। अन्यथा शते धर्मिणि सप्तानाम-भेदान्वयो न संभवति, बाधितत्वात्। न च सप्तपदस्य सप्तगुणिते लक्षणा तस्य शतेन सहाऽभेदान्वय इति वाच्यम्। तथासति द्विगुसमासानुपपत्तेः। तदुक्तम्—

संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम्।
अभेदेनैव यत्स्वार्थे स द्विगुस्त्रिविधो मतः।

लक्षकभिन्नसंख्याबोधकनामोत्तरं यन्नाम स्वार्थधर्मिकतादात्म्यसंबन्धा-वच्छिन्नमुख्यार्थान्वयबोधं प्रति स्वरूपयोग्यं तन्नामविशिष्टं तन्नाम द्विगुरिति कारिकार्थः। पूर्वपदादलक्ष्यार्थस्य बोधे एव द्विगोः साधुत्वादिति भावः। एकशतद्विशततात्पर्येण शतानीति प्रयोगवारणाय मतान्तरमुपन्यस्यति। यत्त्विति। संख्यैवेत्येवकारव्यवच्छेद्यमाह। नत्विति। तदर्थत्वे। शतादि-पदार्थत्वे। द्विवचनादिसाधुतानुपपत्तेरिति। शतमित्येव स्यादिति भावः इदमुपलक्षणम्। पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधश्च। दोषान्तरमाह। गवामिति। मम तु गोवृत्तिशतत्वानीति बोधः। नचेति। तथा च गवाऽ-

तदसत्। गवां शतानीत्यादौ संख्यायाः प्राधान्येन शतादिशब्दवाच्यत्वे गवां शतं दद्यादित्यादौ शतादिपदार्थस्य संख्याया दानादिकर्मत्वान्वया योग्यतया प्रामाण्यानुपपत्तिः। गवां शतं शुक्लमित्यादौ संख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात्तदनुपपत्तिश्च। तस्माद्दशादिशब्दा इव-शतादिशब्दा अपि संख्यावच्छिन्नवाचका एव न तु धर्मिविशेषण-तानापन्नसंख्यावाचकाः। स्वार्थैकदेशेपि संख्यायां स्वप्रकृतिकविभक्त्यर्थ-संख्यान्वयसाकाङ्क्षतयाऽन्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षतया तेषां संख्यानार्थकताप्रवादः न तु दशादिशब्दानां तथात्वं दशादिब्राह्मण तात्पर्येण ब्राह्मणानां दशेत्यादिप्रयोगविरहादिति तेषां संख्येयमात्र-वाचिताप्रवाद इति। विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः। संख्यायां द्वित्वबहुत्वे स्त" इत्यनुशासनमप्युक्तार्थे तात्पर्यग्राहकम्। संख्याः। संख्यावाचकाः। संख्येये। संख्यावच्छिन्ने।

---

भिन्नानि शतानीति बोधः। तथासति। षष्ठ्या अभेदार्थकत्वे सति। अस्माकं च। पूर्वपक्षिणां च। आदशत इति। अष्टादशपर्यन्तम्। संख्याः। संख्यावाचकाः। संख्येये। संख्यावच्छिन्ने। वर्तन्तेइति। संख्येये ह्यादश त्रिषु इत्यनुशासनादिति भावः। तथा च दशब्राह्मणा इत्येव साधुर्न तु ब्राह्मणानां दशेति प्रयोगः साधुरित्यर्थः। दशपर्यन्तशब्दानां संख्यार्थकत्वाभावात्। अतः परं सामान्ये नपुंसकम्। अतः परं। विंशत्यादिसंख्याः संख्यायां संख्येये च वर्तन्ते। तथा च विंशति-ब्राह्मणाः इत्यत्र संख्येये विंशतिशब्दः एकवचनान्तः। ब्राह्मणानामेकविंशतिः ब्राह्मणानां द्वे विंशती ब्राह्मणानां तिस्रो विंशतयः इति संख्यार्थकत्वे एकवचन-द्विवचनबहुवचनानि भवन्तीत्यर्थः। तत्र। दशत्वादौ। न तथा प्रयोग इति। ब्राह्मणानां दश इति प्रयोग इत्यर्थः। प्रामाण्यानुपपत्तिरिति। सिद्धान्ते तु गोसमवेतशतत्वाश्रयं दद्यादिति बोधः। तदनुपपत्तिश्चेति। प्रामाण्यानुप-पत्तिश्चेति। सिद्धान्ते तु। षष्ठ्यर्थः शतपदार्थैकदेशे शतत्वेऽन्वेति। तथा च गोसमवेतं यच्छतत्वं तदवच्छिन्नं शुक्लमिति बोधः। तस्मात्। प्रामाण्यानु-पपत्तितः। एवकारव्यवच्छेद्यमाह। नत्विति। धर्मिविशेषणतानापन्नेति। केवलेत्यर्थः।

शतादिशब्दाः संख्येयवाचका एव, यत्र "शतमित्यादौ" शतपदोत्तर-विभक्त्यर्थसंख्यायाः शतत्वे तथा गवादिप्रकृतिकषष्ठ्यर्थसंबन्धविशिष्टशतत्वे

एकद्विबहुशब्दोत्तरैकवचनद्विवचनबहुवचनानि च न संख्याबोधकानि, उद्देश्यतावच्छेदकविधेययोरैक्येनैकत्वान्वये आकाङ्क्षाविरहादिति। तदुत्तरप्रथमाविभक्तिः साधुतामात्राय। नित्यबहुवचनान्ताऽबादिशब्दपरं प्रथमाबहुवचनमपि क्वचिन्निरर्थकमेव, यत्रैकव्यक्तितात्पर्येण तादृशशब्दः प्रयुज्यते तत्र बहुत्वान्वये योग्यताविरहात्। यत्तु तद्गतगुणादिसाधारणबहुत्वस्य तत्रान्वय इति तन्न शोभनम्। प्रकृत्यर्थतावच्छेदकव्याप्यपर्याप्तिसंबन्धेनैवाऽनेकवृत्तिसंख्यान्वयस्य व्युत्पन्नतया तादृशसंबन्धेन तथाविधबहुत्वान्वये योग्यताविरहात्। अन्यथोदासीनघटपटादिसाधारणबहुत्वस्याप्यन्वयसंभवेन तद्गतगुणादिसाधारणबहुत्वानुधावनस्याऽकिञ्चित्करत्वात्।

---

वाऽन्वयस्तत्र "गवां शतमित्यादौ" संख्यार्थकत्वप्रवाद इत्याह। स्वार्थैकदेशेपीति। शतत्वेपीत्यर्थः। स्वपदं शतादिशब्दपरम्। स्वप्रकृतिकविभक्तिः सुविभक्तिः तदर्थैकत्वान्वयसाकाङ्क्षतयेत्यर्थः। अन्यप्रकृतिकेति। गवादिप्रकृतिकेत्यर्थः। साकांक्षतयेति। गोवृत्तिशतत्वसंख्येति बोधात्। तेषां। शतादिशब्दानां। तथा च गवां शतं दद्यादित्यादौ गोवृत्तिएकशतत्वाश्रयकर्मकदानमिष्टसाधनमिति बोधः। तथात्वम्। न संख्यार्थकत्वप्रवाद इत्यर्थः। स्वार्थैकदेशशतत्वविशेष्यकविभक्त्यर्थएकत्वादिसंख्याप्रकारकबोधजनकशब्दत्वम् शतादिशब्दसंख्यार्थकम्। दशत्वस्य स्वाश्रयप्रकृतिकविभक्त्यर्थसंख्यान्वयसाकाङ्क्षत्वाभावात्। तथान्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षत्वाभावाच्चेतिभावः। दशादिशब्दानां संख्येयमात्रवाचित्वे युक्तिमाह। दशादीति। तेषां। दशादिशब्दानां। उक्तार्थे। यत्र विभक्त्यार्थसंख्यायाः प्रकृत्यर्थे विंशत्यादावन्वयस्तत्र विंशत्यादीनामेकवचनान्तत्वमेव। यत्र प्रकृत्यर्थतावच्छेदके विभक्त्यर्थेसंख्यान्वयः। यथा द्वेशतेत्रीणि शतानीत्यादौ, तत्र द्विवचनान्तत्वादिकमपीत्यर्थः। प्रसंगादाह। एकेति तदुत्तरं। एकादिपदोत्तरं। साधुत्वं च प्रत्यवायाजनकत्वम्। न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः इति निषेधात्। यत्र। एकजलव्यक्तौ। तादृशशब्दः। आप इति शब्दः। तत्र। एकव्यक्तौ। तद्गतगुणसाधारणेति। जलगतरूपरसादिसाधारणेत्यर्थः। तत्र। जलगतगुणेषु। तादृशसंबन्धेन। जलत्वव्याप्यपर्याप्तिसंबन्धेन। जलत्वव्याप्या या द्वित्वबहुत्वपर्याप्तिः सा जले एवास्ति न जलीयगुणेषु तत्र जलत्वाभावादिति। भावः। तथाविधबहुत्वान्वये। जलीयगुणसाधारणबहुत्वान्वये। अन्यथा।

अथाऽजहत्स्वार्थलक्षणया गुणादिसाधारणधर्मावच्छिन्नमेव प्रकृत्यर्थं इति चेत्तर्हि बहुत्वेन भासमानेषु गुणादिष्वपि पदार्थान्तरान्वयः स्यात्। तथाचाऽऽपो द्रव्याणि, दारा अत्र गृहे सन्तीत्यादिवाक्यानामप्रमाणतापत्तिः। गुणादिषु द्रव्याभेदे गृहवृत्तित्वादेर्बाधात्। मुख्यार्थमात्रपरतादृशशब्दानां बहुवचनान्ततानुपपत्तेश्चेति न किञ्चिदेतत्। अबादिपदार्थे एकत्वद्वित्वान्वययोग्यतासत्वेपि असाधुत्वादेव तदुत्तरमेकवचनं न प्रयुज्यते इति ध्येयम्।

आख्यातैकवचनस्य संख्यार्थकत्वे विवदन्ते निष्कर्षानुसारिणः। घटोऽस्तीत्यादौ सुवेकवचनादेव संख्याबोधसंभवात् चैत्रेण दृष्टोघट इत्यादि स्थलानुरोधेन तस्य तद्बोधकताया आवश्यकत्वात्। न चैकवचनत्वेनानुगतेनैकत्वशक्तत्वात्तिङेकवचनस्यापि एकत्ववाचकत्वमक्षतमिति वाच्यम्। एकवचनत्वस्यैकत्वशक्ततावच्छेदकतायाः प्रागेव निराकृतत्वात्। अस्तु वा तेनरूपेण तिङेकवचनस्याप्येकत्वे शक्तिस्तथापि तज्जन्योपस्थितेः शाब्दबोधोपयोगित्वे मानाभावः।

---

उद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धस्याविवक्षणे। पर्याप्तिसंबन्धेनैव बहुत्वान्वये इति यावत्। उदासीनाः। आप इत्येतज्जन्यशाब्दाऽविषयाः। धर्मावच्छिन्नमेवेति। एककारेण केवलजलस्य व्यावृत्तिः। तथा च जल-जलगत-गुणान्यतरदेव प्रकृत्यर्थः। एवं च तादृशान्यतरत्वरूपप्रकृत्यर्थतावच्छेदकव्याप्यपर्याप्तिसंबन्धेन बहुत्वान्वयः संभवत्येवेति शंकायां समाधत्ते। तर्हि बहुत्वेनेति। तथा च। पदार्थान्तरान्वये च। मुख्यार्थमात्रपरेति। जलमात्रपरेत्यर्थः। लाक्षणिकार्थपराऽऽप्दारादिशब्दानां बहुवचनान्तत्वोपपादनेपीत्यादिः। तादृशशब्दानां। बहुवचनान्ततानुपपत्तेश्चेति। एकस्मिन्परमाणौ एकस्यां योषिति आपः दाराः इति बहुत्वस्य बाधितत्वादिति भावः। न किञ्चिदेतदिति। तद्गतगुणानादाय बहुवचनोपपादनं न युक्तमित्यर्थः। असाधुत्वादेवेति। असाधुत्वं च सूत्राननुशिष्टत्वम्। तदुत्तरं। अप्दारादिशब्दोत्तरं। एकवचनमिति। द्विवचनस्याप्युपलक्षणम्।

आख्यातैकवचनस्येत्ति। कर्तृप्रत्ययस्थले आख्यातस्यैकवचनं सुबेकवचननियत तत्रैकत्वं सुबर्थ आख्यातार्थो वेति विवदन्ते इत्यर्थः। एवं कर्मप्रत्ययस्थलेपि। आख्यातद्विवचनबहुवचनयोश्च संख्यार्थकत्वे न विवादः। चैत्रोमैत्रश्च गच्छतः—स च त्वं चाहं च गच्छामः इत्यत्र सुबद्विवचनबहु-

नहि सामान्यत एकवचनज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुता-संभवः। तथासति एकत्वेऽगृहीते सुपदवृत्तिकस्य पुंसः सुपदप्रकृतिघटादि-पदोपस्थाप्यघटादौ पटादिपदोत्तररामादिपदोपस्थाप्यैकत्वाद्यन्वयबोध-प्रसंगः। किन्तु सुपदत्वादिप्रकारकज्ञानजन्यतदुपस्थितित्वादिनैव। तथासति घटादिपदोत्तरसुपदत्वादिरूपानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानघटितायां घटादावेकत्वान्वयबोधस्य सामग्र्यां सुपदत्वादिप्रकारकधीजन्योपस्थितेरन्तर्भावात्तादृशापत्तेरनवकाशात्। एवं तिबादिप्रकारकज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुत्वे मानाभाव इति।

---

वचनयोरनियमादाख्यातस्यैव द्वित्वबहुत्वार्थकत्वात्। यद्यपि आख्यातार्थ-विचारप्रसंगे एवायं विचारः कर्तुमुचितः--तथापि आख्यातैकवचनस्य सार्थकत्वे तत्समभिव्याहृतप्रथमैकवचनस्य संख्यार्थकत्वं न स्यदित्याशयेनाऽत्रैव-विचारः। निष्कर्षः। सिद्धान्त। सुबेकवचनादेवेति। एवकारेणाख्यातस्य व्यावृत्तिः। ननु विनिगमकाभावादाख्यातस्यैव संख्यार्थकत्वमस्त्वित्यत आह। चैत्रेण दृष्टो घट इति। तस्य। प्रथमैकवचनस्य। तद्बोधकतायाः। संख्याबोधकतायाः। आवश्यकत्वादिति। आख्यातविरहेण सुपैव संख्या-बोधनादिति भावः। प्रागेव निराकृतत्वादिति। एकवचनत्वादेर्दुर्वचत्वा-दित्यादिग्रन्थेनेति भावः। तुष्यतु दुर्जन इति न्यायेनाह। अस्तुवेति। तेन रूपेण। एकवचनत्वेन रूपेण। तथापि। तिङेकवचनस्यैकत्वे शक्तिसत्वेपि। तज्जन्येति। आख्याजन्येत्यर्थः। मानाभाव इति। वक्ष्यमाणरीत्या सुपदजन्यैकत्वोपस्थितेरेव शाब्दबोधोपयोगित्वात्। आख्यातजन्योपस्थितेरिव-एकवचनज्ञानजन्यैकत्वोपस्थितित्वेनापि शाब्दबोधोपयोगिता न संभवति, येन आख्यातजन्योपस्थितेरपि तेन रूपेणोपयोगिता स्यादित्याह। नहीति। घटोऽस्त पटं पश्येत्यादौ घटपदाद्घटोपस्थितौ सुपदादेकत्वानुपस्थितावपि पटमित्य-त्राम्पदेनैकत्वोपस्थितौ च एको घट इति शाब्दबोधप्रसंग इत्याह। तथासतीति। एकवचनज्ञानजन्यैकत्वोपस्थितेः शाब्दबोधोपयोगित्वे सतीत्यर्थः। घटादिपदो-पस्थाप्यघटादौ। अस्य अन्वयबोधप्रसंग इत्यनेनान्वयः। एकत्वाद्यन्वय-बोधप्रसंग इति। अम्पदरूपैकवचनज्ञानजन्यैकत्वोपस्थितिरूपकारणसत्वात्। किन्तु इति। तद्वारणायेति। शेषः। तदुपस्थितित्वादिनैवेति। एकत्वो-पस्थितित्वेनैवेत्यर्थ। हेतुतासंभव इति पूर्वेणान्वयः। एवकारेणऽम्पदज्ञान-जन्यैकत्वोपस्थितेर्व्यवच्छेदः। तथासति। सुपदज्ञानजन्यैकत्वोपस्थितित्वेन हेतुत्वेसति। अन्तर्भावादिति। एकत्वप्रकारकघटविशेष्यकशाब्दबोध-

यत्तु तिवादेः संख्यानभिधायकत्वे चैत्रः पचति तण्डुलं चैत्रेण पच्यते तण्डुलः इत्यादौ कर्तृकर्मवाचकपदात्तृतीयाद्वितीययोरापत्तिः। कर्तृकर्मसंख्याया अनभिधाने कर्तृकरणयोस्तृतीयेति कर्मणिद्वितीयेति सूत्राभ्यां तयोरनुशासनात्। नैयायिकमते लकारस्य कर्तृकर्मावाचकतया तदनभिधानस्य द्वितीयातृतीयानियामकत्वासंभवात्। न च कर्त्रादिगत-संख्यानभिधानमेव कथं कर्त्रादिवाचकपदोत्तरतृतीयादिनियामकम्, चैत्रेण पच्यते तण्डुल इत्यादिस्थलेपि लकारस्य चैत्रादिगतसंख्या-भिधायकत्वादेकत्वादिना एकत्वादिसामान्यस्यैवैकवचनाद्यभिधेयत्वादिति वाच्यम्। यतस्तद्गतसंख्यानभिधायकत्वं प्रकृते न तद्गतसंख्यानिष्ठ वृत्त्यनिरूपकत्वम्, अपि तु तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाननु-कूलत्वमेव। तथा च कर्त्रादिविशेष्यकसंख्यान्वयबोधाजनकलकारादि-समभिव्याहृतकर्त्रादिवाचकपदात्तृतीयादयो भवन्तीत्यत्र तदनुशासन-तात्पर्यम्।

---

सामग्र्यां घटपदोत्तरसुपदत्वरूपाकाङ्क्षाज्ञानजन्योपस्थितेरन्तर्भावादित्यर्थः। तादृशापत्तेरिति। एकत्वेऽगृहीतसुपदवृत्तिकस्य पुंसो घटादौ पटादिपदोत्त-राम्पदोपस्थाप्यैकत्वान्वयबोधापत्तेरित्यर्थः। एवं। सुपदजन्यैकत्वोपस्थितेर्हेतुत्वे। एकवचनपदजन्योपस्थितित्वेनाऽहेतुत्वे इति यावत्।

यत्त्विति। तन्न विचारसहमित्यनेनास्य संबन्धः। आपत्तौ हेतुमाह। कर्तृकर्मगतेति। तयोः। तृतीयाद्वितीययोः। वैयाकरणमतवत्कर्तृकर्मानभिधा-नमेव तृतीयाद्वितीययोर्नियामकमितिचेत्तदाह। नैयायिकमते इति। तदन-भिधानस्य। कर्तृकर्मानभिधानस्य। तृतीयाद्वितीयानियामकत्वाऽसंभवा-दिति। तथा च कर्तृकर्मगतसंख्यानभिधानस्यैव तृतीयाद्वितीयानियामकतया आख्यातस्य संख्यावाचकत्वमाश्यकमिति भावः। ननु एकवचनस्यैकत्वत्वा-वच्छिन्ने शक्तिस्वीकारेण चैत्रः पचतीत्यत्रेव चैत्रेण पच्यते इत्यत्राख्यातैकवचनेन चैत्रगतैकत्वाभिधानात् कर्तृगतसंख्यानभिधानस्य तृतीयानियामकत्वं न संभव-तीत्याशंकते। नचेति। एकत्वत्वादिना एकत्वादिसामान्यस्यैवेति। एव-कारेणैकत्वविशेषस्य व्यावृत्तिः। तथा च चैत्रेणेति तृतीयार्थैकत्वसंख्याया-श्चैत्रान्वितााया अपि लकारवाच्यत्वात्कर्तृगतसंख्याभिधायकत्वमेव, एवं तण्डुल मित्यत्रापि। तथा च तृतीयाद्वितीययोरनुपपत्तिरिति भावः। समाधत्ते। यत इति। तद्गतेति। चैत्रतण्डुलगतेत्यर्थः। प्रकृते। चैत्रेण पच्यतेइत्यत्र।

चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रादिविशेष्यकसंख्यान्वयबोधकत्वं नाख्यातस्य, आख्यातार्थभावनाया यत्रान्वयस्तद्विशेष्यकबोधस्यैवाऽऽख्यातेन जननात् तादृशभावनान्वयबोधे विशेष्यश्च प्रथमान्तपदोपस्थाप्य एव। चैत्रः पचति तण्डुलमित्यादौ चैत्रादिः साक्षादेव भावनाविशेष्यः, चैत्रेण पच्यते तण्डुल इत्यादौ तु परंपरया चैत्रादिनिष्ठभावनाजन्यफलशाली तण्डुलइत्याकारकबोधस्य तत्रोदयात्। तस्मात्तिबादेरपि संख्याबोधकत्वमावश्यकमिति। तन्न विचारसहम्। तथा हि। कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वं यदि तादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वं तदा यादृशतिबादिज्ञानेन सहकार्यन्तरविरहात्तादृशबोधो न जनितस्तद्योगेतृतीयाद्यापत्तेः। यदि च तादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभावस्तदा यगादिसमभिव्याहृतात्मनेपदज्ञानस्यापि तादृशबोधस्वरूपयोग्यत्वात्तत्स्वरूपयोग्यज्ञानाविषयतिबाख्यातस्यैवाऽप्रसिद्धेः।

---

न तद्गतेति। न चैत्रतण्डुलगतत्यर्थः। संख्यानिष्ठवृत्त्यनिरूपकत्वमिति। आख्यातैकवचनस्य चैत्रगतैकत्वनिष्ठशक्तिनिरूपकत्वात्। तद्विशेष्यकेति। कर्तृ-कर्मविशेष्यकेत्यर्थः। तथा च। तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाजनकत्वस्य कर्तृगतसंख्यानभिधानरूपत्वे च। तथा च कर्तृविशेष्यकसंख्याप्रकारकबोधाजनकलकारसमभिव्याहृतकर्तृवाचकपदात्तृतीयेति कर्तृकरणयोस्तृतीयेत्यनुशासनतात्पर्यम्। एवं कर्मविशेष्यकसंख्याप्रकारकबोधाजनकलकारसमभिव्याहृतकर्मवाचकपदाद् द्वितीयेति कर्मणिद्वितीयेत्यनुशासनतात्पर्यं बोध्यम्। परंपरया। स्वप्रयोज्यव्यापारजन्यफलवत्त्वसंबन्धेन। स्वं०भावना। तस्मात्। तिबादेःसंख्यानभिधायकत्वे कर्तृकर्मणोस्तृतीयाद्वितीयाव्यवस्थोपपत्तये। ननु तद्विशेष्यकसंख्याप्रकारबोधाननुकूलत्वमेव तद्गतसंख्यानभिधायकत्वमुक्तम्। तत्रानुकूलत्वं फलोपधायकत्वं स्वरूपयोग्यत्वं वेति विकल्प्य दूषयति। तथाहीति। तादृशबोधोपधायकेति। कर्त्रादिविशेष्यकसंख्याप्रकारकबोधविशिष्टेत्यर्थः। वै॰ स्वाव्यवहितपूर्वत्वसं०। तादृशबोधस्वरूपयोग्येति। तत्त्वं च कर्त्रादिविशेष्यकसंख्याप्रकारकबोधजनकतावच्छेदकानुपूर्वीमद्विषयकत्वम्। न तादृशो। न चैत्रविशेष्यकसंख्याप्रकारकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदका। तादृशपदज्ञानत्वेन। तेआदिपदज्ञानत्वेन। अहेतुत्वादिति। चैत्रविशेष्यकाख्यातार्थसंख्याप्रकारकान्वयबुद्धित्वावच्छिन्नं प्रति अहेतुत्वादित्यर्थः। ते आदिपदविषयतापि तादृश्येवेति। ते आदिपदज्ञाननिष्ठा-

अथ कर्त्रादिविशेष्यक संख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वमेव तादृशबोधाननुकूलत्वम्। चैत्रः पचतीत्यादि वाक्यघटकतिबादिविषयिता चैत्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका तादृशान्वयबुद्धित्वावच्छिन्नं प्रति चैत्रादिपदसमभिव्याहृततिबादिपदज्ञानस्य हेतुत्वात्। चैत्रेण पच्यते तण्डुल इत्यादि वाक्यघटक ते आदिपदविषयिता च न तादृशी चैत्रादिपदसमभिव्याहृततादृशपदज्ञानत्वेन तादृशबुद्धित्वावच्छिन्नं प्रत्यहेतुत्वात्।

न च चैत्रः पचते इत्यादौ चैत्रविशेष्यकाख्यातार्थसंख्याप्रकारकान्वयबोधोत्पत्त्या चैत्रादिसमभिव्याहृत ते आदिपदज्ञानत्वेन तादृशान्वयबुद्धित्वावच्छिन्नहेतुताऽऽवश्यकत्वेति चैत्रेण पच्यते इत्यादिवाक्यघटकीभूत ते आदिपदविषयितापि तादृश्येवेति वाच्यम्। चैत्रेण पचते चैत्रः पच्यते इत्यादिवाक्याच्चैत्रादिविशेष्यकस्य भावनाया, संख्यायाश्चान्वयबोधस्यानुदयात्। तद्विशेष्यकतदुभयान्वयबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तरतत्तदाख्यातपदज्ञानत्वेन हेतुत्वाच्चैत्रेण पच्यते तण्डुल इत्यादिवाक्यघटक ते आदीनां तादृशसमभिव्याहारादिशून्यतया तद्विषयिताया अतादृशत्वात्।

---

विषयितापि चैत्रादिविशेष्यकसंख्याप्रकारकान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिकैवेत्यर्थः। तथा च सर्वमप्याख्यातं कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकमेवेति कर्तृपदोत्तरतृतीयाप्रयोजकेदृशविषयित्वानिरूपकमाख्यातमेवाऽप्रसिद्धमिति भावः। तथा च कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतविषयित्वानिरूपकाख्यातसमभिव्याहृतकर्त्रादिवाचकपदात्कथं तृतीयेतिशङ्कायां समाधत्ते। चैत्रेण पचते इत्यादि। चैत्रादिविशेष्यकस्येति। अस्य भावनायाः अन्वयबोधस्यानुदयात्। एवं संख्याया अन्वयबोधस्यानुदयादित्यनेन संबन्धः। तद्विशेष्यकतदुभयान्वयबोधे। चैत्रविशेष्यकभावनासंख्योभयप्रकारकबोधे। तत्तदाख्यातपदज्ञानत्वेन। पचति पचते इत्याख्यातपदज्ञानत्वेन। हेतुत्वादिति। चैत्रादिविशेष्यकभावनासंख्योभयप्रकारकबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तरत्वे-

चैत्रः पद्यते इत्यादितः तण्डुलः पद्यते इत्यादितश्चैत्रतण्डुलादि विशेष्यकसंख्यान्वयबोधोत्पत्त्या चैत्रः पद्यते तण्डुलः इत्यत्रोभय-विशेष्यकसंख्यान्वयबोधौपयिकसमभिव्याहारज्ञानविषयितायाः ते इत्यादौ सत्वेन कर्तृकर्मणोस्तृतीयाद्वितीययोरप्रसक्तावपि न तादृश-वाक्यं व्युत्पन्नाः प्रयुंजते। कर्तरि साक्षात्कर्मणि च दर्शितपरंपरया युगपद्भावनाविशेषणकान्वयबोधजनकतया आख्यातस्याव्युत्पन्नतया तादृशवाक्यादुभयविशेष्यकान्वयबोधाऽसंभवात्। नचाकाङ्क्षायोग्य-तादिसत्वात्कथं न तादृशान्वयबोध इति वाच्यम्। अगत्या एकविधा-न्वयबोधेऽन्यविधान्वयबोधसामग्र्यास्तद्घटकतात्पर्यज्ञानस्य वा प्रति-बन्धकत्वोपगमात्।

---

पदज्ञानत्वेन हेतुत्वादित्यर्थः। तादृशसमभिहारशून्यतया। प्रथमान्त-चैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तरत्वरूपसमभिव्याहारशून्यतया। त-द्विषयितायाः। चैत्रेण पच्यते तण्डुल इत्येतद्वाक्यघटक ते आदिनिरूपितय-गादिज्ञाननिष्ठविषयितायाः। अतादृशत्वादिति। चैत्रादिविशेष्यकसंख्या-प्रकारकान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वादित्यर्थः। तथा च चैत्रः पच्यते इत्यादियगुत्तराख्यातस्य चैत्रविशेष्यकसंख्याप्रकारक-बुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वात्तत्सम-भिव्याहृतकर्तृपदे तृतीयैवेति चैत्रेण पच्यते इत्येव भवति न तु चैत्रः पच्यते इति भावः। संख्यान्वयबोधोत्पत्त्येति। संख्याप्रकारकान्वयबोधोत्पत्त्या इत्यर्थः। चैत्रः पद्यते इत्यत्र कर्तरि लृट्लकारः, तत्र कर्तृविशेष्यकसंख्याप्रकारक-बोधात्। एवं तण्डुलः पद्यते इत्यत्र कर्मणि लृट्लकारः, तण्डुलविशेष्यक-संख्याप्रकारकबोधादिति यावत्। उभयविशेष्यकसंख्यान्वयबोधौपयिकेति। चैत्रतण्डुलोभयविशेष्यकैकत्वसंख्याप्रकारकान्वयबोधौपयिकेत्यर्थः। सम-भिव्याहारज्ञानविषयितायाः। प्रथमान्तचैत्रतण्डुलपदसमभिव्याहृतपच्धातू-त्तरस्य विकरणोत्तर ते पदज्ञाननिष्ठविषयितायाः। अप्रसक्तावपीति। चैत्रादि-विशेष्यकसंख्याप्रकारकान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक-विषयित्वानिरूपकाख्यातपदसमभिव्याहृतचैत्रपदत्वं तृतीयानियामकम्। एवं तण्डुलविशेष्यकसंख्याप्रकारकान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपिजनकतावच्छे-दकविषयित्वानिरूपकाख्यातपदसमभिव्याहृततण्डुलपदत्वंद्वितीयानियामकम्, तयोरभावेपीत्यर्थः। ईदृशविषयितानिरूपकाऽऽख्यातपदसमभिव्याहृतचैत्रादि-

न च चैत्रेण तण्डुलः पच्यते, चैत्रस्तण्डुलं पच्यते इत्यादिवाक्यद्वयविषयकसमूहालंबनदशायामपि उभयविधान्वयबोधानुपपत्तिरिति वाच्यम् । तादृशैकविधान्वयबोधे तादृशान्यविधान्वयबोधपरत्वे वाऽगृह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुतया चैत्रः पच्यते तण्डुल इत्यादिवाक्यात्तादृशद्विविधान्वयबोधवारणस्य दर्शितवाक्यात्तदुपपादनस्य शक्यत्वात् ।

---

पदत्वं प्रथमानियामकमिति भावः। समाधानमाह। न तादृशवाक्यं व्युत्पन्नाः प्रयुञ्जते इति। अप्रयोगे हेतुमाह। कर्तरि साक्षादिति। समवायसंबन्धेन। परंपरया। स्वप्रयोज्यव्यापारजन्यफलवत्वसंबन्धेन। अव्युत्पन्नतयेति। कर्त्तरि कर्मणि च उक्तसंबन्धाभ्यां भावनाविशेषणकान्वयबोधस्य युगपज्जनकतायाः आख्यातस्याऽव्युत्पन्नतयेत्यर्थः। तादृशवाक्यात्। चैत्रः पच्यते तण्डुलः इति वाक्यात्। उभयविशेष्यकेति। चैत्रतण्डुलोभयविशेष्यकेत्यर्थः। शंकते। नचेति। समाधत्ते। अगत्येति। उपायान्तराभावेन। एकविधान्वयबोधे। चैत्रविशेष्यकाख्यातार्थैकत्वप्रकारकबोधे। अन्यविधान्वयबोधसामग्र्याः। तण्डुलविशेष्यकाख्यातार्थसंख्याप्रकारकान्वयबोधसामग्र्याः। आकाङ्क्षायोग्यतातात्पर्यज्ञानादिरूपायाः। लाघवादाह। तद्घटकेति। सामग्रीघटकेत्यर्थः। तात्पर्यज्ञानस्यैवेति। चैत्रः पच्यते इति वाक्यं चैत्रविशेष्यकैकत्वसंख्याप्रकारकबोधं जनयतु, पच्यते तण्डुलः इति वाक्यं तण्डुलविशेष्यकाख्यातार्थसंख्याप्रकारकबोधेच्छयोच्चरितमित्याकारकस्येत्यर्थः। प्रतिबन्धकत्वोपगमादिति। तथा च सुन्दोपसुन्दन्यायेन सत्प्रतिपक्षस्थलीयानुमितिवच्चैत्रतण्डुलोभयविशेष्यकाख्यातार्थसंख्याप्रकारकबोधानुदय इति भावः। शंकते। नचेति। उभयविधान्वयबोधानुपपत्तिरिति। चैत्रविशेष्यकशाब्दबोधे तण्डुलविशेष्यकशाब्दसामग्र्याः, एवं तण्डुलविशेष्यकशाब्दबोधे चैत्रविशेष्यकशाब्दसामग्र्याः प्रतिबन्धकत्वादिति भावः। पूर्वपक्षी समाधत्ते। तादृशैकविधान्वयबोधे इति। प्रथमान्ततण्डुलपदसमभिव्याहृतपच्यते इत्याख्यातजन्यतण्डुलविशेष्यकसंख्याप्रकारकान्वयबोधे इत्यर्थः। तादृशान्यविधान्वयबोधपरत्वेन। प्रथमान्तचैत्रपदसमभिव्याहृतपच्यते इत्याख्यातजन्यचैत्रविशेष्यकसंख्याप्रकारकान्वयबोधपरत्वेनेत्यर्थः। अगृह्यमाणेति। अन्यबोधपरत्वप्रकारकज्ञानाविषयीभूतेत्यर्थः। तथाविधाख्यातेति। पच्यते इत्याख्यातेत्यर्थः। चैत्रः पच्यते तण्डुल इति वाक्यघटकपच्यते

न च निरुक्तसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वे चैत्रेण स्वं दृश्यते चैत्रः स्वं पश्यतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः। कर्त्रादिविशेष्यकसंख्याप्रकारकान्वयबोधौपयिकाकाङ्क्षाज्ञानीयविषयिता-निरूपकत्वस्य तत्राख्याते सत्वादिति वाच्यम्। कर्त्रादिपरयत्पदाख्यात-पदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वा-निरूपकस्तत्पदोत्तरं तृतीयाविभक्तिरिति नियमोपगमेन प्रथमस्थले चैत्र-परस्वपदाख्यातपदयोर्द्वितीये च तत्परचैत्राख्यातपदयोः समभिव्याहा-रस्यैव तद्विशेष्यकसंख्यान्वयबोधप्रयोजकतया क्रमेण चैत्रपदस्वपदाभ्यां तृतीयाद्वितीययोरनुपपत्त्यनवकाशादिति चेन्न।

---

इत्याख्यातस्यान्यविधबोधपरत्वप्रकारकज्ञानविशेष्यत्वान्न हेतुत्वमिति भावः। तादृशद्विविधान्वयबोधवारणस्येति। तण्डुलचैत्रोभयविशेष्यकतादृशद्विवि-धान्वयवारणस्येत्यर्थः। शक्यत्वादिति। चैत्रः पच्यते तण्डुल इत्यत्रैकमेवाऽ-ख्यातं पच्यते इति, तच्च चैत्रविशेष्यकसंख्याप्रकारकान्वयबोधपरत्वेन गृह्य-माणम्, अथ च चैत्रान्यतण्डुलविशेष्यकसंख्याप्रकारकान्वयबोधपरत्वेनापि गृह्यमाणं भवतीत्यगृह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानरूप-हेत्वभावादिति भावः। दर्शितवाक्यात्। चैत्रेण पच्यते तण्डुलः चैत्रः पच्यते तण्डुलमिति वाक्यात्। तदुपपादनस्य। तण्डुलविशेष्यकचैत्र-विशेष्यकबोधोपपादनस्य। शक्यत्वादिति। उक्तसमूहालंबनवाक्यद्वयजन्य-शाब्दबुद्धौ तण्डुलः पच्यते इति कर्माख्याततण्डुलविशेष्यकसंख्याप्रकार-कान्वयबोधपरत्वेन गृह्यमाणमपि तत्कर्माख्यातं चैत्रविशेष्यकसंख्याप्रकार-कान्वयबोधपरत्वेनाऽगृह्यमाणम्। एवं चैत्रः पच्यते इति कर्त्राख्यातं चैत्र-विशेष्यकसंख्याप्रकारकान्वयबोधपरत्वेन गृह्यमाणमपि तत्कर्त्राख्यातं तण्डुल-विशेष्यकसंख्याप्रकारकान्वयबोधपरत्वेनाऽगृह्यमाणम्। आख्यातयोर्भेदात्। एवंचाऽगृह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानरूपहेतोः सत्वा-दिति भावः।

ननु कर्तृविशेष्यकसंख्याप्रकारकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकता-वच्छेदकविषयित्वानिरूपकतिबादिसमभिव्याहृतकर्तृवाचकपदात्तृतीया, एवं कर्मविशेष्यकसंख्याप्रकारकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक विषयित्वानिरूपकतिबादिसमभिव्याहृतकर्मवाचकपदाद् द्वितीयेति कर्तृकरण-योस्तृतीया, कर्मणि द्वितीयेत्यनुशासनार्थः। तत्राशंकते। नचेति। निरुक्त-

अनभिहिते इत्यधिकारे कर्तृकरणयोस्तृतीयेत्यनुशानस्य किं प्रयोजनमिति वक्तव्यम्। चैत्रः पचति तण्डुलः पच्यते इत्यादौ चैत्र-तण्डुलपदाभ्यां तृतीयाद्वितीययोरप्रयोग इति चेत् तत्कि मणिमन्त्रा-दिन्यायेन तादृशानुशासनस्य तथाविधप्रयोगविरोधिता, येन तदभाव-स्तत्प्रयुक्तः स्यात्। न चैवं संभवति। पचति—पच्यते इत्यादि क्रिया-योगे कर्तृकर्मवाचकपदानन्तरतृतीयाद्वितीययोरसाधुत्वस्य तत्कर्तृत्व—तत्कर्मत्वादिबोधौपयिकाकाङ्क्षादिरहितत्वादिरूपस्य प्रतिपत्तिः प्रयो-जनं तस्येतिचेत्तर्हि उक्तनियमपरतयापि न ततस्तल्लाभः।

---

संख्यानभिधानस्येति। चैत्र-तण्डुलविशेष्यकसंख्याप्रकारकबोधजनकतावच्छे-दकविषयित्वानिरूपकाख्यातसमभिव्याहाररूपस्येत्यर्थः। तृतीयाद्वितीययोर-नुपपत्तिरिति। उभयत्र "स्वं दृश्यते स्वं पश्यतीत्यत्र च" स्वपदार्थश्चैत्र-रूपकर्त्ता, तद्विशेष्यकसंख्याप्रकारकबोधजनकतावच्छेदकविषयितानिरूपक दृश्यते पश्यतीत्याख्यातसमभिव्याहारस्य चैत्रपदे कर्मवाचकस्वपदे च सत्वेन तृतीयाद्वितीययोरनुपपत्तिरित्यर्थः। तत्र। स्वं दृश्यते इत्यत्र स्वं पश्यतीत्यत्र च। तत्वादिति। तथा च तादृशविषयित्वानिरूपकाख्यातसमभिव्याहारस्य चैत्रपदे स्वपदे चासत्वादित्यर्थः। प्रथमस्थले। चैत्रेण स्वं दृश्यते इत्यत्र। चैत्रपरस्वपदाऽऽख्यातपदयोः। अस्य समभिव्याहारस्यैवेत्यनन संबन्धः। एवकारेण चैत्रपदाऽऽख्यातपदयोर्व्यावृत्तिः। द्वितीयेच। चैत्रः स्वं पश्यतीत्यत्र च। तत्परेति। चैत्रपरेत्यर्थः। समभिव्याहारस्यैवेति। एवकारेणस्वपदाऽऽ-ख्यातपदयोर्व्यावृत्तिः। अनुपपत्त्यनवकाशादिति। प्रथमस्थले चैत्र पदाऽऽ-ख्यातपदसमभिव्याहारस्य तादृशविषयित्वानिरूपकत्वात्। चैत्रः स्वं पश्यतीत्यत्र च स्वपदाऽऽख्यातपदयोः समभिव्याहारस्य तादृशविषयित्वानिरू-पकत्वादिति भावः।

अथ कर्त्रादिविशेष्यवाचकेत्यारभ्य तृतीयाद्वितीययोरनुपपत्त्यनवकाशा-दितिपूर्वपक्षग्रन्थं समाधत्ते। अनभिहिते इति। अप्रयोगइति। प्रयोगा-भाव इत्यर्थः। अनभिहिते इत्यधिकारस्य प्रयोजनमिति शेषः। तादृशानु-शासनस्य। कर्तृकरणयोस्तृतीया—कर्मणि द्वितीयेत्यनुशासनस्य। तथा-विधप्रयोगविरोधिता। तृतीया-द्वितीययोःप्रयोगविरोधिता। येन। विरोधेन। तदभावः। तृतीया-द्वितीयाप्रयोगाभावः। तत्प्रयुक्तः स्यादिति। अनुशासनप्रयुक्तः स्यादित्यर्थः। न चैवं संभवतीति। प्रयोगाभावस्तु न

प्रथमान्तचैत्रतण्डुलपदतत्तदाख्यातपदयोः समभिव्याहारस्यैव चैत्रतण्डुलादिविशेष्यकतत्तदाख्यातार्थसंख्यान्वयबोधप्रयोजकतया चैत्रेण पचति तण्डुलं पच्यते इत्यादिवाक्यघटकचैत्रतण्डुलादिपदतत्तदाख्यातपदयोः समभिव्याहारस्याऽतथात्वेन तद्घटकतृतीया द्वितीययोः साधुत्वस्योक्तनियमाऽव्यवच्छेद्यत्वात्। तस्मान्मुख्य भाक्तसाधारणकर्तृत्व कर्मत्वयोः कर्तृकर्मवाचकपदसमभिव्याहृततत्कृत्तद्धितसमासैरनभिधानमेव तृतीयाद्वितीयादिनियामकम् शिरोमणिभिरत्रैव निर्भरविहितः।

---

संभवतीत्यर्थः। प्रयोगाभावे तदुच्चारणमपि अशक्यं स्यादिति भावः। अनुशासनस्य प्रयोजनान्तरं निषेधति। पचतीति। असाधुत्वस्येति। अस्य प्रतिपत्तौ अन्वयः। तथा चाऽसाधुत्वस्य प्रतिपत्तिः प्रयोजनमानुशास्येत्यर्थः। असाधुत्वं निर्वक्ति। तत्कर्तृत्वेति। तत्कर्मत्वादीति। पाककर्मत्वादीत्यर्थः। तथा च पचतीतिक्रियायोगे पाककर्तृत्वप्रकारक बोधौपयिकाङ्क्षा प्रथमाविभक्तौ, तादृशाकाङ्क्षाराहित्यरूपमसाधुत्वं तृतीयायाम्। एवं पच्यते इति क्रियायोगे पाककर्मत्वबोधौपयिकाङ्क्षा प्रथमाविभक्तौ, तादृशाकाङ्क्षाराहित्यरूपमसाधुत्वं द्वितीयाविभक्तौ बोध्यम्। उक्तनियमपरतयापीति। कर्तृपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकस्तत्पदोत्तरं तृतीया, एवं कर्मपरयत्पदाख्यातपदयोः समभिव्याहारस्तादृशविषयित्वानिरूपक स्तत्पदोत्तरं द्वितीयेतिनियमपरतयापीत्यर्थः। ततः। अनुशासनतः। न तल्लाभः। न चैत्रेण पचति, तण्डुलं पच्यते इति प्रयोगयोरसाधुत्व लाभः। तृतीया-द्वितीययोर साधुत्वलाभाभावं प्रतिपादयति। प्रथमान्त चैत्रतण्डुलपदेति। तत्तदाख्यातपदयोः। पचति-पच्यते इत्याख्यातपदयोः। समभिहारस्यैवेति। चैत्रः पचति--तण्डुलः पच्यते इति समभिव्याहारस्यैवेत्यर्थः। एवकारेण चैत्रेण पचति-- तण्डुलं पच्यते इत्यनयोर्व्यावृत्तिः। बोधप्रयोजक तयेति। तादृश बोधत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकतयेत्यर्थः। अतथात्वेनेति। चैत्र—तण्डुलविशेष्यकतत्तदाख्यातार्थसंख्याप्रकारकान्वयबोधाप्रयोजकत्वेनेत्यर्थः। तादृशबोधजनकतावच्छेदकविषयित्वानिरूपकतयेति यावत्। उक्तानियमाऽव्यवच्छेद्यत्वादिति। उक्तनियमेन व्यावृत्त्यसंभ-

लादीनां तदनभिधायकत्वं च न तदवाचकत्वम्, तन्निष्ठवृत्त्यनिरूपकत्वं वा, आख्यातत्वेन तेत्वादिना-वा कर्तृत्वादिनिष्ठशक्तिलक्षणानिरूपकत्वात्, कर्तृत्वानभिधायकाख्यातस्यैवाऽप्रसिद्धः। तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वमेव तत्। चैत्रेण पच्यते तण्डुल इत्यादावाख्यातस्य कर्तृत्वादिवाचकत्वेऽपि तच्छाब्दबोधौपयिकाकाङ्क्षाराहित्यं तत्राक्षतमेव। चैत्रपदोत्तरतृतीययैवकर्तृत्व बाधनसंभवात्। तत्र तादृशाकाङ्क्षाया अकल्पनादित्यपि न। चैत्रेण पच्यते इत्यादौ तृतीयानुपपत्तेः। पच्यते चैत्र इत्यादितश्चैत्रादौ पाककृतेः,। केवलात्पच्यते इत्यादितश्च मुख्यविशेष्यतया तस्याबोधात्तादृशाख्यातधात्वोरानुपूर्वीविशेष्याकाङ्क्षायाः कृतिबोधौपयिकत्वात्।

---

वादित्यर्थः। प्रत्युत तादृशविषयित्वानिरूपकत्वात्तृतीयाद्वितीययोरापत्तिरेव स्यात्। उक्तनियमवाक्याच्चैत्रेण पचतीत्यत्र तृतीया, तण्डुलं पच्यते इत्यत्र द्वितीया न साध्वीत्वप्रतिपादिकेति भावः। तस्मात्। आख्यातेन कर्तृकर्मगतसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वासंभवात्। कर्तृत्वकर्मत्वयोरिति। अस्याऽनभिधानमित्यनेनाऽन्वयः। कर्तृत्वकर्मत्वयोरेवानभिधानमित्यर्थः। एवकारेण कर्तृकर्मगतसंख्यानभिधानस्य व्यावृत्तिः। अत्रैवेति। लादीनां कर्तृत्वकर्मत्वयोरेवानभिधानं तृतीयाद्वितीयानियामकमित्यत्रैवेत्यर्थः। तदनभिधायकत्वं चेति। कर्तृत्वकर्मत्वानभिधायकत्वं चेत्यर्थः। तन्निष्ठवृत्त्यनिरूपकत्वं वेति। कर्तृत्वकर्मत्वनिष्ठशक्तिलक्षणान्यतररूपवृत्त्यनिरूपकत्व वेत्यर्थः। आख्यातत्वेनेति। आख्यातसामान्यस्येवेत्यर्थः। तच्छाब्दबोधौपयिकेति। कर्तृविशेष्यकाख्यातार्थसंख्याप्रकारकशाब्दबोधजनकेत्यर्थः। तत्। तदनभिधायकत्वम्। अस्य तदपि नेत्यनेनान्वयः। आख्यातस्य। आख्यातत्वेन रूपेणेति शेषः। कर्तृत्वादिवाचकत्वेपीति। अनेन कर्तृत्वाद्यनभिधायकत्वाभावः सूचितः। तच्छाब्दबोधोपयिकाकाङ्क्षाराहित्यमिति। तथापीत्यादिः। कर्तृत्वाद्यनभिधायकत्वमिति शेषः। तत्र। चैत्रेण पच्यते इत्यत्र। अक्षतमेवेति। कर्तृत्वादिविषयकशाब्दप्रयोजिकाऽऽकाङ्क्षा पचति पचते इत्यत्र ते प्रत्ययादौ तद्राहित्यस्य चैत्रेण पच्यते इत्याख्यातेऽक्षतत्वादित्यर्थः। तत्र चैत्रविशेष्यकाख्यातार्थप्रकारकबोधानुदयात्। तथा च कर्तृत्वादिविषयकशाब्दप्रयोजकाकाङ्क्षाराहित्यरूपकर्तृत्वाद्यनभिधानसत्वात्तृतीयोपपत्तिरिति भावः। तृतीययैवेत्येवकारेणाख्यातव्या-

न च समभिव्याहाररूपाकाङ्क्षैव विवक्षणीया, प्रकृते प्रकृतिप्रत्यययोरानुपूर्वीरूपाकाङ्क्षा न तु समभिव्याहार इति नोक्तानुपपत्तिरिति वाच्यम्। तथासति चैत्रेण पचतीत्यादावपि तृतीयायाः साधुतापत्तेः। तादृशचैत्रपदाख्यातपदयोः समभिव्याहारस्य कृतिबोधानौपयिकत्वात्। चैत्रेण विजेष्यते मैत्र इत्यादौ तृतीयानुपपत्तेश्च। विजेष्यते मैत्र इत्यादितो मैत्रकृतिबोधात्तादृशाख्यातमैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात्। किन्तु तत्तात्पर्यशून्यत्वमेव तथाच चैत्रेण पच्यते इत्यादौ आख्यातस्य कर्तृत्वादितात्पर्यकत्वे तृतीया असाधुरेव। चैत्रेण पचतीत्यादौ आख्यातस्याऽर्थाऽविवक्षायां तृतीयायाः साधुत्वेपि परस्मैपदस्याऽसाधुत्वान्नप्रयोगः। परस्मैपदस्याऽसाधुत्वं च धात्वर्थविशेष्यस्य प्रत्ययेनाऽविवक्षणे भावकर्मणोरितिसूत्रेणात्मनेपदनियमात्। आख्यातार्थाऽविवक्षायां न चैत्रेण पचतेइत्यादिप्रयोगः। शबादिविकरणस्याऽसाधुत्वात् कर्तृत्वतात्पर्यकसार्वधातुकयोगे एव तत्साधुत्वात् कर्तृत्वकर्मत्वोभयतात्पर्येण मैत्रः पच्यते तण्डुल इत्यादयस्तु न प्रयोगाः।

---

वृत्तिः। तत्र। पच्यते इत्याख्याते। तादृशाकाङ्क्षायाः। कर्तृविशेष्यकाख्यातार्थसंख्याप्रकारकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकानुपूर्वीमत्वरूपायाः। अकल्पनादिति। कल्पनापेक्षाभावादित्यर्थः। तृतीययैव कर्तृत्वविषयकशाब्दबोधनिर्वाहे पच्यते इत्याख्यातस्य कारणता न कल्प्य इति भावः। तृतीयानुपपत्तेरिति। कर्तृत्वादिविषयकशाब्दबोधप्रयोजिका काङ्क्षैव चैत्रेण पच्यते इति कर्माख्यातेप्यस्ति "आख्यातधात्वोरानुपूर्वीविशेषस्यैवं न तु समभिव्याहारस्य" आकाङ्क्षात्वादानुपूर्व्याश्चैक्यात्" उक्ताकाङ्क्षाराहित्यरूपकर्तृत्वाद्यनभिधायकत्वस्य तृतीयानियामकस्याभावात्तृतीयानुपपत्तेरित्यर्थः। पाककृतेरिति। अस्य बोधादित्यनेनान्वयः। तस्याः। कृतेः। तादृशाख्यातधात्वोः। पच्यते इत्याख्यातधात्वोः। आनुपूर्वीविशेषाकाङ्क्षायाः। तद्धातूत्तरप्रत्ययत्वरूपाकाङ्क्षायाः। कृतिबोधौपयिकत्वात्। कृतिविशेष्यकबोधजनकत्वात्। तथा च पच्यते इत्याख्याते पच्धातूत्तरतेप्रत्ययत्वरूपाकाङ्क्षायाः सत्वेन तादृशाकाङ्क्षाशून्यत्वरूपकर्तृत्वानभिधायकत्वाभावाच्चैत्रेणेत्यत्र तृतीयाया अनुपपत्तिरितिभावः।

तदेकतरबोधेऽन्यपरत्वेनाऽगृह्यमाणाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वात्। चैत्रेण पच्यते तण्डुल इत्यादौ कर्तृत्वादौ आख्यातस्य तात्पर्यग्रहे कर्मत्वाद्यन्वयबोधोऽपि न भवत्येव।

---

ननु प्रकृतिप्रत्ययोरेव पूर्वापरीभावरूपाऽऽकाङ्क्षा, प्रातिपदिकार्थधात्वर्थयोस्तु समभिव्याहार एवाकाङ्क्षा, वैपरीत्येपि आकाङ्क्षासद्भावात्। तथा च कर्तृविशेष्यकाख्यातार्थप्रकारकबोधं प्रति प्रथमान्तचैत्रपदसमभिव्याहृताख्यातसमभिव्याहार एवाकाङ्क्षा, चैत्रः पच्यते इत्यत्राख्यातधात्वोरानुपूर्वीरूपाकाङ्क्षासत्वेपि उक्तसमभिव्याहाररूपाऽऽकाङ्क्षाशून्यत्वान्न तृतीयानुपपत्तिरित्याशंकते। न चेति समभिव्याहाररूपाकाङ्क्षैवेति। एवकारेण पूर्वापरीभावरूपाया व्यावृत्तिः। तादृशचैत्रपदेति। तृतीयान्तचैत्रपदेत्यर्थः। कृतिबोधानौपयिकत्वादिति। कृतिबोधौपयिकप्रथमान्तचैत्रपदसमभिव्याहाररूपाकाङ्क्षाराहित्यरूपकर्तृत्वानभिधायकत्वरूपकारणसत्वाच्चैत्रेण पचतीत्यत्र तृतीयायाः साधुतापत्तिरित्यर्थः। आपत्तिमुक्त्वाऽनुपपत्तिमाह। चैत्रेण विजेष्यते मैत्र इति कर्मणि प्रत्ययः कर्तरि प्रत्ययेपि विजेष्यते मैत्र इत्येव। तथा च विजेष्यते मैत्र इति कर्तृप्रत्ययस्थले कर्तृत्वबोधप्रयोजकप्रथमान्तमैत्रपद, विजेष्यते इत्याख्यातपदसमभिव्याहाररूपाकाङ्क्षा। चैत्रेण मैत्रो विजेष्यते इति कर्माख्यातेऽप्यस्ति। इति तादृशाकाङ्क्षाराहित्यरूपकर्तृत्वानभिधानरूपकारणाभावात्तृतीया न स्यादित्यर्थः। उक्ताकाङ्क्षाराहित्यरूपकर्तृत्वानभिधानरूपकारणाभावमुपपादयति। विजेष्यते मैत्र इति। मैत्रकृतिबोधात्। मैत्रविशेष्यकाख्यातार्थकृतिप्रकारकबोधात्। कृतिबोधौपयिकत्वादिति। तादृशबोधजनकाऽऽकाङ्क्षावत्वादित्यर्थः। तथा च मैत्रविशेष्यकाख्यातार्थप्रकारकबोधजनकसमभिव्याहारशून्यत्वाभावात्तृतीयानुपपत्तिरिति भावः।

एवं च कर्तृकर्मान्यतरविशेष्यकाख्यातार्थप्रकारकबोधजनकसमभिव्याहारशून्यत्वं न कर्तृत्वकर्मत्वानभिधायकत्वमित्याह। किन्त्विति। तत्तात्पर्यशून्यत्वमेवेति। कर्तृत्वकर्मत्वानभिधायकत्वमिति शेषः। कर्तृकर्मान्यतरविशेष्यकाख्यातार्थप्रकारकबोधेच्छयोच्चरितत्वरूपतात्पर्यशून्यत्वमेव तदित्यर्थः। तथा च। आख्यातस्य कर्तृत्वकर्मत्वान्यतरतात्पर्यकत्वविरहे च। अर्थाविवक्षायां। कर्तृत्वाद्यविवक्षायां। तृतीयायाः साधुत्वेपीति। कर्तृत्वकर्मत्वान्यतराऽविवक्षिताख्यातस्यैव भावाख्यातत्वात्। तद्योगे कर्तृवाचक-

अथ पक्कानि भुङ्क्ते चैत्रः ओदनः पक्त्वा भुज्यते इत्यादौ कृता क्रमेण कर्तृत्वकर्मत्वानभिधानाच्चैत्रपदौदनपदाद्युत्तरं तृतीयाद्वितीये कथं न स्याताम्। नच कृताऽनभिधानेप्याख्यातेन तदभिधानान्नानभिहितत्वम्, स्वसमभिव्याहृतेतिकरणाच्च चैत्रेण गम्यते ग्रामस्तं मैत्रोगच्छतीत्यादौ न तृतीयाद्वितीययोरनुपपत्तिः। गच्छति गम्यतेइत्याख्यातस्य तत्पदाद्यसमभिव्याहृतत्वादितिवाच्यम्। तथासति भुञ्जानेन चैत्रेण पच्यते—भोक्तव्यमोदनं पचतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः, कृता कर्तृत्वकर्मत्वयोरभिधानात्।

---

पदात्तृतीया इष्टैवेति भावः। परस्मैपदस्याऽसाधुत्वादिति। भावे आत्मनेपदस्य यकश्च विधानादिति भावः। धात्वर्थविशेष्यस्य। कर्तृत्वादेः। असाधुत्वादिति। कर्तरिशबित्यनुशासनात् कर्त्रर्थे सार्वधातुके शबिति तदर्थात्। तदसाधुत्वात्। शपः साधुत्वात्। न प्रयोगा इति। अभियुक्ताः न प्रयुञ्जते इति भावः। हेतुत्वादिति। तथा च कर्तृविशेष्यकाख्यातार्थप्रकारकबोधं प्रति कर्मविशेष्यकाख्यातार्थप्रकारकबोधपरत्वज्ञानाविषयीभूताख्याधर्मिककर्तृविशेष्यकाख्यातार्थप्रकारकबोधपरत्वज्ञानस्य हेतुत्वादित्यर्थः। न भवत्येवेति। कर्तृपरत्वेनागृह्यमाणाख्यातधर्मिककर्मपरत्वज्ञानरूपकारणाभावात्कर्मत्वबोधोपि न भवत्येवेत्यर्थः। कर्मत्वान्वयबोधप्रतिबन्धकस्य कर्तृपरत्वग्रहस्य सत्वादिति भावः। शंकते। अथेति। कृता। पक्कानीत्यत्र कर्मणि क्तप्रत्ययेन कर्तुरनभिधानात्। पक्त्वा इत्यत्र क्त्वाप्रत्ययेन कर्मणोऽनभिधानादित्यर्थः। आख्यातेन तदभिधानादिति। भुङ्क्ते इत्यनेन कर्तृत्वाभिधानात् भुज्यते इत्यनेन कर्मत्वाभिधानादित्यर्थः। न तृतीयाद्वितीययोरनुपपत्तिरिति। तयोर्भिन्नवाक्यत्वादिति भावः। तत्पदासमभिव्याहृतत्वादिति। गच्छतीत्यस्य चैत्रपदासमभिव्याहृतत्वात् गम्यते इत्यस्य तत्पदाऽसमभिव्याहृतत्वादित्यर्थः। अथेति पूर्वपक्षिणः समाधानम्। तथासतीति। समभिव्याहृतपदाभिधेयत्वसामान्याभावस्य तृतीयाद्वितीयानियामकत्वे सतीत्यर्थः। कृता। भुञ्जानेनेतिकर्तरि शानचा। भोक्तव्यमितिकर्मणि तव्यत्प्रत्येन। कर्तृत्वकर्मत्वयोरभिधानादित्यर्थः। अनभिहितमिति। पच्यते इत्यनेन पाककर्तृत्वम् पचतीत्यनेनपाककर्मत्वमनभिहितमित्यर्थः। प्रकृतेपि तदनभिहितमेवेति। पक्कानि भुङ्क्ते चैत्र इत्यत्राख्यातेन भोजनकर्तृत्वाभिधानेपि पाककर्तृत्वमनभिहितमेव, एवमोदनः पक्त्वा भुज्यते इत्यत्रा-

कृता तत्र भोजनकर्तृत्वतत्कर्मत्वयोरभिधानेपि पाककर्तृत्वं तत्कर्मत्वं चानभिहितमितिचेत्तर्हि प्रकृतेपि तदनभिहितमेव । नच प्रधानक्रियानिरूपितकर्तृत्वाद्यनभिधाने तृतीयादेः साधुतेति । तदुक्तम् । प्रधानशक्त्यभिधाने-गुणशक्तिरभिहितवत्प्रकाशते इतिशक्तिः कर्तृत्वादिकमितिवाच्यम् तथापि-चैत्रेण दृश्यमानं घटंमैत्रः पश्यति इत्यादौ ज्ञानभेदेन विषयताभेदाभावात्, चैत्रदर्शनमैत्रदर्शनोभयनिरूपितविषयत्वरूपकर्मतायाः कृताऽभिधानाद्-द्वितीयानुपपत्तिरितिचेन्न । तत्तत्प्रातिपादिकार्थविशेषणत्वमात्रेण कर्तृत्वकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वात् । तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादि विवक्षायांद्वितीयाविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात्, शेषमाख्यातार्थविचारे विवेचयिष्यतेइत्यलमत्राधिकेन ।

---

ख्यातेनभोजनकर्मत्वाभिधानेपि पाककर्मत्वमनभिहितमेवेत्यर्थः । तथा च तृतीयाद्वितीययोरापत्तिरिति भावः । नचेति । तथाचोक्तस्थले भुंक्ते भुज्यते इति प्रधानक्रियाभ्यां कर्तृत्वकर्मत्वयोरभिधानान्न तृतीयाद्वितीययोरापत्तिरिति भावः ।

तदुक्तमिति ।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्
शक्तिर्गुणाश्रयतया तत्र प्रधानमनुरुध्यते इति

वाक्यपदीयमर्थतोऽनुवदति । प्रधानशक्त्यभिधाने इति । प्रधानक्रियानिरूपितस्य कर्तृत्वस्य कर्मत्वस्य वाऽभिधाने । गुणशक्तिः । गौणक्रियानिरूपितं कर्तृत्वं कर्मत्वं च । अभिहितवत्प्रकाशते इति । तुल्ययुक्त्या प्रधानक्रियानिरूपितस्य कर्तृत्वस्य कर्मत्वस्य वानभिधाने गौणक्रियानिरूपितं कर्तृत्वं च कर्मत्व चानभिहितवद् भवतीति । भोक्तव्यमोदनं पचतीत्यत्रोदने गौणभोजनक्रियानिरूपितं कर्मत्वमेकम्, प्रधानीभूतपाकक्रियानिरूपितकर्मत्वं द्वितीयम् । तत्र प्रधानक्रियया कर्मणि अनभिहिते गौणक्रियानिरूपितं कर्माप्यनभिहितवद्भवतीत्यत ओदनमित्यत्र द्वितीयैव । तदुक्तम् ।

उक्तमेवोक्ततां याति क्वचिदुक्तमनुक्तताम् ।
अनुक्तमपि नोक्तं स्यात् क्वचिदेव पदान्तरैरिति ।

भुञ्जानश्चैत्रः पचतीत्यत्र कृदाख्याताभ्यां कर्तृत्वोक्तेराद्यम् । भोक्तव्यमोदनं पचतीत्यत्र कृतोक्तमप्याख्यातेनानुक्तं कर्मत्वं द्वितीयम् । एवं तृतीयमपि ।

आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकम्, चैत्रो-मैत्रश्चगच्छतः—चैत्रोमैत्रोदेवदत्ताश्चगच्छन्तिइत्यादौ —

चन्द्रेकलङ्कः सुजनेदरिद्रताविकाशलक्ष्मीः कमलेषुचञ्चलामुखाप्रसादः सधनेषुसर्वदायशोविधातुः कथयानिखण्डितमूइत्यादौ च द्वित्वबहुत्वबोधकसुपोऽभावात्। नच तत्र सुबेकवचनस्यैव द्वित्वबहुत्वादौ लक्षणास्त्वति वाच्यम् आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात् अन्यथा चैत्रोमैत्रश्च गच्छतइत्यादाविवछन्दसि लक्षणयैवस्वादिनाद्वित्वादिबोधसंभवात्, औजसादिरूपादेशस्मृतिद्वारा द्वित्वादिबोधनिर्वाहाय छन्दसि सुपांसुलुगित्यादिसूत्रेण औजसादिस्थाने स्वाद्यादेशस्य वैयर्थ्यात्।

---

तथा च भोक्तव्यमोदनं पचति चैत्र इत्यत्र प्रधानपाकक्रियानिरूपितचैत्रवृत्तिकर्तृत्वस्य प्रधानशक्त्यभिधाने भोक्तव्यमितिकर्मकृताऽनभिहितमपि चैत्रनिष्ठकर्तृत्वमभिहितवत्प्रकाशते इति न चैत्रपदात्तृतीयापत्तिरिति भावः। पूर्वपक्षी समाधत्ते। तथापीति। कृता। दृश्यमानमित्यत्र शानचा। द्वितीयानुपपत्तिरिति। अत्र मैत्रसमवेतदर्शनविषयत्वरूपप्रधानक्रियानिरूपितकर्मता शानचाऽभिहितेति अनभिहिताधिकारीयद्वितीया न स्यादित्यर्थः। सिद्धान्ती अनभिधानपदार्थं निर्वक्ति। तत्तदिति। तदनभिधानपदार्थत्वादिति। कर्तृत्वानभिधानपदार्थत्वादित्यर्थः। तथा चैत्रेण गम्यते इत्यत्र कृतेः प्रातिपदिकार्थचैत्रविशेषणत्वेनाविवक्षासत्वात्कर्तृत्वानभिधानात्तृतीया। एवं प्रातिपदिकार्थविशेषणत्वेन कर्मत्वाऽविवक्षा कर्मत्वानभिधानम्। यथा गच्छति ग्रामं इत्यत्रापि प्रातिपदिकार्थग्रामविशेषणत्वेन कर्मत्वाविवक्षारूपकर्मत्वानभिधानसत्वाद् द्वितीया। प्रातिपदिकार्थविशेषणत्वमात्रेणेत्यस्य प्रातिपदिकार्थविशेषणत्वातिरिक्तेन "विशेष्यत्वेन" तादृशाऽविवक्षाया अभावे सति प्रातिपदिकार्थविशेषणत्वेन कर्तृत्वकर्मत्वाद्यविवक्षा अर्थः। तत्राऽभावद्वयनिवेशो विशेष्यदलनिवेशश्च व्यर्थ इति तद्विहाय फलितार्थमाह। तत्तत्प्रातिपदिकार्थेति। चैत्रेण दृश्यमानं घटं मैत्रः पश्यतीत्यत्र चैत्रसमवेतदर्शनविषयीभूतघटनिष्ठविषयताकदर्शनाश्रयो मैत्र इति बोधात् घटादिरूपतत्प्रातिपदिकार्थनिरूपितविशेष्यतायां विषयतारूपकर्मत्वे सत्वान्न द्वितीयानुपपत्तिः। कर्तृत्वकर्मत्वादौ प्रातिपदिकार्थनिष्ठविशेषणतानिरूपितविशेष्यतैवाऽनभिधानपदार्थ इति फलितम्। ननु प्रातिपदिकार्थस्य विशेषणत्वविवक्षायां तृतीया, विशेष्यत्वविवक्षायां प्रथमेत्युक्तम्। एवं सति लकृत-

चैत्रादिपदोत्तरैकवचनस्य द्वित्वादिताज्ञाणि करे न तत्प्रकृत्यर्थमै। द्वि-साधारणाद्वित्वादिबोधस्योक्तव्युत्पत्तिविरोधेनानुपपत्तेश्च आख्यातार्थ-संख्यान्वयबोधे च समानविशेष्यकत्तदर्थभावनान्वयबुद्धिसामग्री अपेक्षिता। भावनाया बाधादिग्रहकाले तात्पर्यशून्यकाले वा उक्तस्थले द्वित्वान्वयाबोधात्। भावनाया अविशेष्ये धात्वर्थादौ संख्यान्वयाबोधाच्च तादृशसामग्र्याः संख्यान्वयबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण हेतुता। तदकल्पनेपि आख्यातजन्यसंख्योपस्थितियोग्यताज्ञानविशेषादिघटित-सामग्र्या भावनानवगाहिसंख्यान्वयबोधस्य कदाप्यजननात्।

---

द्वितसमासैरभिधानं कुतो नयुज्यते इति चेदाख्यातादिना कर्तृत्वबोधविवक्षायां प्रातिपदिकार्थस्य विशेष्यत्वात्तृतीया निराकाङ्क्षा। आख्यातेन कर्मत्वविवक्षायां द्वितीयापि निराकांक्षैव अत्र लादीनामप्युपयोगो बोध्यः। अन्यथा। आनुशा-सनिकातिरिक्तविभक्तेरपि लक्षणाङ्गीकारे। तदप्रकृत्यर्थेति। चैत्रपदोत्तरसुपोऽप्र-कृत्यर्थेत्यर्थः। उक्तव्युत्पत्तिविरोधेनेति। प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्यया-नामिति व्युत्पत्तिविरोधेनेत्यर्थः। अनुपपत्तिश्चेति। चैत्रपदोत्तरं सुबर्थस्या-न्वयानुपपत्तिश्चेत्यर्थः। यं यं भावनान्वेति तं तं संख्यानुधावतीत्यनुसारे-णाह आख्यातार्थसंख्यान्वयबोधे चेति। तदर्थेति। आख्यातार्थेत्यर्थः। तथा चाख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातार्थभावनाप्रकारकशाब्दसामग्री-कारणमिति भावः। उक्तसामग्र्याःकारणत्वे व्यतिरेकसहचारं दर्शयति। भाव-नाया बाधादिग्रहकाले इति। गमनानुकूलकृत्यभाववानिति निश्चयकाले इत्यर्थः। अस्य द्वित्वान्वयाऽबोधादित्यनेनान्वयः। तात्पर्यग्रहशून्यकाले वेति। भावनाविषयकबोधपरत्वग्रहशून्यकाले चेत्यर्थः। उक्तस्थले। चैत्रो मैत्रश्च-गच्छत इत्यत्र। द्वित्वान्वयाबोधादित्यर्थः। भावनामविषयीकृत्य केवल द्वित्वान्वयाबोधादित्यर्थः। तादृशसामग्र्याः। आख्यातार्थभावनाप्रकारक-बोधसामग्र्या इत्यर्थः। उक्तसामग्र्याः सामान्यतः संख्याप्रकारकबुद्धित्वाव-च्छिन्नं प्रति कारणत्वाकल्पनेपि चैत्रः पचतीत्यादौ भावनायाश्चैत्रादावनन्वये आख्यातार्थसंख्याप्रकारकबोधो न संभवतीति विपक्षबाधकतर्कमाह। तदकल्प-नेपीति कदाप्यजननादिति। तथा चागत्याऽऽख्यातार्थसंख्याप्रकारकबोधं प्रति भावनाप्रकारकशाब्दबोधसामग्र्याः कारणत्वं कल्पनीयमिति भावः। ननु आख्यातार्थसंख्याप्रकारकबोधो भावनानवगाही कुतो न जन्यते इत्यत्र समाधानं संख्याप्रकारकबोधे चाख्यातार्थभावनाप्रकारकबोधसामग्री अपेक्षि-

संख्यान्वयबोधसाधारणभावनान्वयबोधत्वावच्छिन्नहेतूनामपि ताद्दशसामग्रीघटकत्वेन आपत्त्यभावात् । न च ताद्दशकारणानां भावनान्वयबुद्धित्वं संख्यान्वयबुद्धित्वं वा जन्यतावच्छेदकमुपेयते इत्यत्र विनिगमनाविरहः । संख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभव सिद्धत्वात् । द्वितीयस्य जन्यतावच्छेदकत्वाऽसंभवादिति दिक् ।

अथ गुणादिवाचकपदोत्तरद्विवचनबहुवचनयोः कथं द्वित्वादि-बोधकता, संख्याया गुणत्वेन गुणादौ बाधात् । न च तत्र स्वाश्रय-समवेतत्वादिसंबन्धेन द्रव्यगतं द्वित्वादिकमेव भासते इति वाच्यम् । एकव्यक्तावपि ताद्दशसंबन्धेन द्वित्वादेः परिसमाप्ततया एकमात्रतात्प-र्येणापि द्विवचनाद्यापत्तिरिति चेन्नैवम् ।

---

तेति पूर्वोक्तं स्मारयति । संख्यान्वयबोधसाधारणेति । अनुभवसिद्धत्वा-दिति । चैत्रमैत्राभ्यां स्थीयते इति भावाख्यातेन संख्यामविषयिकृत्यापि भावना-प्रकारकबोधजननाद् । भावनान्वयबुद्धित्वमेवाख्यातजन्योपस्थितेः कार्यतावच्छे-दकमभ्युपगन्तमम् । द्वितीयस्य । संख्याप्रकारकबुद्धित्वस्य । असंभवादिति । भावनान्वयबुद्धिसामग्रीजन्यतावच्छेदकत्वाऽसंभवादित्यर्थः । अयमत्र संग्रहः । संख्यामविषयीकृत्यापि भावनाप्रकारकबोधश्चैत्रमैत्राभ्यां भूयते इत्यादौ भावा-ख्यातस्थले जायते इति भावनाप्रकारकबोधसामग्री व्यापिका सेयं सामग्री आख्यातार्थसंख्याप्रकारकबोधं प्रति अपेक्षणीयेति । दिगिति । दिगर्थस्तु भावना-प्रकारकबोधसामग्र्या अपि संख्याप्रकारकबोधसामग्रीकोटौ निवेशे भिन्नविषयक प्रत्यक्षादिकं प्रति प्रतिबन्धकताद्वयापत्तिरिति ।

अथेति । गुणादिवाचकपदोत्तरद्विवचनबहुवचनयोरिति । रूपे—रूपा-णीत्यत्र द्विवचनबहुवचनयोरित्यर्थः । संख्यायाः । द्वित्वादिसंख्याया । गुणादौ । रूपादौ । बाधादिति । गुणे गुणानंगीकारादिति भावः । एक-वचनस्य साधुत्वार्थकतयोक्तं । द्विवचनबहुवचनयोरिति । शंकते । नचेति । तत्र । रूपे— रूपाणीत्यादौ रूपे । स्वाश्रयसमवेतत्वादिसंबन्धेनेति । स्वपद-ग्राह्यं— द्वित्वादिकम् तदाश्रयोघटादिः तत्समवेतत्वं रूपे । एकव्यक्तावपि । एकरूपव्यक्तावपि । ताद्दशसंबन्धेन । स्वाश्रयसमवेतत्वसंबन्धेन । द्वित्वादेः । आश्रयगतद्वित्वादेः । परिसमाप्ततया । तृत्तीसया । एकमात्रतात्पर्येणापि एकमात्ररूपव्यक्तितात्पर्येणापि । द्विवचनाद्यापत्तेरिति । अत्र घटे रूपे वर्तते प्रयोगापत्तिरित्यर्थः । घटे रूपरसौ इति द्विवचनानुपपत्तिश्च । घटेद्वित्वाभावात्

अपेक्षाबुद्धिविषयत्वमेव तदुत्तरद्विवचनादिना बोध्यते। तच्चैकमात्रवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदककस्थले प्रकृत्यर्थतावच्छेदकत्वव्याप्यत्वविशिष्टपर्याप्तिसंबन्धेनेति न द्वन्द्वादिस्थलोक्तदोष इति विदुषां परामर्शः।

इति प्रथमा।

---

अपेक्षाबुद्धिविषयत्वमेवेति। एवकारेण संख्याव्यावृत्तिः। इदमेकम्, इदमेकं रूपमित्यापेक्षाबुद्धिविषयत्वरूपं द्वित्वादिकमित्यर्थः। तदुत्तरेति। रूपादिपदोत्तरेत्यर्थः। तच्च। अपेक्षाबुद्धिविषयत्वं च। एकमात्रवृत्तिधर्मस्य। अव्यासज्यवृत्तिधर्मस्य। अन्यत्र। व्यासज्यवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकत्वे। न द्वन्द्वादिस्थलोक्तदोष इति। न धवखदिरावित्यत्र धवद्वयखदिरद्वयबोधापत्तिरूपदोष इत्यर्थं। प्रकृत्यर्थतावच्छेदकधवत्वव्याप्या या पर्याप्तिः सा धवद्वये एव। एवं खदिरत्वव्याप्या पर्याप्तिः खदिरद्वये एवेति तत्संबन्धेनान्वयः। किन्तु शुद्धपर्याप्तिसंबन्धेनैव द्वित्वान्वय इति भावः।

इति प्रथमा।

अनुशासनादिति। ज्ञानजन्यज्ञानविषयत्वं पञ्चम्यर्थः। अनुशासनज्ञानजन्यज्ञानविषयः कर्मत्वमिति बोधः। द्वितीयार्थं इति। द्वितीयाया मुख्योर्थ इत्यर्थः। मुख्यार्थत्वं च द्वितीयावृत्तिग्रहमुख्यविशेष्यत्वम्। कर्मार्थकत्वे तु कर्मत्वस्य न मुख्यार्थत्वम्, शक्यतावच्छेदकतया द्वितीयार्थत्वम्। न च द्वितीयायाः संख्यायां शक्तिः कर्मत्वे तु लक्षणैवोपेयतामिति वाच्यम्। शक्तिग्राहकव्याकरणस्योभयत्र तुल्यत्वात्, द्वयेकयोर्द्विवचनैकवचने कर्मणि द्वितीयेति अनुशासनयोः सत्वात्[1]। एकत्र शक्तिरेकत्र च लक्षणेत्यत्र

---

१ कर्मत्वलक्षणं तु

यगन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते।
यत्रासौ कर्मता नाम कारकं कर्तृतेतरः।

यत्र तिङा स्वार्थे यगन्तधातोरर्थः अनुभाव्यते असौ "स्वार्थः" तिङर्थं इति यावत् कर्मता नाम कारकमित्यन्वयः। यथा गम्यते ग्राम इत्यत्र तिङर्थे संयोगात्मकफले यगन्तधातोरर्थस्य संयोगानुकूलव्यापारस्य जन्यत्वसंबन्धेनाऽन्वयादसौ तिङर्थः "संयोगः कर्मत्वं नाम कारकम्। चैत्रकर्तृकसंयोगानकूलव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः।

कर्मणि द्वितीयेत्यनुशासनात्कर्मत्वं द्वितीयार्थः । तत्र कर्मपदस्य धर्ममात्रपरत्वात् । सप्तम्या वाचकतार्थकत्वात् । कर्मणश्च न तथात्वम्, कर्मणि नामार्थस्य ग्रामादेरभेदान्वयसंभवेपि धात्वर्थगमनादिना तदन्वयाऽसंभवाद् गौरवाच्च । कर्मत्वं च क्रियाजन्यफलशालित्वम् ।

---

विनिगमकस्य दुर्लभत्वात् । किं च यस्माद्यो नियमेन प्रतीयते तस्य तत्र शक्तिः । प्रकृते च घटदर्शनदशायां एकत्वाविवक्षायां घटं पश्यतीति प्रयोगात्संख्याया अप्रतीतावपि घटकर्मत्वबोधात्, कर्मत्वस्याऽशक्यत्वे संख्यायाश्चाप्रतीतौ प्रातिपदिकार्थमात्रे प्रथमैव स्यादित्यवधेयम् ।

तत्र । अनुशासने । कर्मपदस्य । सप्तम्यन्तकर्मपदस्य । धर्ममात्रपरत्वादिति । भावप्रधाननिर्देशेनेत्यादिः । कर्मत्वमात्रपरत्वादित्यर्थः । मात्रपदेन कर्मत्वाश्रयस्य कर्मणः शक्यत्वव्यावृत्तिः । वाचकतार्थकत्वादिति । तथा च कर्मणि द्वितीयेति सूत्रस्य कर्मत्वबोधिका द्वितीयेत्यर्थः । न च कर्मत्वे

---

तथा च यगन्तधातूत्तरवर्त्तितिङ् यादृशस्वार्थधर्मिकतद्धात्वर्थप्रकारकशाब्दबोधजनिका कर्तृताभिन्नतादृशस्वार्थः तद्धात्वर्थक्रियायां कर्मत्वं पर्यवसितम् । स्वं-तिङ् । गम्यते रथःस्वयमेवेत्यादौ ग्रामकर्मकसंयोगानुकूलव्यापारजन्यसंयोगवान्, गमनानुकूलव्यापारवान् रथ इति बोधः । तत्र तादृशव्यापारवत्वलक्षणकर्तृत्वबोधजनके तिङि अतिव्याप्तिवारणाय स्वार्थे कर्तृताभिन्नत्वं विशेषणम् ।

न च चैत्रकर्तृकगमनजन्यसंयोगस्य ग्राम इव चैत्रेपि सत्वाच्चैत्रेण गम्यते चैत्र इत्यपि प्रयोगः स्यादिति वाच्यम् । तिङर्थसंयोगे तादृशव्यापारविशिष्टत्वस्य विवक्षणात् । वै०स्वजन्यत्व-स्वाश्रयप्रतियोगिकत्वोभयसं० । एवं च चैत्रकर्तृकव्यापाराश्रयप्रतियोगिकसंयोगस्य चैत्रेऽसत्वान्नापत्तिः एकस्मिन्नेकसंयोगप्रतियोगित्वानुयोगित्वयोरसंभवेन स्वप्रतियोगिकत्वविशिष्टसंयोगस्य स्वस्मिन्नसत्वादिति भावः । अतएव चैत्रो ग्रामं गच्छतीतिवत् चैत्रश्चैत्रं गच्छतीति न प्रयोगः । द्वितीयार्थसंयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसंबन्धेनाऽन्वयः । संयोगस्य च व्यापारे जनकत्व-सामानाधिकरण्योभयसंबन्धेनान्वयः । एवं च चैत्रप्रतियोगिकसंयोगविशिष्टस्य व्यापारस्य चैत्रेऽसत्त्वान्नोक्तापत्तिः । अधिकमग्रे । चैत्रप्रतियोगिकसंयोगविशिष्टव्यापारस्य चैत्रेऽसत्वादितिभावः ।

ननु गां दोग्धि पय इत्यत्र क्षरणानुकूलव्यापारो दुहधात्वर्थः । प्रधानकर्मपयःपदोत्तरद्वितीयार्थकर्मत्वं च क्रियाजन्यफलशालित्वम् ।

तत्र च क्रिया धातुत एव लभ्यते। जन्यजनकभावस्य च विनैव पदार्थत्वं संसर्गमर्यादया भानं संभवतीति फलमात्रं कर्मप्रत्ययार्थः।

---

द्वितीयेत्येव कथं नोक्तं भगवतेति वाच्यम्। कर्मणि द्वितीयेत्यस्य धर्मजनकत्वात्। मात्रा लाघवपक्षपातित्वाद्वा सूत्रकृता तन्त्रप्रणयनात्, एकत्र णकारेकारौ अन्यत्र तकारवकारैवकाराः। किं च कर्मणि द्वितीयेति सूत्रेण कर्मत्वबोधिका द्वितीया कर्मबोधकप्रकृत्युत्तरं साध्वीति बोधः। नापि वाक्यभेदः। कर्मबोधकप्रकृतिपदमुद्दिश्य कर्मत्वबोधकत्व-साधुत्वोभयविशिष्टद्वितीयाविधानात्। साधुत्वाऽविधाने कर्मबोधकप्रकृत्युत्तरं लक्षणया कर्मत्वबोधिका प्रथमापि स्यात्। कर्मत्वबोधकत्वाविधाने द्वितीयायाः कर्मत्वबोधकत्वमप्राप्तं स्यात्। घटादिपदानां घटत्वविशिष्टबोधकत्वस्येव व्यवहारत एव प्राप्तस्य कर्मत्वबोधकत्वस्यानुवाद एव। तथाचोद्देश्यतावच्छेदकघटकतैव तस्य। उक्तबोधोपि कर्मणीति पदेन वृत्त्या कथंचित्संपाद्यः। कर्मपदस्य मुख्यार्थो न द्वितीयार्थ इत्याह। कर्मणश्च न तथात्वमिति। न द्वितीयार्थत्वमित्यर्थः। तदन्वयाऽसंभवादिति। कर्मणोऽन्वयाऽसंभवादित्यर्थः। स्ववृत्तिफलजनकत्वसंबन्धेनाऽन्वयसंभवादाह। गौरवाच्चेति। कर्मत्वस्याऽखण्डोपाधित्वे मानाभावादाह। कर्मत्वं चेति। इदं च धातोर्व्यापारमात्रे शक्तिरित्यभिप्रायेण। फलावच्छिन्नव्यापारे शक्तिपक्षे तु धात्वर्थतावच्छेदकफलशालित्वं तत्। प्रकृतधातुप्रयोज्यविशेष्यतानिरूपितद्वितीयाप्रयोज्यप्रकारताश्रयफलवत्त्वमिति यावत्[1]।

---

१ ननु काशीं गच्छन्प्रयागे मृत इत्यादौ काश्यादेः कर्मत्वं न स्यात्, गमनजन्यसंयोगानाश्रयत्वादिति चेत् सत्यम्। मुख्याऽमुख्यभेदात्कर्मत्वं द्विविधम्। काश्यादेः क्रियाजन्यफलानाश्रयत्वादमुख्यं कर्मत्वम्। तच्च प्रकृतक्रियाकर्तृसमवेतेच्छीयक्रियाजन्यफलाश्रयत्वप्रकारतानिरूपितविशेष्यताश्रयत्वम्, काश्यां च तदस्ति, इच्छा च काशी व्यापारजन्यफलाश्रया भवतु इत्याकारिका। उभयसाधारणकर्मत्वं च क्रियाजन्यफलवत्त्वम्। फलवत्ता च स्वाश्रयत्व-स्वनिष्ठतादृशेच्छीयप्रकारतानिरूपितविशेष्यताश्रयत्वान्यतरसं०। फलत्वं च धात्वर्थव्यापारे विशेषणतया भासमानत्वे सति धात्वर्थजन्यत्वम्। पूर्वदेशविभागादावतिव्याप्तिवारणाय सत्यन्तम्। मन्दं गच्छतीत्यादौ मन्दादावतिव्याप्तिवारणाय विशेष्यदलम्। अत्रेदं बोध्यम्। यत्र फले प्रकृत्यर्थवृत्तित्वस्य न बाधग्रहः

न च संयोग, विभागादिरूप फलमपि धातुलभ्यमेव। गमित्यजि-प्रभृतीनां तदवच्छिन्नस्पन्दादिरूपव्यापारवाचकत्वादिति वाच्यम्। व्यापारमात्रस्य धात्वर्थत्वात्।

---

नामार्थधात्वर्थयोः साक्षाद् भेदेनान्वयस्याव्युत्पन्नतया कर्मत्वस्य विभक्त्यर्थत्वमावश्यकम्, न तु संसर्गत्वम्। तत्रापि यस्यार्थस्याऽन्यतो लाभसंभवस्तदर्थकत्वं द्वितीयाया नोचितमिति फलमात्रं द्वितीयार्थ इत्याह। तत्र चेति। क्रियाजन्यफलशालित्वे चेत्यर्थः। धातुत एवेति। एवकारेण प्रत्ययव्यावृत्तिः। जन्यजनकभावस्य चेति। फलव्यापारयोरित्यादिः। संसर्गमर्यादया। आकाङ्क्षया। फलमात्रमिति। अनन्यलभ्यः शब्दार्थ इति न्यायादिति भावः। ननु फलस्यापि न द्वितीयार्थत्वं युक्तम्, उक्त-न्यायविरोधादित्याशंकते। न चेति। धातुलभ्यमेवेति। एवकारेण कर्म-प्रत्ययव्यावृत्तिः। तदवच्छिन्नेति। संयोगविभागादिरूपफलावच्छिन्नेत्यर्थः। व्यापारमात्रस्य धात्वर्थत्वादिति। मात्रपदेन फलस्य धात्वर्थताव्यवच्छेदः। तथा च संयोगादिरूपफलं कर्मप्रत्ययद्वितीयावाच्यमेवेति भावः। व्यापार-मात्रस्येत्यस्य व्यापारत्वरूपसामान्यधर्मावच्छिन्नमात्रस्येत्यर्थस्तु न सम्यक्। ज्ञानत्व-प्रयत्नत्वेच्छात्वाद्यवच्छिन्ने ज्ञानादौ धातोः शक्त्युपगमात्, शाब्दबो-धविषयीभूतस्य व्यापारत्वस्य निर्वक्तुमशक्यत्वाच्च। व्यापारो न क्रिया। ज्ञानादेरपि धात्वर्थत्वात्। नापि फलानुकूलः सः। सुखं साक्षात्करोतीत्यादौ चरमफलस्य सुखसाक्षात्कारस्य धात्वर्थतानुपपत्तेः। नापि साध्यावस्थापन्नः। फलस्यापि तादृशत्वात्। नापि तिङन्तार्थजन्यबोधे भावनायां प्रकारीभूतोर्थः। उत्तरसंयोगानुकूलव्यापारस्यापि तादृशत्वात्। किन्तु तिङन्तार्थोपस्थितिजन्य-बोधीयभावनानिष्ठविशेष्यतानिरूपितानुकूलत्वसंबन्धावच्छिन्नप्रकारत्वावच्छिन्न-विशेष्यताश्रयस्य धात्वर्थत्वात्। तादृशविशेष्यताश्रयश्च व्यापारमात्रम्। व्यापारमात्रस्य धात्वर्थत्वादिति वाक्यस्य धातुशक्यताऽनुकूलत्वसंबन्धावच्छिन्न-किंचिन्निष्ठावच्छेदकत्वानिरूपितेत्यत्र तात्पर्यम्। ननु व्यापारमात्रस्य धात्वर्थत्वे फलमात्रस्य कर्मप्रत्ययार्थत्वे सर्वत्र सर्वप्रतीत्यापत्त्या ग्रामं त्यजति-ग्रामं गच्छतीति वाक्यजन्यबोधयोर्वैलक्षण्यापत्तिरित्यत आह। फलविशेषान्वयबोधे चेति।

---

तत्राधेयत्वमेव संसर्गतया भासते। यत्र बाधग्रहस्तत्र स्वनिष्ठविशेष्यतानिरूपित-तादृशेच्छीयप्रकारत्वं बोध्यम्।

फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं गच्छतीत्यादौ च धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते न तु विपरीतम्। ग्रामं गच्छतीत्यादिवच्च ग्रामं स्पन्दते इत्यादयो न प्रयोगाः, द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वात्, न तु स्पन्दिप्रभृत्युपस्थापितेतस्मिन्द्वितीयादिना फलान्वयबोधजननाऽसंभवात्।

---

द्वितीययेत्यादिः। हेतुतयेति। तथा च विशेष्यतासंबन्धेन ग्रामकर्मकत्यागविषयकबोधे विशेष्यतासंबन्धेन त्यज्धातुजन्यव्यापारोपस्थितिः एवं विशेष्यतासंबन्धेन ग्रामकर्मकसंयोगविषयकबोधं प्रति विशेष्यतासबन्धेन गमधातुजन्यव्यापारोपस्थितिः कारणमिति भावः। ननु ग्रामः कर्मत्वं गमनं कृतिः इत्यादिनिराकांक्षवाक्याच्छाब्दबोधवारणाय ग्रामनिष्ठसंयोगजनकव्यापारानुकूलकृतिमानिति शाब्दबोधं प्रति ग्रामं गच्छतीत्यानुपूर्वीरूपाकांक्षाज्ञानत्वेन कारणत्वस्यावश्यकतया तत एव गम्याद्यर्थे विभागादेरन्वयबोधवारणसंभवात्, उपस्थितेरुक्तहेतुताकल्पनमयुक्तमिति चेन्न। उक्तसमभिव्याहारज्ञानसत्त्वे त्यज्धातुतो व्यापारोपस्थितौ निरुक्तशाब्दबोधवारणायोपस्थितेर्निरुक्तहेतुताकल्पनस्यावश्यकत्वात्। न तु विपरीतमिति। ग्रामं गच्छतीत्यतो ग्रामनिष्ठविभागजनकत्वम्, ग्रामं त्यजतीत्यतो ग्रामनिष्ठसंयोगजनकत्वमिति विपरीतं न प्रतीयते इति भावः। गम्याद्युपस्थापितस्पन्दादावेवेति। एवकारव्यवच्छेद्यं स्पष्टयति। नत्विति। तस्मिन्। व्यापारे। ननु 'गम्'धात्वर्थोऽपि स्पन्द एव, स्पन्दधात्वर्थोऽपि स एवेति समानार्थकत्वाद् ग्रामं गच्छतीतिवद् ग्रामं स्पन्दते इत्यपि प्रयोगः स्यादित्याशंक्याह। नहीति। तथासति। येन केनचित्पदेनोपस्थापितयोरर्थयोः परस्परमन्वयबोधे सति। घटकर्मत्वादिपदोपस्थापितयोरपीति। घटः कर्मत्वमित्यादिपदोपस्थापितयोरपीत्यर्थः। अपिना घटं करोतीत्यस्य समुच्चयः। गम्यादिसमभिव्याहारस्यैवेति। एवकारव्यवच्छेद्यं नत्विति। तथात्वात्। आकाङ्क्षात्वात्। अत एव। द्वितीयादेः स्पन्दादिसमभिव्याहारस्याऽऽकाङ्क्षात्वाभावादेव। तन्नियामकत्वात्। सकर्मकत्वनियामकत्वात्।

फलविशेषान्वयबोधे धातुविशेषजन्योपस्थितेः कारणत्वेन ग्रामं गच्छति ग्रामं त्यजतीतिवाक्यजन्यप्रतीत्योर्वैलक्षण्योपपादनेऽपि शंकते। अथेति।

न हि येन केनचिदुपस्थापितयोरेवार्थयोः परस्परमन्वयः प्रतीयते, तथासति घटकर्मत्वादिपदोपस्थापितयोरपि घटकर्मत्वाद्योः परस्पर बोधप्रसङ्गात्। कृञादिसमानार्थकधातूपस्थाप्ययत्ने विषयितात्मक द्वितीयार्थान्वयसंभवेन घटं करोतीतिवद् घटं यतते इत्यादिप्रयोग-प्रसंगाच्च। अपि तु ययोर्यादृशान्वयबोधे आकाङ्क्षा तदुपस्थापितयोरेव तादृशान्वयबोधः। आकाङ्क्षा च द्वितीयादेर्गम्यादिना कृञादिना च कल्प्यते न तु तत्समानार्थकेनापि स्पन्दियतिप्रभृतिनेति।

न चाऽऽकाङ्क्षाऽत्र समभिव्याहारः, स च गम्यादिनेव स्पन्द्यादि-नापि समान एवेति वाच्यम्। यतो द्वितीयादेर्गम्यादिसमभिव्याहार-स्यैव फलबलादन्वयबोधौपयिकत्वमुपगम्यते न तु स्पन्दिप्रभृति समभिव्याहारस्येति न तस्याऽऽकाङ्क्षात्वम्। अन्वयबोधौपयिक समभिव्याहारस्यैव तथात्वात्। अत एव समानार्थकत्वेपि गम्यादेरिव न स्पन्दादेः सकर्मकत्वव्यवहारः। फलान्वितव्यापारबोधकधातुत्वस्यैव तन्नियामकत्वात्।

अथ धातोर्व्यापारमात्रवाचित्वे त्यजति गच्छति त्यागो-गमनमित्यादिवाक्यादविलक्षणबोधप्रसङ्गः, न हि शक्तिभ्रमा-द्यजन्मनोस्तादृशवाक्यजन्यबोधयोर्वैलक्षण्यं कश्चिदभ्युपैति। तथासति त्यागादितात्पर्येण गमनादिपदं व्युत्पन्ना अपि प्रयुञ्जीरन्। न च तत्र फलविशेषावच्छिन्नव्यापारे लक्षणा स्वीक्रियते इति विलक्षण बोधोपपत्तिरिति वाच्यम्। लक्षणया विलक्षणबोधजननेपि शक्त्याऽ-विलक्षणबोधजननसंभवेन दर्शितातिप्रसङ्गस्य दुर्वारत्वात्। न च गम्यादिशक्तिज्ञानजन्यार्थोपस्थित्या फलाऽविषयकान्वयबोधस्य कुत्रा-प्यजननात्तादृशोपस्थितिघटितसामग्रीशरीरे फलविशेषबोधकसामग्र्यपि निवेश्यते, तथा च त्यागगमनपदयोः शक्त्या नाऽविलक्षणबोधजनकतेति वाच्यम्।

---

अविलक्षणबोधप्रसंग इति। वैलक्षण्यप्रयोजकद्वितीयादेरभावेन तदुपस्था-पितफलविशेषविषयकत्वरूपवैलक्षण्याऽसंभवादिति भावः। तथासति। अविलक्षणबोधोपगमे सति। शङ्कते। नचेति। तत्र। त्यजति-गच्छति। त्यागो गमनमित्यादौ। स्वीक्रियते इति। गम्धातोः संयोगावच्छिन्नव्यापारे

त्यजिगम्योरेकार्थवाचकतारूपपर्यायतां विपर्यस्यतो गमनादि पदात् त्यागादिपदजन्यबोधसमानाकारकबोधस्य सर्वानुभवसिद्धतया गम्यादिशक्तिज्ञानात्फलाविषयकबोधस्यापि प्रसिद्धेः। एवं तादृशस्य पुंसः ग्रामं गच्छति ग्रामं त्यजति इत्यादितोऽप्यविलक्षणबोधोदयात्फल विशेषबोधकसामग्र्या गम्यादिपदजन्यबोधनियामकताया वक्तुम शक्यत्वात्। तथा चाऽभ्रान्तस्यापि भवन्मते ततोऽविलक्षणबोधसंभवे नैकविधतात्पर्येण व्युत्पन्नानां तादृशप्रयोगप्रसङ्गो दुर्वार इति चेद्।

---

त्यज्धातोर्विभागावच्छिन्नव्यापारे "कर्मवाचकपदासमभिव्याहारे" स्वीक्रियते इत्यर्थः। विलक्षणबोधोपपत्तिरिति। फलभेदात्तत्तद्धातुना विलक्षणबोधोपपत्तिरित्यर्थः। दर्शितातिप्रसङ्गस्य। गमनादितात्पर्येण त्यागादिपदप्रयोगप्रसङ्गस्य। ननु व्यापारमात्रस्य धात्वर्थत्वेपि तन्मात्रविषयकबोधस्य कुत्राप्यजननाद्विशिष्टविषयकबोध एवाभ्युपयते अस्माभिः, विशिष्टशक्तिवादिमतवत्। इयांस्तु विशेषः। अस्मन्मते त्यजति, गच्छति, त्यागो, गमनमित्यादौ ग्रामं ग्रामस्येत्यादिफलविशेषबोधकद्वितीयान्तषष्ठ्यन्तादिसमभिव्याहारज्ञानद्वितीयादिजन्यफलोपस्थित्यादिकल्पनम्, न तु विशिष्टशक्तिवादिन इति। तथा च गम्यादिपदजन्यबोधे फलविशेषोपस्थापकद्वितीयादिसमभिव्याहारज्ञानघटितसामग्र्या अभावे केवलाद् गच्छति गमनादिपदाच्छाब्दबोधस्यानुदयान्नाऽवैलक्षण्यमित्याशंकते। नचेति। तादृशेति। गम्यादिशक्तिज्ञानजन्येत्यर्थः। तथा च। फलविषयकबोधसामग्रीनिवेशे च। विपर्यस्यतः। त्यजिगमीसमानार्थकौ इति भ्रमवतः। अथ व्यापारमात्रे धातोः शक्तिवादिनः मते एव त्यजति गच्छतीतिवाक्यजन्यबोधयोरवैलक्षण्यापत्तिवारणाय बोधे फलविशेषविषयकत्वमभ्युपगतम्। एवं च तन्मते न भ्रमः, त्यजति गच्छतीत्यनयोरेकार्थवाचकत्वात्। विशिष्टशक्तिवादिनां मते वाच्यतावच्छेदकीभूतसंयोगविभागावच्छिन्नत्वयोर्भ्रमसंभवो यथा त्यज्धात्वर्थव्यापारे संयोगावच्छिन्नत्वस्य, गम्धात्वर्थव्यापारे विभागावच्छिन्नत्वस्य भ्रमत्वात्। एवमपि संयोगविभागान्यतरैकविषयकत्वनियमात् "फलाविषयकशाब्दबोधस्यापि प्रसिद्धेरिति ग्रन्थस्याऽसंगतिरिति चेन्न। फलाविषयकेत्यत्र फलपदस्य तत्तद्धातुशक्तिज्ञानजन्यशाब्दबोधनियतविषयपरत्वात्, तदविषयकशाब्दबोधस्यापि प्रसिद्धेरिति तदर्थात्। तथा च त्यज्धातुजन्यबोधे विभागाविषयकत्वस्य, गम्धातुजन्यबोधे संयोगाविषयकत्वस्य च सत्त्वात्। एवं च

नैवम् । कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फला-वच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते न तु केवलव्यापारे । अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमिति एकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिप्रयोगः । एवं त्यजिगमिप्रभृति समभिव्याहृतकर्मप्रत्ययस्य फलविशेष एव नियतं तादृशं तात्पर्यमिति न विभागादितात्पर्येण ग्रामं गच्छतीत्यादिप्रयोगः ।

तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकप्रयोगनियामकं तथासति शक्तिभ्रमादिना घटपदस्यापि पटादिबोधकतया पटेपि घटादिपदप्रयोगापत्तिः । नापि शक्त्या बोधकत्वम् तथा । उक्तदोषतादवस्थ्यात् । निरूढलक्षणयापि स्वारसिकपदप्रयोगात् ।

---

गम्धातुशक्तिज्ञानजन्यशाब्दसामग्र्यां द्वितीयाजन्यसंयोगोपस्थितेः त्यज्धातुजन्यशाब्दसामग्र्यां विभागोपस्थितेर्व्यभिचारितया निवेशयितुमशक्यतया त्यजति गच्छतीत्याभ्यां त्यागो गमनमित्याभ्यां च शक्त्या, विलक्षणबोधप्रसंगो दुर्वार इति ध्येयम् । तथा च । फलविशेषबोधकसामग्र्या अनियामकत्वे च । ततः । त्यागगमनादिपदात् । एकविधबोधतात्पर्येण । गमनबोधतात्पर्येण । तादृशप्रयोगप्रसंगो दुर्वारः । गमनतात्पर्येण त्यागादिपदप्रयोगप्रसंगो दुर्वारः । अनादितात्पर्यमेवेति । एवकारेण तदर्थबोधकत्वस्य व्यावृत्तिः । एकार्थतात्पर्येण । गमनतात्पर्येण । त्यागतात्पर्येण वा । फलविशेषे इति । त्यजिसमभिव्याहृतकर्मप्रत्ययस्य विभागे । गमिसमभिव्याहृतकर्मप्रत्ययस्य च संयोगे इत्यर्थः । तादृशम् । अनादि । ननु द्वितीयायाः विभागरूपफलबोधकत्वात् गमसमभिव्याहृतद्वितीयया कथ न विभागबोध इत्यत आह । तदर्थबोधकत्वमात्रं त्विति । तथासति । तदर्थबोधकत्वमात्रस्य स्वारसिकप्रयोगनियामकत्वे । घटादिपदप्रयोगापत्तिरिति । घटादिपदप्रयोगस्य स्वारसिकत्वापत्तिरित्यर्थः । तथा । स्वारसिकप्रयोगनियामकम् । उक्तदोषतादवस्थ्यादिति । द्वितीयाया विभागे शक्तिसत्वादित्यर्थः । अनुपपत्तिमाह । निरूढेति । तस्मादनादितात्पर्यमेव स्वारसिकप्रयोगनियामकमिति भावः । ननु अनादितात्पर्यस्य स्वारसिकप्रयोगनियामकत्वे शक्तिभ्रमलक्षणाज्ञानं विना वा गमिसमभिव्याहृतद्वितीयाया न विभागबोधकत्वमिति नियमे व्यभिचारोऽत आह । नियमोऽसिद्ध एवेति । तात्पर्यभ्रमसहकृतेति । गमिसमभिव्याहृतद्वितीया विभागबोध-

शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेर्विभागादिरूपफलविशेषितस्पन्दादिबोधकत्वाभावनियमोऽसिद्ध एवेति तात्पर्यभ्रमसहकृतशक्तिप्रमया तादृशबोधजननेपि न क्षतिः। विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न संभवतीत्येव नियमः, स च तात्पर्यभ्रमेणैव निर्वहति। विभागाद्यर्थे पूर्वपूर्वेषामनादितात्पर्यभ्रमवतो वक्तुः स्वकीयतात्पर्येण ग्रामं गच्छतीत्यादिप्रयोगो यत्र तत्र श्रोतुस्तात्पर्यभ्रमाऽसंभवेपि वक्तृतात्पर्यानादित्वभ्रम एव प्रयोगसंपादन द्वारा तदर्थशाब्दबोधप्रयोजक इति न तादृशनियमक्षतिरिति प्राचीन पथपरिष्कारप्रकारः।

---

परेति तात्पर्यभ्रमसहकृतेत्यर्थः। शक्तिप्रमया। द्वितीयाया विभागे शक्तिप्रमया। तादृशबोधजननेपि। गमिसमभिव्याहृतद्वितीयया विभागविषयकबोधजननेपि। न क्षतिः। न नियमभंगः। उक्तनियमस्यैवाऽसिद्धत्वादिति भावः। नियमस्वरूपमाह। विना लक्षणाग्रहमिति। लक्षणाग्रहं विनापीत्यर्थः। भ्रमानधीनेति। गमिसमभिव्याहृतद्वितीयाविभक्तिर्विभागबोधपरेति भ्रमानधीनेत्यर्थः। तादृशबोधः। गमिसमभिव्याहृतद्वितीयया विभागविषयक बोधः। फलितार्थमाह। स चेति। तात्पर्यभ्रमणैवेति। एवकारेण शक्तिभ्रमव्यावृत्तिः। तदर्थशाब्दबोधप्रयोजकः। विभागविषयकशाब्दबोधजनकः। न तादृशनियमक्षतिरिति। विना लक्षणाग्रहं भ्रमानधीन तादृशबोधो न संभवतीति नियमभंगो नेत्यर्थः। उक्तस्थले श्रोतुस्तात्पर्यभ्रमस्याऽसत्वेपि वक्तुस्तात्पर्यभ्रमस्यापि उक्तशाब्दबोधप्रयोजकस्य सत्वादिति भावः। विशिष्टशक्तिवादिनां मतमाह। नव्यास्त्वति। तद्धात्वर्थतावच्छेदकफलशालित्वपीति। धात्वर्थानधिकरणत्वे सतीति विशेषणात्कर्तुः फलाश्रयत्वेपि न क्षतिः। फलं च संयोगादिः। एवकारेण धातुजन्यफलशालित्वस्य व्यावृत्तिः। व्यावृत्तेः फलमाह। नात इति। प्रसंग इति। पूर्वदेशविभागस्यापि गमूधात्वर्थव्यापारजन्यत्वादिति भावः। फलपदं च क्रियाजन्यफलपरम्। एवं च। फलस्य धात्वर्थघटकत्वे च। धातोरेव फलविशेषलाभादिति। एवकारेण द्वितीयाव्यावृत्तिः। वृत्तिरेवेति। आधेयत्वमेवेत्यर्थः। एवकारेण फलस्य व्यावृत्तिः। तथा च ग्रामनिरूपितवृत्तितावत्संयोगानुकूलव्यापारानुकूलकृतिमानिति ग्रामं गच्छतीति वाक्याद् बोधः। तस्य। अनुशासनस्य। प्रकृतितात्पर्ये। फलविशेषान्वयित्व-

नव्यास्तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः। तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वम्। नातो गम्यादिकर्मत्वस्य पूर्वदेशादौ प्रसङ्गः। न वा स्पन्दैः सकर्मकत्वम्, तत्र फलस्य धात्वर्थतानवच्छेदकत्वात्। एवं च धातोरेव फलविशेषलाभात्फलान्वयिनी वृत्तिरेव द्वितीयार्थः। न च कर्मणि द्वितीयेत्यनुशासनविरोधः। तस्य कर्मणि फलनिष्ठाधेयत्वान्वयिनि प्रकृतितात्पर्ये तदुत्तरं द्वितीयेत्यर्थकत्वात्। न चैवं तस्य शक्तिग्राहकत्वानुपपत्तिः। अनादितात्पर्यग्रहसंपादकत्वेन परंपरया शक्तिग्राहकत्वसंभवात्। न च फलस्य पदार्थैकदेशतया तत्र द्वितीयार्थवृत्तेरन्वयाऽसंभवः। व्युत्पत्तिवैचित्र्येण प्रकृते एकदेशान्वयस्वीकारात्।

अथ गमनं न स्पन्द इत्यादितो धात्वर्थतावच्छेदकफले स्पन्दभेदाऽन्वयबोधसंभवेनैतादृशप्रयोगस्य वारणाय फलविशेष्यकान्वयबोधे तद्विशेष्यकवृत्तिज्ञानजन्यफलोपस्थितित्वेन हेतुत्वकल्पनस्यावश्यकत्वात्। तादृशकारणबाधेन धात्वर्थतावच्छेदकफले द्वितीयार्थोऽन्वयाऽसंभवः। न च यादृशपदसमभिव्याहारज्ञानात्फलविशेष्यकस्पन्दभेदान्वयबोधः प्रसिद्धस्तादृशपदसमभिव्याहारज्ञानतादृशपदज्ञानजन्यफलाद्युपस्थितिघटितसामग्र्यास्तादृशान्वयबोधोत्पादप्रयोजिकाया असत्वेनोक्तस्थले तदापत्त्यसंभव इति वाच्यम्। यत्र गमनादिपदादेव लक्षणया शक्तिभ्रमेण वा स्वातन्त्र्येण फलोपस्थितिस्तत्र फलविशेष्यकस्पन्दभेदान्वयबोधप्रसिद्ध्या गमनपदसमभिव्याहारतज्जन्यफलोपस्थितिघटितसामग्र्याः फलविशेष्यकस्पन्दत्वाद्यवच्छिन्नभेदान्वयबोधप्रयोजकताया आवश्यकत्वात्तद्बलेन शक्तिप्रमाधीनबोधेपि फलांशे स्पन्दभेदादिभानप्रसंगात्।

---

प्रकारकेच्छाविशेष्यप्रकृत्युत्तरं द्वितीयेति तदर्थः। ननु एतावता द्वितीयार्थानिरूपणादुक्तानुशासनस्य शक्तिग्राहकत्वानुपपत्तिरित्य शंकते। नचेति। एवं। अनुशासनस्य तात्पर्यग्रहसंपादकत्वे। तस्य। अनुशासनस्य। परंपरया। अनुमित्या। तथा च द्वितीया आधेयत्वशक्त्या असति बाधके स्वघटितवाक्यघटकपदान्तराऽबोध्याधेयताऽन्वितस्वार्थतात्पर्यविषयप्रकृतिकत्वादित्यनुमानेन शक्तिग्रह इति बोध्यम्। स्वपदद्वयं क्रमेण द्वितीया-प्रकृतिपरम्। अनुशासनम् उक्तहेतुघटकपदान्तराबोध्याधेयतान्वितस्वार्थतात्पर्यग्रह-

एवं च फलव्यापारयोः पृथक् शक्तिस्वीकारपक्षेपि न निस्तारः। तथात्वेपि हि गमनं न स्पन्द इत्यादौ फलांशे शक्तिभ्रमया स्पन्दभेदान्वय बोधसंभवेन तादृशप्रयोगापत्तेर्दुर्वारत्वादिति चेन्न। तद्विशेष्यकवृत्ति ज्ञानजन्यतदुपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थित्यव्यवहितो त्तरत्वनिवेशनमावश्यकम्, विशिष्य तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थिते रेकैकबोधे नानाहेतुताया व्यवस्थापितत्वात्। एकपदाधीनतद्विषयक शाब्दबोधे पदान्तरवृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचारस्य प्रकारान्तरेण वारणासंभवात्। एवं च धात्वर्थतावच्छेदकफले द्वितीयार्थान्वय बोधेपि क्षतिविरहः। तत्रैतादृशकारणस्य व्यभिचाराप्रसक्तेरिति वदन्ति।

---

संपादकत्वेनोपयुज्यते। तत्र। फले। व्युत्पत्तिवैचित्र्येणेति। धात्वर्थतावच्छेदकातिरिक्तपदार्थेनेति व्युत्पत्तिसंकोचेनेत्यर्थः। तादृशप्रयोगवारणाय। गमनं न स्पन्द इति प्रयोगवारणाय। तद्विशेष्यकेति। फलविशेष्यकेत्यर्थः। तादृशकारणबाधेनेति। संयोगात्मकफलविशेष्यकसंयोगोपस्थितिरूपकारणबाधेनेत्यर्थः। द्वितीयार्थेति। आधेयतेत्यर्थः। यादृशपदसमभिव्याहारज्ञानादिति। संयोगो न स्पन्द इति समभिव्याहारज्ञानादित्यर्थः। तादृशपदसमभिव्याहारेति। संयोगपदसमभिव्याहारेत्यर्थः। तादृशपदज्ञानजन्येति। संयोगपदज्ञानजन्येत्यर्थः। फलाद्युपस्थितिघटितेति। संयोगाद्युपस्थितिघटितेत्यर्थः। तादृशान्वयबोधोत्पादप्रयोजिकाया इति। संयोगविशेष्यकस्पन्दभेदप्रकारकान्वयबोधोत्पत्तिप्रयोजिकाया इत्यर्थः। उक्तस्थले। गमनं न स्पन्द इत्यत्र। तद्‌ापत्त्यसभव इति। संयोगविशेष्यकस्पन्दभेदप्रकारक बोधापत्त्यसंभव इत्यर्थः। यत्र। गमनं न स्पन्द इत्यत्र। स्वातन्त्र्येण। विशेष्यतया। तत्र। गमनं न स्पन्द इत्यत्र। तद्बलेन। उक्तसामग्रीबलेन।

ननु फलव्यापारयोः पृथक्शक्तिः, तथा च फले न द्वितीयार्थाधेयत्वान्वयानुपपत्तिरित्यत आह। एवं चेति। एवमेवेत्यर्थः। तथात्वेपि। पृथक् शक्तिस्वीकारेपि। तादृशप्रयोगापत्तेः। गमनं न स्पन्दः इति प्रयोगापत्तेः। व्यभिचारस्येति। परस्परजन्ये व्यभिचारस्येत्यर्थः। वारणाऽसंभवादिति। अयमाशयः। सामान्यतः शाब्दबोधं प्रति सामान्यत उपस्थितित्वेन न कारणत्वम्, घटपदघटिताकांक्षास्थले कलशपदात्तदुपस्थितौ शाब्दापत्तितो- घटत्वावच्छिन्नविषयताशालिशाब्दं प्रति घटत्वावच्छिन्नविशेष्यकवृत्तिज्ञानजन्य-

इदन्तु चिन्त्यते। व्यापारमात्रस्य धात्वर्थतायामपि सर्वानुपपत्तीनामुद्धृतत्वात्फलावच्छिन्नव्यापारस्य गुरुतया तथात्वमनुचितम्।

अथ फले द्वितीयादेः शक्त्यन्तरकल्पनामपेक्ष्य धातोर्विशिष्टे शक्तिकल्पनमेवोचितम्। न च भवन्मतेऽप्याधेयत्वे द्वितीयादेः शक्त्यन्तरस्य कल्पनीयत्वात्तदंशे साम्यमिति वाच्यम्। ग्राममध्यास्ते-ग्राममधिशेते ग्रामं संयुनक्ति इत्यादौ द्वितीयायाः सर्वमते एवाऽऽधेयत्वबोधकतया द्वितीयादेः फलवाचकत्वमतेऽप्याधेयत्ववाचकताया आवश्यकत्वात्। न च द्वितीयायाः संयोगादिवाचकत्वमते आधेयत्वे तस्या लक्षणैव न तु शक्तिरितिवाच्यम्। आधेयतात्वस्याखण्डोपाधितया संयोगत्वादिसमशरीरत्वात्। संयोगत्वावच्छिन्ने तदवच्छिन्ने वा शक्तिः कल्प्यते इत्यत्र विनिगमकाऽसंभवात्।

---

घटोपस्थितित्वेन कारणत्वं वाच्यम्, एवमपि परस्परजन्यशाब्दबोधे व्यभिचारवारणाय घटत्वावच्छिन्नविशेष्यकशक्तिज्ञानजन्यघटोपस्थित्यव्यवहितोत्तरशाब्दबोध प्रति घटत्वावच्छिन्नविशेष्यकशक्तिज्ञानजन्यघटोपस्थितित्वेन कारणत्वम्। एवमेव तत्र तत्रापि। तथा च विशिष्टशक्तिवादिमते संयोगत्वावच्छिन्नधर्मिकगम्धातुशक्तिज्ञानस्य शाब्दहेतुत्वं नास्ति, लक्षणास्थले संयोगत्वावच्छिन्नधर्मिकगम्धातुवृत्तिज्ञानजन्यत्वसत्वेपि संयोगत्वावच्छिन्नधर्मिकगम्धातुशक्तिज्ञानाजन्यत्वेनोक्तकार्यतावच्छेदकानाक्रान्तत्वात्।

अथैवमपि खण्डशः शक्तिपक्षे गमनं न स्पन्द इति प्रयोगवारणमशक्यम्, संयोगत्वावच्छिन्नधर्मिकगम्धातुशक्तिज्ञानस्य तज्जन्योपस्थितेश्च सत्वात्, गम्धातोःशक्तिप्रमयोपस्थिते संयोगे स्पन्दभेदसत्वादिति चेन्न। विभक्त्यर्थान्यनिष्ठप्रकारतानिरूपितधातुप्रयोज्यफलनिष्ठविशेष्यताकशाब्दबोधे धातुजन्यव्यापारोपस्थितेः प्रतिबन्धकत्वात्। व्यापारविशेष्यकफलप्रकारकबोधतात्पर्यज्ञानस्य प्रतिबन्धकताया वक्ष्यमाणत्वाच्च।

एवं च। तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितेस्तत्तच्छाब्दबोधं प्रति कारणत्वे च। वृत्तिविरह इति। नानुपपत्तिरित्यर्थः। तत्र। आधेयत्वप्रकारकसंयोगविशेष्यकबोधे। एतादृशकारणस्य। द्वितीयासमभिव्याहृतगम्धातुजन्यसंयोगोपस्थितिरूपकारणस्य। व्यभिचाराप्रसक्तेरिति। विशिष्टशक्तिपक्षे-आधेत्वप्रकारकफलविशेष्यकबोधे फलविशेष्यकवृत्तिज्ञानजन्यफलोपस्थित्यन्य-

अस्तु ममापि आधेयत्वे लक्षणैव शक्तिस्तु संख्यायामेव। यदि च द्वितीयादेः फलबोधकतामते फलेपि तस्या लक्षणैव न तु शक्तिः, शक्तिस्तु संख्यायामेव संयोगविभागरूपप्रत्येकफलापेक्षया संख्यायां तत्प्रयोगप्राचुर्यस्य विनिगमकत्वादित्युच्यते। तथापि तन्मते धातुजन्य शुद्धव्यापारोपस्थितेः शाब्दबोधहेतुताकल्पनमधिकम्, द्वितीयाद्यसम-भिव्याहारानुरोधने फ विशेषावच्छिन्नव्यापारे धातोर्लक्षणाया भव-तामप्यावश्यकत्वात्, धातुजन्यतादृशव्यापारोपस्थितिहेतुताया उभयसिद्धत्वात्।

---

वहितोत्तरत्वरूपकार्यतावच्छेदकानाक्रान्तत्वात्, पृथक्शक्तिपक्षे कार्यता-वच्छेदकाक्रान्तत्वेपि कारणस्यापि सत्वाद् व्यभिचाराप्रसक्तेरित्यर्थः। प्राचीनमतं समर्थयति। अत्रेदं चिन्त्यते इति। तथात्वम्। धात्वर्थत्वम्। आवश्यकत्वादिति। क्रमेण स्थितिशयनसंयोगरूपफलानां धात्वर्थत्वादिति भावः। तदवच्छिन्ने। आधेयतात्वावच्छिन्ने। ननु नव्यमते द्वितीयाया आधेयत्वे, धातोः फलावच्छिन्नव्यापारे शक्तिः। प्राचीनमते द्वितीयायाः फले धातोर्व्यापारत्वरूपलघुधर्मावच्छिन्ने शक्तिरिति लाघवमेव विनिगमकमत आह। अस्तु वेति। ममापि। नव्यमतेपि। संख्यायामेवेति। एवकारेणा-धेयत्वव्यवच्छेदः। तथा च फले द्वितीयायाः, व्यापारे च धातोः शक्ति-कल्पनापेक्षया विशिष्टशक्तिकल्पनमेवोचितमिति भावः। मते। प्राचीन-मते। तस्याः। द्वितीयायाः। लक्षणैवेति। एतेन नव्यमते आधेयतात्वरू-पाऽखण्डधर्मावच्छिन्ने एकैव शक्तिः, प्राचीनमते तु संयोगविभागत्वादिनाना-धर्मावच्छिन्ने नानाशक्तिरतो गौरवमिति निरस्तम्। संख्यायामेवेति। तथा च विशिष्टशक्तिकल्पनापेक्षया धातोर्व्यापारमात्रे शक्तिकल्पने लाघवम्, फलस्य-लक्षणया द्वितीययैव लाभादितिभावः। तथापि। फले द्वितीयाया लक्षणा-कल्पनेपि। शक्त्यकल्पनेपीति यावत्। तन्मते। प्राचीनमते। भवता। आवश्यकत्वादिति। अन्यथा त्यजति गच्छतीत्यनयोः पर्यायता स्यादिति भावः। तादृशव्यापारोपस्थितिहेतुताया इति। फलावच्छिन्नव्यापारो-पस्थितिहेतुताया इत्यर्थः। उभयसिद्धत्वादिति। उभयमतसिद्धत्वादित्यर्थः। तथा च द्वितीयान्तसमभिव्याहारे केवलव्यापारोपस्थितेः कारणत्वमधिकं प्राचां मते इति भावः। तन्मते। प्राचीनमते। ननु नवीनमतेपि द्वितीया-जन्याधेयत्वोपस्थितेः कारणत्वसाम्यमित्यत आह। तज्जन्ये इति। द्वितीया-

यदि च स्पन्दते इत्यादित इव शक्तिभ्रमाद् गच्छतीत्यादितोपि शुद्धव्यापारबोध आनुभविक इति मन्यते तथापि तन्मते शाब्दबुद्धौ द्वितीयादिजन्यफलोपस्थितेः कारणतायाः कल्पनाधिक्यं तज्जन्याधेयत्वोपस्थितिहेतुत्वकल्पनस्य चोक्तस्थलानुरोधेनोभयमत एवावश्यकत्वादिति चेदस्तु तन्मते तादृशकारणताया आधिक्यम् ।

नव्यमते तु ग्रामं गच्छतीत्यादिवाक्यज्ञानघटितशाब्दसामग्र्याः समानविषयकानुमित्यादिप्रतिबन्धकतायां फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन धातुजन्योपस्थितेर्निवेशनीयतया तस्यास्तादृशविशेष्यताशालित्वेन व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमनाविरहात् सामग्रीप्रतिबन्धकताधिक्यमवच्छेदकगौरवं च । प्राचीनमते द्वितीयाजन्यफलोपस्थितेः सामग्र्यन्तर्निवेशस्तु नव्यमतसिद्धतज्जन्याधेयत्वोपस्थितिनिवेशस्थलीय इति । नव्यमते तादृशस्थले शाब्दबोधस्याधिकविषयतया तात्पर्यज्ञानादिकमपि अधिकविषयकमेव शाब्दधीहेतुर्भविष्यति प्रतिबन्धकसामग्र्यन्तर्भविष्यतीति च गौरवम् ।

अथ फलस्य द्वितीयार्थत्वे भूमिं गच्छति न महीरुहमित्यादौ महीरुहवृत्तिसंयोगादेर्जनकतासंबन्धावच्छिन्नाभाव एव नञर्थो वाच्यः, स च वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया अप्रसिद्धः । नव्यमते तु द्वितीयार्थस्याधेयत्वस्य फलनिष्ठाभाव एव तथेति नानुपपत्तिः ।

---

जन्ये इत्यर्थः । उक्तस्थलानुरोधेन । ग्राममध्यास्ते इत्यादिस्थलानुरोधेन । तन्मते । प्राचीनमते । तादृशकारणतायाः । द्वितीयाजन्यफलोपस्थितिकारणताया आधिक्यमस्तिवत्यर्थः । नव्यमते गौरवं दर्शयति । नव्यमते त्विति । अवच्छेदकगौरवं चेति । प्रतिबन्धकतावच्छेदकगौरवं चेत्यर्थः । तज्जन्येति । द्वितीयाजन्येत्यर्थः । गौरवान्तरमप्याह । नव्यमते इति । तादृशस्थले । ग्रामं गच्छतीत्यत्र । अधिकविषयकतयेति । आधेयत्व-फलव्यापारविषयकतयेत्यर्थः । एवमाधेयत्वस्य संसर्गोपि बोध्यः । एवं शाब्दबोधस्याधिकविषयकत्वे तात्पर्यज्ञानादीनामधिकविषयकत्वं बोध्यम् । अत्रेदं बोध्यम् । शाब्दबोधस्याधिकविषयावगाहित्वे एव प्रतिबध्यप्रतिबन्धकभावलाघवं राज्ञः पुरुष

न च भूमिकर्मकगमनकर्त्रादौ महीरुहकर्मकगमनकर्तृत्वाद्यभाव प्रतीयते इति वाच्यम्। कर्तृवाचकपदासमभिव्याहारस्थले तदसंभवात्। न च तत्राप्याख्यातार्थान्वयबोधानुरोधेन कर्तृवाचकपदाध्याहारस्यावश्यकतया अध्याहृतपदोपस्थाप्यकर्तर्येव तादृशाभावो नव्या बोधयिष्यते इति वाच्यम्। आख्यातार्थविशेष्यकस्याप्यन्वयबोधस्य संभवेनाध्याहारस्यानावश्यकत्वात्। भूमेर्गमनं न महीरुहस्येत्यादौ-द्वितीयासमानार्थकषष्ठ्यर्थाभावबोधकतया आवश्यकत्वाच्च। नहि तत्राप्याश्रयतासंबन्धावच्छिन्नप्रतियोगिताकगमनाभावः प्रतीयते इति सम्यक्। अनुयोग्यनुपस्थितेनञ्ऽनुयोगिविनिर्मोकेणाभावबोधकताया अव्युत्पन्नत्वादिति चेन्न।

---

इत्यादौ संसर्गता निराकरणावसरे प्रदर्शितमिहापि तथैव युक्तम्। अतएवाग्रे "शाब्दबुद्धेरधिकविषयत्वे" इत्यादिना प्राचीनमते गौरवं दर्शयिष्यति।

प्राचीनमतमाक्षिपति। अथेति। न महीरुहमिति। द्वितीयार्थः फलसंयोगादिः। तस्य नञर्थेऽभावेऽन्वयः। तथा चाधेयतासंबन्धेन भूमिविशिष्टसंयोगविशिष्टोऽथ च जनकतासंबन्धावच्छिन्नप्रतियोगिताकमहीरुहवृत्तिसंयोगाभाववान्यो व्यापारस्तदनुकूलकृतिमानिति बोधः प्राचीनमते। वै० जनकतास०।

नव्यमते आधेयत्वं द्वितीयार्थः। तस्य नञर्थेऽभावेऽन्वयः। तथा च भूमिनिरूपितवृत्तितावान्महीरुहनिरूपितवृत्तित्वाभाववान्यः संयोगस्तज्जनकव्यापारानुकूलकृतिमानिति बाधः। वृत्तित्वाभावश्च स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः, स च वृत्तिनियामकः। तथा। नञर्थः। तदसंभवादिति। महीरुहकर्मकगमनकर्तृत्वाभावबोधनासंभवादित्यर्थः। षष्ठ्यर्थेति। आधेयत्वेत्यर्थः। आवश्यकत्वाच्चेति। अत्र भूमिवृत्तिसंयोगवैशिष्ट्यम् अथ च महीरुहनिरूपितवृत्तिसंयोगस्य जनकत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावः प्रतीयेत स चाऽप्रसिद्ध इति भावः। भूमिनिरूपितवृत्तितावान्, अथ च महीनिरूपितवृत्तित्वाभाववान्यः संयोगस्तदनुकूलो व्यापार इति बोधस्यावश्यकत्वादिति। तत्र। भूमेर्गमनं न महीरुहस्येत्यादौ। अव्युत्पन्नत्वादिति। अनुयोग्यविषयकनञर्थबोधस्याऽप्रसिद्धत्वादिति भावः। तस्य च। संयोगजनकत्वाभावस्य च। अतिरिक्तप्रतियोगिताकल्पने इति। संयोगजनकत्वत्वावच्छिन्नप्रतियोगितापेक्षया संयोगत्वावच्छिन्नप्रतियोगिताकल्पने इत्यर्थः।

वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वे दोषः कः। अथ जनकतादिसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाद्यभावस्यातिरिक्तस्य कल्पनेगौरवमिति चेन्न। तादृशाभावस्य संयोगजनकत्वाद्यभावसमनियतत्वेन तत्तत्स्वरूपत्वात्तस्य चोभयवादिसिद्धत्वात्, अतिरिक्तप्रतियोगिताकल्पने गौरवमिति चेद्—अस्तु एतद्गौरवम्। उपदर्शितबहुविधलाघवेन ईदृशगौरवस्याऽकिञ्चित्करत्वात्।

अथ फलस्य द्वितीयार्थत्वे वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेपि द्रव्यं गच्छति न गुणमित्यादौ गुणादिनिष्ठस्य संयोगादिरूपफलस्याऽप्रसिद्ध्या नञर्थान्वयबोधानुपपत्तिरिति चेन्न। तत्र तादृशाधेयतासंबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावस्यैव द्वितीयार्थेफले नञा बोधनोपगमात्। गुणो गुणं न गच्छतीतिवाक्यस्योभयमते एवाऽप्रमाणत्वात्। अस्तु वा तत्राऽभावस्य द्विधा भानोपगमेन गुणाभाववत्फलानुकूलस्पन्दाश्रयत्वाभाववान् गुण इत्याकारक एवान्वयबोधः।

परे तु वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वेपि द्रव्यं गच्छति नाभावमित्यादौ गतिविरहः। तथाहि। समवायसंबन्धावच्छिन्नाधेयतैव द्वितीयार्थो वाच्यः। अन्यथा कालिकसंबन्धावच्छिन्नग्रामादिवृत्तिसंयोगादिकमादायाऽतिप्रसंगात्। तथा चाभावादिनिरूपित तथाविधाधेयताऽप्रसिद्ध्या तदभावबोधाऽसंभवः। निरूपितत्वसंबन्धस्य च वृत्त्यनियामकतयां समवायसंबन्धावच्छिन्नाधेयतायां तत्संबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावबोधो न संभवत्येवेत्याहुरिति।

---

उपदर्शितबहुविधलाघवेनेति। सामग्रीप्रतिबन्धकतायां प्रतिबन्धकत्वावच्छेदकत्वे च लाघवेनेत्यर्थः। ईदृशगौरवस्य। अतिरिक्तप्रतियोगिताकल्पना गौरवस्य। नञर्थान्वयबोधानुपपत्तिरिति। गुणवृत्तिसंयोगाप्रसिद्ध्या तदभावस्य नञर्थत्वाऽसंभवेन तद्विषयकान्वयबोधानुपपत्तिरित्यर्थः। तत्र। द्रव्यं गच्छति न गुणमित्यादौ। प्रकृत्यर्थाभावस्यैवेति। गुणाभावस्यैवेत्यर्थः। एवकारेण गुणवृत्तिसंयोगाभावस्य व्यावृत्तिः। बोधनोपगमादिति। तथाचाधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकगुणाभाववान्यो द्रव्यवृत्तिसयोगस्तदनुकूलव्यापारवानितिबोधोपगमादित्यर्थः। ननु गुणो गुणं न गच्छतीत्यादौ आधेयत्व-

अत्रोच्यते। वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वे आधेयत्वं संसर्गः। विभक्तेः संख्यामात्रमर्थः। फलावच्छिन्नव्यापारो धात्वर्थं इत्येवोचितम्। अस्तु च व्युत्पत्तिवैचित्र्येण नामार्थधात्वर्थयोरपि साक्षादन्वयबोधस्तथाप्सति अतिप्रसङ्गस्य प्रागुपदर्शितप्रकारेण वारणसंभवात्।

---

संबन्धावच्छिन्नप्रतियोगिताकगुणाभाववत्संयोगानुकूलव्यापारवानितिबोधस्य - गुणे तादृशव्यापारावगाहित्वेन भ्रमत्वात्प्रमात्वानुपपत्तिरत आह। अप्रमाणत्वादिति। तथाचेष्टापत्तिरिति भावः। प्रमाणत्वे त्वाह। अस्तु वेति तत्र। गुणो गुणं न गच्छतीत्यत्र। अभावस्य द्विधा भानोपगमेनेति। एकस्यैव नञो गुणाभावबोधकत्वम् स्पन्दाश्रयत्वाभावबोधकत्वं चेतिभावः। नव्यमते दोषमाह परेत्विति। समवायसंबन्धावच्छिन्नाधेयतैवेति। एवकारेण सामान्यत आधेयताया व्यवच्छेदः। अन्यथा। समवायसबन्धावच्छिन्नत्वाऽनिवेशे। ग्रामावृत्तिसंयोगादिकमादायेति। कालिकसंबन्धावच्छिन्नग्रामनिरूपिताधेयतावत्संयोगादिकमादायेत्यर्थः। अतिप्रसंगादिति। ग्रामं त्यजति चैत्रे ग्रामं गच्छतीतिप्रयोगप्रसङ्गादित्यर्थः। चैत्रसंयोगस्य समवायेन ग्रामेऽसत्वेपि कालिकेन सत्वादितिभावः। तथा च आधेयतायां समवायसंबन्धावच्छिन्नत्वनिवेशे च। तथाविधेति। समवायसंबन्धावच्छिन्नेत्यर्थः। तदभावबोधाऽसंभव इति। अभावनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाभावबोधाऽसंभवइत्यर्थः। समवायसंबन्धावच्छिन्नाधेयतायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावाभावबोधोपि न संभवतीत्याह। निरूपितत्वसंबन्धस्य चेति। तत्संबन्धावच्छिन्नेति। निरूपितत्वसंबन्धावच्छिन्नेत्यर्थः। न संभवत्येवेति। इदन्तुबोध्यम्। द्वितीयार्थं आधेयत्वमेव, न तु समवायसंबन्धावच्छिन्नाधेयत्वम्, ग्रामं गच्छति इत्यादौ द्वितीयार्थं आधेयतावत्वं च "संयोगे" समवायसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण। एवं च द्रव्यं गच्छति नाभावमित्यादौ अभावनिरूपिताधेयत्वाभावः समवायसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः"केवलान्वयी"संयोगे वर्तते इति नाऽप्रसिद्धिः। नापि वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वम्। एवं च फलस्य द्वितीयार्थत्वे न काप्यनुपपत्तिरिति ध्येयम्।

ननु गुणपदोत्तरमभावपदोत्तरं च कथं द्वितीया—गुणस्य—अभावस्य च क्रियाजन्यफलशालित्वरूपकर्मत्वाभावात। कर्मणि द्वितीयेतिसूत्रेण कर्मबोध-

न चैतत्कल्पे लाघवानवकाशः। फले स्वतन्त्रशक्त्यकल्पने सामग्रीप्रतिबन्धकतायां द्वितीयादिजन्यफलोपस्थितिः, धातुजन्यव्यापारोपस्थितिरित्युभयोपस्थित्यपेक्षया धातुजन्यविशिष्टविषयकोपस्थितेरेकस्या निवेशेन लाघवात्। वस्तुतस्तु शाब्दबुद्धेरधिकविषयत्वे राज्ञःपुरुष इत्यादौ स्वत्वादेःसंसर्गतानिराकरणावसरे सामग्रीप्रतिबन्धकतायां लाघवस्य दर्शितत्वाद् द्वितीयादेराधेयत्वमर्थः, फलावच्छिन्नव्यापारश्च धातोरित्येव युक्तम्।

---

कपदोत्तरमेव द्वितीयायाः साधुत्वविधानादिति चेन्न। कर्मत्वान्वयित्वप्रकारककेच्छीयविशेष्यताश्रयबोधकप्रातिपदिकाद् द्वितीयायाः साधुत्वे सूत्रतात्पर्यात्। कर्मत्वान्वयित्वं च साक्षात्, नञर्थद्वारा वा बोध्यम्। प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ अत्र मूलम्। यत्र प्रकृतधात्वर्थकर्मत्वं यस्य कदाचिदपि प्रसिद्धं तत्र तत्कर्मत्वस्याभावो नञा प्रकृतधात्वर्थे बोध्यते। यथा भूमिं गच्छति न महीरुहमित्यादौ महीरुहवृत्तिकर्मताकत्वाभाववद्गमनं प्रतीयते तत्र साक्षात्कर्मत्वान्वयित्व महीरुहस्येति तद्वाचकपदाद् द्वितीया। द्रव्यं गच्छति न गुणमित्यादौ गुणाभाववत्कर्मतानिरूपकं द्रव्यकर्मकगमनं प्रतीयते इति नञर्थद्वारा कर्मत्वान्वयित्वं गुणादेरतस्तद्वाचकपदाद् द्वितीयेति।

फलस्य द्वितीयार्थत्वे तस्य च व्यापारे जनकतासंबन्धेनान्वयो वाच्यः, स च वृत्त्यनियामकस्तस्य चाभावप्रतियोगितावच्छेदकत्वे नव्यमतमाह। अत्रोच्यते इत्यादिना। ननु ग्रामस्याधेयतासंसर्गेण धात्वर्थसंयोगेऽन्वये नामार्थधात्वर्थयोः साक्षात् भेदेनान्वयापत्तिरत आह। व्युत्पत्तिवैचित्र्येणेति। आधेयतासंबन्धावच्छिन्नग्रामादिनिष्ठप्रकारतानिरूपितधात्वर्थसंयोग (फल) निष्ठविशेष्यताशालिशाब्दबोधं प्रति द्वितीयान्तग्रामादिपदगम्यादिधातुसमभिव्याहारज्ञानत्वेन कार्यकारणभावोपगमेनेत्यर्थः। तथासति ईदृशकार्यकारणभावोपगमे सति। अतिप्रसंगस्येति। ग्रामो गच्छतीत्यादौ आधेयतासंबन्धावच्छिन्नग्रामनिष्ठप्रकारतानिरूपितसंयोगनिष्ठविशेष्यताशालिबोधप्रसङ्गस्येत्यर्थः। प्रागुपदर्शितप्रकारेणेति। द्वितीयान्तग्रामादिपदसमभिव्याहृतगच्छतीत्यानुपूर्वीज्ञानस्य कारणत्वेनेत्यर्थः। अनन्तधातूनां तत्तत्फलावच्छिन्नव्यापारे शक्तिकल्पने गौरवमाशङ्कते। नचेति। लाघवं दर्शयति। फले स्वतन्त्रशक्त्यकल्पनेनेति। द्वितीयाया इत्यादिः। अस्य लाघवादित्यनेनान्वयः।

खण्डशक्तिपक्षे फलविषयकबोधजनकत्वप्रकारतानिरूपितगम्यादिनिष्ठ-

कर्माख्यातस्य फलमर्थः। अन्यथा ग्रामो गम्यते इत्यादौ ग्रामादेः व्यापारजन्यफलाश्रयत्वरूपकर्मत्वप्रतीत्यनुपपत्तेः। यादृशविशेष्यविशेषणभावापन्नयोः पदशक्यता तादृशविशेष्यविशेषणभावापन्नयोरेव शाब्दबोधे भानसंभवात् न तु विपरीतविशेष्यविशेषणभावापन्नयोः। यत्तु फले धातोः पृथक् शक्त्युपगमाद् व्युत्पत्तिवैचित्र्येण कर्त्राख्यातसमभिव्याहारस्थले व्यापारविशेषणतया भासमानस्य फलस्य कर्माख्यातस्थले तद्विशेष्यतया भानमिति।

तन्न। पृथक् शक्तिस्वीकारे शाब्दसामग्र्याः प्रतिबन्धकतायां विशिष्टविषयकोपस्थितिस्थले उपस्थितिद्वयनिवेशे गौरवात्। गम्यादेः संपूर्वयुजिप्रभृतिसमानार्थकताभ्रमवतामिव विशेषदर्शिनामपि गमनं न स्पन्द इत्यादिवाक्यात्संयोगादौ स्पन्दभेदान्वयबाधापत्तेर्दर्शितायाः दुर्वारत्वाच्च, संयोगादिविशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिघटितायास्तथाविधान्वयबोधसामग्र्या अक्षतत्वात्, तत्तद्धातूपस्थाप्यव्यापारांशे तत्तद्विशेषणकबोधतात्पर्यज्ञानस्य तादृशान्वयबोधप्रतिबन्धकताकल्पने गौरवादिति। फलस्य द्विधाभानं चेदनुभवविरुद्धं तदा पुनरनायत्या फलव्यापारयोः खण्डशः शक्तिद्वयमेव स्वीकरणीयम्, आख्यातस्याश्रयत्वमेव तत्रार्थः। अधिकमग्रे वक्ष्यते।

---

विशेष्यताका एका—अपरा च व्यापारविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यताका। विशिष्टशक्तिपक्षे फलावच्छिन्नव्यापारविषयकबोधजनकत्वप्रकारतानिरूपितगम्यादिनिष्ठविशेष्यताकेच्छारूपैकैव शक्तिर्विषयतासंबन्धेन व्यापारे फलेपीत्यस्मद्गुरुचरणाः।

लाघवादिति। भिन्नविषयकप्रत्यक्षसामग्रीप्रतिबन्धकतायां योग्यताज्ञान-फलोपस्थिति-व्यापारोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कम्। नव्यमतेतु फलप्रकारतानिरूपितव्यापारविशेष्यताशाल्युपस्थितेर्विशेष्यविशेषणभाववैपरीत्येपि एकेन योग्यताज्ञानेन सह विशेष्यविशेषणभावे विनिगमनाविरहेण च प्रतिबध्यप्रतिबन्धकभावचतुष्टयमिति रीत्या लाघवादिति भावः।

कर्माख्यातस्य। ग्रामो गम्यते इत्यत्राख्यातस्य। फलं संयोगादिः। तच्च ग्रामे विशेषणम्। अन्यथा। आख्यातस्य फलावाचकत्वे। व्यापारविशेषणीभूतसंयोगस्य न ग्रामे विशेषणत्वसंभवः, एकत्र विशेषणत्वेनान्वितस्यान्यत्र

अथ द्वितीयाया आधेयत्वार्थकत्वे व्यापारे तदन्वयतात्पर्येण सप्तम्या इव द्वितीयाया अपि प्रयोगापत्तिः। न हि गृहे पचतीत्यादिवत् गृहं पचतीति कश्चित्प्रयुङ्क्ते। मैवम्। धात्वर्थतावच्छेदकफलांशे आधेयत्वान्वये तादृशद्वितीयायाः साकाङ्क्षत्वकल्पनाद् व्यापारे तदुपस्थापिताधेयत्वान्वयाऽसंभवात्। सप्तम्यर्थानाधेयत्वोपस्थितिसप्तमीसमभिव्याहारज्ञानघटितायाः एव सामग्र्यास्तादृशान्वयबोधनियामकत्वात्। द्वितीयासप्तम्योः समानार्थकत्वेपि व्युत्पत्तिभेदज्ञापनायैव पृथक् पृथक् सूत्रेणैव तयोर्विधानात्।

---

विशेषणत्वेनान्वयायोगादिति भावः। ननु व्यापारप्रकारकसंयोगविशेष्यक एव बोधोस्तु विशेष्यीभूतसंयोगश्च ग्रामे विशेषणं भविष्यतीत्याशङ्कायामाह। यादृशेति। एवकारव्यावर्त्यमाह। नन्विति। तथा च फलस्य द्विधा भानमावश्यकमिति भावः। तथा च चैत्रसमवेतकृतिजन्यसंयोगानुकूलव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः।

कर्त्राख्यातस्थले व्यापारविशेषणतया भासमानस्यापि संयोगस्य कर्माख्यातस्थले व्यापारविशेष्यतया भानं संभवतीत्याह। यत्त्विति। व्युत्पत्तिवैचित्र्येणेति। फलविशिष्टव्यापारविषयकबोधे द्वितीयान्तकर्मसमभिव्याहृतकर्त्राख्यातसमभिव्याहारज्ञानस्य, एवं व्यापारविशिष्टफलविषयकबोधे प्रथमान्तकर्मपदसमभिव्याहृतकर्माख्यातसमभिव्याहारज्ञानस्य च कारणत्वाभ्युपगमेनेत्यर्थः। तद्विशेष्यतया। व्यापारविशेष्यतया। तथा च चैत्रसमवेतकृतिजन्यव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः। प्रतिबन्धकतायां। भिन्नविषयकप्रत्यक्षप्रतिबन्धकतायाम्। इदमुपलक्षणम्। शाब्दबोधकारणत्वे चेत्यपि बोध्यम्। गौरवादिति। गौरवं चानुपदमेवोक्तम्। भ्रमवतामिति। गमिसंयुजौ समानार्थकौ इति भ्रमवतामित्यर्थः। विशेषदर्शिनामपि। अभ्रान्तानामपि दुर्वारत्वाच्चेति। स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधकारणीभूतायाः संयोगविशेष्यकवृत्तिज्ञानजन्यसंयोगोपस्थितेः सत्त्वादिति भावः। गमधातूपस्थाप्यसंयोगविशेष्यकस्पन्दभेदप्रकारकबोधे गमधातूपस्थाप्यव्यापारः स्पन्दभेदप्रकारकशाब्दबोधपर इति तात्पर्यज्ञानस्येत्यर्थः। तथा च फलस्य व्यापारांशेऽविशेषणतया ग्रामे विशेषणत्वं युक्तमेव। यत्र धात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयविवक्षा तत्र द्वितीया। यत्र धात्वर्थव्यापारे आधेयत्वान्वयविवक्षा तत्र सप्तमी इति व्यवस्थापयितुमुपक्रमते।

अथाधःसंयोगावच्छिन्नस्पन्दस्य पतधात्वर्थत्वात् धात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयतात्पर्येण भूमिं पततीति प्रयोगापत्तिः। न च द्वितीयोपस्थिताधेयत्वप्रकारकफलविशेष्यकान्वयबोधे गम्यादिजन्यफलोपस्थितितत्समभिव्याहारज्ञानघटितसामग्र्येव प्रयोजिका, न तु पतधातुजन्यतदुपस्थितिघटिता सामग्रीति नातिप्रसङ्ग इति वाच्यम्। पतधातुनैव यत्र संयोगावच्छिन्नगमनं लक्षणादिनोपस्थापितं तत्र संयोगे द्वितीयार्थाधेयत्वान्वयात्।

---

अथेति। तादृशद्वितीयायाः। आधेयत्वार्थकद्वितीयायाः। तदुपस्थापितेति। द्वितीयोपस्थापितेत्यर्थः। आधेयत्वान्वये एवेति। एवकारेण व्यापारे आधेयत्वान्वयस्य व्यवच्छेदः। घटितताया एवेति। एवकारेण व्यापारे विभक्त्यर्थान्वये द्वितीयासमभिव्याहारघटितकारणकलापस्य सामग्रीत्वव्यवच्छेदः। तादृशान्वयबोधनियामकत्वादिति। व्यापारधर्मिकाधेयत्वप्रकारकबोधनियामकत्वादित्यर्थः। व्युत्पत्तिभेदज्ञापनायैवेति। फलविशेष्यकाधेयत्वप्रकारकान्वयबोधं प्रति द्वितीयासमभिव्याहारज्ञानं कारणम्। व्यापारविशेष्यकाधेयत्वप्रकारकबोधं प्रति च सप्तमीसमभिव्याहारज्ञानं कारणमिति बोधनायैवेत्यर्थः। पृथक् पृथक् सूत्रेण। कर्मणि द्वितीया, सप्तम्यधिकरणे। चेति सूत्राभ्याम्। तयोः। द्वितीयासप्तम्योः। फले। अधः संयोगे। सामग्र्य वेति। एवकारेण पतधातुजन्यफलोपस्थिति-तत्समभिव्याहारघटितसामग्र्या व्यवच्छेदः। तदेवाह। नत्विति। नातिप्रसङ्ग इति। न भूमिं पततीति प्रयोगापत्तिरित्यर्थः। लक्षणादिनेति। इयमेव भागत्यागलक्षणेत्युच्यते। सा च शक्यैकदेशबोधकत्वम्। द्वितीयार्थाधेयत्वान्वयादिति। गमधातुजन्यफलोपस्थितितत्समभिव्याहारज्ञानघटितसामग्र्याः प्रयोजकत्वे पतधातुलक्ष्यार्थसंयोगे द्वितीयार्थाधेयत्वान्वयो न स्यात्। एवं च भूमिं पततीति प्रयोगापत्तिर्दुर्वारैवेति भावः। उक्तापत्तिं निराकरोति। अत्राहुरिति। अधिकरणानवच्छिन्नत्वमिति। फलविशेष्यकद्वितीयोपस्थाप्याधेयत्वप्रकारकबोधं प्रति स्वप्रकृत्यर्थीभूताधिकरणानवच्छिन्नफलनिष्ठविषयताशाल्युपस्थितिः कारणमित्यर्थः। स्वं-द्वितीया। प्रकृत्यर्थीभूतेत्युपादानाल्लोष्टमूर्त्त्विपतीत्यादौ धात्वर्थसंयोगस्योर्ध्वदेशावच्छिन्नत्वेपि संयोगे न द्वितीयार्थाधेयत्वान्वयानुपपत्तिः। संयोगस्य द्वितीयाप्रकृत्यर्थीभूताधिकरणावच्छिन्नत्वात्। तादृशविषयताशालीति। अधिकरणानवच्छिन्नविषयताशालीत्यर्थः।

अत्राहुः—धातुजन्यशुद्धसंयोगावच्छिन्नस्पन्दोपस्थितेः शाब्दबोधकारणताया अवच्छेदकघटकसंयोगविषयतायां अधिकरणानवच्छिन्नत्वं विशेषणं देयम्। तथा च तादृशविषयताशालिसंयोगाद्युपस्थितिघटितसामग्र्या एव संयोगविशेष्यकद्वितीयोपस्थाप्याधेयत्वान्वयबोधप्रयोजकत्वोपगमान्नातिप्रसङ्गः। नचैवमपि फलावच्छिन्नव्यापारबोधकतया पतेः सकर्मकत्वापत्तिर्दुर्वारेति वाच्यम्। आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकत्वस्यैव तादृशव्यवहारनियामकत्वात्। उत्तरदेशानवच्छिन्नसंयोगः फलं गम्यर्थतावच्छेदकमिति नानुपपत्तिः। अत एवाग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारस्य जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेर्न तत्कर्मता। आश्रयानवच्छिन्नावच्छेदकताश्रयफलवत्त्वविरहात्। संयोगनिष्ठाया अवच्छेदकताया आश्रयेणाग्निनाऽवच्छिन्नत्वात्।

नचाग्निविशेषितसंयोगस्य धात्वर्थतावच्छेदकत्वेऽग्नौ घृतं जुहोतीत्यत्रानन्वयप्रसङ्गः, उद्देश्यतावच्छेदकविधेययोरैक्यादिति वाच्यम्। तत्र संयोगनिष्ठायामुद्देश्यतायां वन्हेराधेयतासंसर्गेणावच्छेदकतया सप्तम्यर्थस्याग्निवृत्तित्वस्य च विधेयतया उद्देश्यतावच्छेदकविधेययोरैक्यानवकाशात्। वस्तुतस्तु तत्र वन्हेरनन्वयेऽपि न क्षतिः। व्युत्पन्नानां तादृशप्रयोगस्याप्रामाणिकत्वात्। संस्कृते वन्हौ जुहुयादित्यादिस्थले च विधेयांशेऽधिकावगाहनान्नास्त्येवानुपपत्तिः घृतादेश्चाश्रयानवच्छिन्नधात्वर्थतावच्छेदकक्रियारूपफलाश्रयत्वात्कर्मत्वोपपत्तिः।

---

सामग्र्या एवेति। एवकारेण धातुजन्यफलविषयकोपस्थितेर्व्यवच्छेदः। नातिप्रसंग इति। न भूमिं पतनीति प्रयोगापत्तिरिति भावः ननु गमधातोः सकर्मकत्वानुपपत्तिः, धात्वर्थसंयोगस्योत्तरदेशावच्छिन्नत्वादित्यत आह। उत्तरदेशानवच्छिन्नेति। संयोगानुकूलव्यापार एव गम्याद्यर्थ इति भावः। अत एव। आश्रयानवच्छिन्नफलाश्रयस्य कर्मत्वादेव। अग्निसंयोगेति। संयोगानुकूलव्यापारानुकूलव्यापारमात्रार्थकत्वे नयति जुहोत्योःसमानार्थकत्वं स्यादतोऽग्नीति। अग्निसंयोगावच्छिन्नक्रिया घृतादिनिष्ठा तदनुकूलो व्यापारः पुरुषनिष्ठो बोध्यः। फलवत्त्वविरहादिति। संयोगवत्त्वविरहादित्यर्थः। आश्रयानवच्छिन्नत्वाभावादिति भावः। उक्तार्थमेवाह। अग्निनाऽवच्छिन्नत्वादिति। एवं चाऽग्निं घृतं नयतीतिवत् अग्निं घृतं जुहोतीति न प्रयोगः।

यत्तु धात्वर्थतावच्छेदकत्वं धातुवृत्तिप्रवृत्तिविशेष्यांशे साक्षात्प्रकारत्वम्, तच्च क्रियायामेव न संयोगांशेऽपीति नाग्नेर्जुहोतिकर्मतापत्तिरिति।

---

किन्तु अग्नौ घृतं जुहोतीत्येव प्रयोगः। न च पदे जुहोतीति प्रयोगानुपपत्तिः, तत्र संयोगस्याऽन्यानवच्छिन्नत्वादिति वाच्यम्। आधारावच्छिन्नसंयोगानुकूलव्यापारानुकूलव्यापारे लक्षणोपगमात्। ननु वह्निसंयोगमुद्दिश्य वह्निवृत्तित्वविधानेऽन्वयानुपपत्तिमाशङ्कते। नचेति। अग्निविशेषितेति। आधेयतासम्बन्धेनाऽऽधेयताद्वारा वाऽग्निविशेषितेत्यर्थः। लाघवादाधेयतासंसर्गेणाऽग्नेरेव धात्वर्थतावच्छेदकतयोद्देश्यतावच्छेदकत्वम्, नाग्निवृत्तित्वस्य, सप्तमीविभक्त्यर्थाधेयत्वस्य प्रागुक्तलाघवेन प्रकारत्वम्, एवं च वह्निवृत्तित्वस्य विधेयत्वान्नोद्देश्यतावच्छेदकविधेययोरैक्यमिति समाधत्ते। तत्रेति। अग्नौ-घृतं जुहोतीत्यत्र। ननु व्यापारे एवं सप्तम्यर्थाधेयत्वान्वयस्य पूर्वमुक्तत्वादत्र संयोगेऽन्वयाभिधानमसंगतमिति चेन्न। द्वितीयार्थाधेयत्वस्य फलेऽन्वयबोधं प्रति स्वप्रकृत्यर्थरूपाधिकरणानवच्छिन्नफलनिष्ठविषयताशाल्युपस्थितिः कारणम् तद्वत्सप्तम्यर्थाधेयत्वस्य फलेऽन्वयबोधं प्रति स्वप्रकृत्यर्थरूपाधिकरणावच्छिन्नफलनिष्ठविषयताशाल्युपस्थितेः कारणत्वकल्पनान्नानुपपत्तिः। अग्निविशिष्टसंयोगेऽग्निवृत्तित्वस्यान्वये पौनरुक्त्यमाशङ्क्याह। वस्तुतस्त्विति। तत्र। संयोगे। अनन्वयेऽपीत्यपिनाऽनुपदोक्तत्वयोपादानं सूचितम्। अप्रामाणिकत्वादिति। अप्रामाणिकत्वोपगमादित्यर्थः। इदमत्रावधेयम्। वस्तुतस्तु इत्यारभ्य नास्त्येवानुपपत्तिरित्येतत्स्थाने "अत एव विवेचका वन्हौ जुहोतीति न प्रयुञ्जते, प्रयुञ्जते च संस्कृते वन्हौ जुहोतीत्यादिकमेव। तत्र वन्हौ इत्यनुक्तेऽग्नौ संस्कृतत्वाऽज्ञाभात्तदुक्तिरावश्यकी। न हि धात्वर्थतावच्छेदकवन्हौ संस्कृतादिपदार्थाऽन्वयसम्भवः" इति पाठः कुत्रचिद्दृश्यते। अयमेव सन्दर्भयोग्यः। अतएव। धातुत एव वन्हिवृत्तित्वस्य लाभाद्वन्हौ इत्यस्याऽनावश्यकत्वादेव। तत्र। वन्हौ जुहोतीत्यत्र। नहीति। धात्वर्थेऽभेदसंबन्धेन प्रातिपदिकार्थान्वये द्वितीयान्तत्वग्रहस्यापेक्षितत्वेपि फले व्यापारे वा तदन्वये एव, न तु तदतिरिक्तधात्वर्थान्वये। तेन यथा तदतिरिक्तधात्वर्थान्वये वन्हिमिति द्वितीयान्तवाक्यस्य निराकाङ्क्षता तथा संस्कृते इति सप्तम्यन्तस्यापि अभेदान्वये समानवचनकविशेष्यवाचकपदविरहान्निराकाङ्क्षतेति। धात्वर्थतावच्छेदके वन्हौ न संस्कृतान्वयसंभव इत्यर्थः।

वस्तुतस्तु इत्यादिपाठे तु प्रथमतोऽन्वयमुपपाद्य अनन्वयेपि न क्षति-

तदसत्। अजां ग्रामं नयतीत्यादौ संयोगावच्छिन्नक्रियानुकूल-व्यापारादिरूपे धात्वर्थे संयोगादेः साक्षादप्रकारतया तदाश्रयस्य ग्रामादेः कर्मत्वानुपपत्त्या नीवहादेर्द्विकर्मकत्वव्याघातात्।

रित्युक्तेः सन्दर्भविरोधः स्पष्ट एव आधेयतासंबन्धे तद्विशिष्टे तदाधेयत्वस्याप्याधेयतासंबन्धेन तदन्वयवदेव ऽनुभवविरुद्धतयाऽनन्वयेपीत्यनन्वयपक्षः। कथंचिदुपादेयः। संयोगनिष्ठायां हुधातुशक्यतानिरूपितावच्छेदकतायामाश्रयावच्छिन्नत्वसत्वेपि व्यापारात्मकफलनिष्ठायामवच्छेदकतायामाश्रयावच्छिन्नत्वविरहेण व्यापाररूपफलाश्रयत्वेन घृतादेः कर्मत्वमुपपन्नमित्याह। घृतादेश्चेति। क्रियारूपेति। व्यापाररूपेत्यर्थः।

ननु संयोगस्य साक्षाद्धात्वर्थतावच्छेदकत्वात्तदाश्रयस्याग्नेः कर्मत्वविरहादाश्रयानवच्छिन्नत्वविशेषणं व्यर्थमित्याशङ्का निराचष्टे। यस्त्वित्यादिना धातुवृत्तिग्रहविशेष्यांशे इति। अग्निसंयोगानुकूलव्यापारानुकूलव्यापारोहुधातुवाच्यमित्याकारकवृत्तिग्रहमुख्यविशेष्ये इत्यर्थः। तथा च तत्तद्धातुप्रयोजकतात्पर्यज्ञानसहकारितत्तद्धातुवृत्तिग्रहमुख्यविशेष्ये साक्षात्प्रकारीभूतफलाश्रयत्वं तत्तद्धातुकर्मत्वम्। यदा गमधातुः सयोगावच्छिन्नव्यापारतात्पर्येण प्रयुज्यते तदा न पूर्वदेशे, यदा विभागावच्छिन्नतात्पर्येण प्रयुज्यते तदा नोत्तरदेशे तत्कर्मत्वव्यवहारः। सामान्यतस्तत्तद्धातुकर्मत्वं शक्तिलक्षणारूपवृत्तिग्रहमुख्यविशेष्यप्रकारीभूतसंयोगविभागादिफलमादाय पूर्वोत्तरदेशयोरपीष्यत एवेति। क्रियायामेवेति। अग्निसंयोगानुकूलव्यापारे एवेत्यर्थः। संयोगावच्छिन्नक्रियेति। संयोगानुकूलव्यापारेत्यर्थः। तदाश्रयीभूतेति। संयोगाश्रयीभूतेत्यर्थः। द्विकर्मकत्वव्याघातादिति। द्विकर्मकत्व न स्यादितिभावः। इदमुपलक्षणम्। भूमिं पततीति प्रयोगापत्तिरपि बोध्या। भूम्यादेर्वृत्तिग्रहमुख्यविशेष्यप्रकारीभूतसंयोगवत्वात्। न चाधिकरणानवच्छिन्नत्वमपि विशेषणीयमिति वाच्यम्। वह्न्यादेः कर्मत्वस्य तावतैव वारणसंभवे साक्षादित्यस्य वैयर्थ्यापत्तेः। गौणकमत्वमेवात। तथा चाख्यातेन मुख्यकर्मत्वस्यैवाभिधानेन ग्रामे तदभावेपि न क्षतिरिति भावः। अथेति। अत्रेति। अजां ग्राम नयतीत्यत्र अतएव। साक्षाद्धात्वर्थतावच्छेदकफलाश्रयत्वाभादेव। तादृशकर्मत्वम्। गौणकर्मत्वम्। गौणकर्मत्वानभिधाने प्रमाणमाह। प्रधानेति। द्विकर्मणां धातूनां प्रधानकर्मणि आख्येये। लादीनाहुः। लादयः प्रधानकर्मबोधका इति भावः ग्रामादेरपि गौणकर्मत्वात्कर्मणि द्वितीयेत्यनेन द्वितीया बोध्या।

अथात्र ग्रामादेः प्रधानकर्मत्वं नास्त्येवाऽपि तु गौण कर्मत्वमेव। अत एव तादृशकर्मत्वमाख्यातेन नाभिधीयते प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्यनुशासनादिति। अजां ग्रामो नीयते इत्यादिको न प्रयोग इति चेत्तर्हि तत्र ग्रामादेरिवात्रापि धात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन गौणकर्मत्वापत्त्या वन्हिं घृतं जुहोतीति प्रयोगापत्तिर्दुर्वारैवेति। अस्मन्मते चाश्रयानवच्छिन्नसंयोगविषयताशालिधातुजन्योपस्थितिघटितसामग्र्या एव संयोगे द्वितीयार्थान्वयबोधप्रयोजकतया नैतादृशप्रयोगापत्तिः।

यत्तु अधःसंयोगावच्छिन्नस्पन्दो न पतत्यर्थः। अपि तु गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्न एव। अत एव फलावच्छिन्नव्यापाराबोधकत्वान्न सकर्मकत्वमिति।

तन्न। फलस्य धात्वर्थाऽघटकत्वे स्पन्दे एव सप्तम्यर्थान्वयस्योपगन्तव्यतया पर्णादिनिष्ठस्य भूतलावृत्तितया भूतले पततीति प्रयोगानुपपत्तिः, पर्णादिगतस्पन्दस्य परंपरया भूतलादिवृत्तित्वमितिचेत्तर्हि वृक्षात्पततीतिवत् वृक्षे पततीत्यपि स्यात्। अस्मन्मते चाऽन्यत्र व्यापारे सप्तम्यर्थान्वयेऽपि अत्र व्युत्पत्तिवैचित्र्यादधःसंयोगरूपधात्वर्थतावच्छेदक एव तदन्वयबोध इत्यदोषः।

अन्ये तु भूम्यादेः कर्मत्वविवक्षायां भूमिं पततीतिप्रयोग इष्ट एव। अत एव द्वितीयाश्रितेत्यादिसूत्रेण नरकं पतित इत्यादिस्थले द्वितीयासमासविधानमुपपद्यते। धात्वर्थतावच्छेदकतावच्छेदकफले द्वितीयार्थान्वये एवाश्रयानवच्छिन्नफलोपस्थितेरपेक्षा अग्निं जुहोतीति वारणाय स्वीक्रियते इति वदन्ति।

---

अत्रापि। वन्हौ घृतं जुहोतीत्यत्रापि। स्वमतेन समाधत्ते। अस्मन्मतेइति। प्रयोजकतयेति। तथा च द्वितीयार्थाधेयत्वप्रकारकबोधं प्रति धातुजन्याश्रयानवच्छिन्नसंयोगविषयताशाल्युपस्थितेः प्रयोजकतयेत्यर्थः। नैतादृशप्रयोगापत्तिरिति। न वन्हिं घृतं जुहोतीति प्रयोगापत्तिरित्यर्थः। जातिविशेषेति। पतनत्वेत्यर्थः। तस्य स्पन्दस्य। परंपरया। स्वाश्रयप्रतियोगिकसंयोगसंबन्धेन। इत्यपि स्यादिति। स्वाश्रयप्रतियोगिकविभागवत्त्वरूपपरंपरासंबन्धेन पर्णगतस्य स्पन्दस्य वृक्षेपि सत्वादिति भावः। तस्मादधः संयोगावच्छिन्नस्पन्द एव पतत्यर्थ इति ध्येयम्। अन्यत्र। गृहे पचतीत्यत्र। अत्र। भूतले-

तदपि न शोभनम्। तथा सति भूम्यादिपदोत्तरं कदाचित्सप्तमी कदाचिद् द्वितीयेत्यत्र नियामकाभावप्रसंगात्। व्यापारांशे आधेयत्वविवक्षायां सप्तमी, फलांशे आधेयत्वविवक्षायां द्वितीयेत्यस्योक्तयुक्त्या फलांशे सप्तम्यर्थाधेयत्वान्वयस्यावश्यं स्वीकरणीयतया वक्तुमशक्यत्वादिति।

ब्राह्मणाय धनं ददातीत्यादौ स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छा धात्वर्थः। तादृशस्वत्वरूपधात्वर्थतावच्छेदकफले एव द्वितीयार्थान्वयः। उपेक्षायामतिप्रसंगवारणाय परस्वत्वांनवेशः।

---

पततीत्यत्र। व्युत्पत्तिवैचित्र्यादिति। सप्तम्यर्थाधेयत्वप्रकारकफलविशेष्यकबोधं प्रति पतधातुसमभिव्याहारज्ञानस्य कारणत्वकल्पनेनेत्यर्थः। फलेएवेति। एवकारेण स्पन्दव्यावृत्तिः। अधः संयोगरूपफलाश्रयत्वविरहाद् वृक्षे पततीति न प्रयोगः। इत्यस्येति। अस्य वक्तुमशक्यत्वादित्यनेनान्वयः। उक्तयुक्त्येति। फलस्य धात्वर्थाऽघटकत्वे स्पन्दे एव सप्तम्यर्थान्वयस्योपगन्तव्यतया पर्णादिनिष्ठस्य तस्य भूतलावृत्तितया भूतले पततीतिप्रयोगानुपपत्त्येति भावः। अथाश्रयानवच्छिन्नफलाश्रयस्यैव कर्मत्वे नरकं पतित इत्यस्यानुपपत्तिरिति चेन्न। अधः संयोगावच्छिन्नव्यापारार्थकपतधातुसमभिव्याहारे नरकपदाद् द्वितीया नेष्यते—भोगानुकूलपातित्यार्थकपतधातुसमभिव्याहारे नरकपदाद् द्वितीया। तत्र द्वितीयार्थो विषयत्वम्। तस्य भोगेऽन्वयः। भोगश्च साक्षात्कारः। नरकपदं च सुखासंभिन्नदुःखवाचकम्। नरकं पतित इत्यत्र दुःखविशेषविषयकभोगानुकूलपातित्यवानिति बोधः। एतादृशार्थे एव द्वितीयाश्रितेत्यादिसूत्रेण समासविधानम्।

तादृशस्वत्वरूपेति। स्वस्वत्वध्वंसविशिष्टपरस्वत्वरूपेत्यर्थः। द्वितीयार्थान्वय इति। द्वितीयार्थ आधेयत्वम्। अयंभावः। ब्राह्मणाय धनं ददातीत्यत्र "कर्मणा यमभिप्रैति स सम्प्रदानमितिसूत्रेण ब्राह्मणस्य संप्रदानसंज्ञा—कर्मणा —'क्रियाजन्यफलेन' —स्वत्वादिना यमभिसंबद्धुमिच्छति स सम्प्रदानमिति सूत्रार्थः। तथा च क्रियाजन्यफलप्रकारककर्तृसमवेतेच्छाविशेष्यत्वं संप्रदानत्वम्। प्रकारता च निरूपकत्वसंबन्धावच्छिन्ना ग्राह्या। तेनकर्मणि न प्रसंगः। धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमिति यावत्। निरूपितत्वं चतुर्थ्यर्थः। तस्य द्वितीयस्वत्वेऽन्वयः आश्रयत्वमाख्यातार्थः। तथा च धनवृत्तिस्वस्वत्वध्वंसविशिष्टपर "ब्राह्मण" निरूपितस्वत्वानुकूलेच्छाश्रय इति बोधः। यत्र

दानं च न संप्रदानस्वत्वजनकम्, अपितु तत्स्वीकार एवेति मते तु स्वस्वत्वध्वंसानुकूलपरस्वत्वप्रकारिकेच्छैव ददात्यर्थः। तत्र स्वस्वत्वध्वंस रूपफलाश्रयत्वाद्धनस्य कर्मता।

धनं प्रतिगृह्णातीत्यादौ स्वस्वत्वजनकेच्छारूपस्वीकारविशेषो धातोरर्थः। स्वस्वत्वरूपफले च द्वितीयार्थाधेयत्वान्वयः। तण्डुलं पचतीत्यादौ रूपादिपरावृत्तिजनकतेजःसंयोगो धातोरर्थः। रूपपरावृत्तिफले च तण्डुलादिवृत्तित्वान्वयः। ओदनं पचतीत्यादौ ओदनादिपदस्य तन्निष्पादकतण्डुले लक्षणा। अवयविनि पाकानभ्युपगमे च तण्डुलादिपदस्य तदारम्भकपरमाणुषु लक्षणा। ओदनं भुङ्क्ते इत्यादौ गलाधोनयनं धात्वर्थः। तच्च गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः। तादृशक्रियारूपफले एव ओदनवृत्तित्वान्वयः। उक्तरीत्या गलाधोदेशस्य न कर्मत्वम् एवमन्यसकर्मकधातूनामप्यर्थाः स्वयमूह्याः।

---

स्वधनस्य परसाधारणीकरणं तत्र परस्वत्वानुकूलेच्छायाः सत्त्वाद्दानव्यवहारापत्तिवारणाय स्वस्वत्वध्वंसविशिष्टेति। तथा च स्वस्वत्वस्य विद्यमानत्वान्नापत्तिः। स्वत्वं यथेष्टविनियोगार्हत्वम्। उपेक्षायामिति। उपेक्षा च ममेदं माभूदिति स्वस्वत्वनिवृत्त्यनुकूलेच्छैव, तत्र दानत्वप्रसंगवारणाय परस्वत्वानुकूलेति। यदि च साधारणधनेऽसाधारण्यविरहप्रयुक्तोपेक्षायां सत्यामपि पुरुषान्तरस्य सर्वथैव तस्येदमस्तु न ममेतीच्छातः पुरुषान्तरानुमत्यपेक्षां बिना यथेष्टविनियोगप्रयोजकस्य स्वस्वत्वान्तरस्योत्पत्तिः पूर्वस्वत्वविनाशश्च प्रमाणिको यदि तदा दानव्यवहारवारणाय परेति विशेषणम्। नचाऽनन्यलभ्यस्यैव शब्दार्थतया परस्य "संप्रदानस्य" चतुर्थीप्रकृत्यैव लाभात्तस्य ददात्यर्थत्वं नोचितमिति वाच्यम्। धनं ददातीत्यत्र संप्रदानस्य प्रतीतिविरहेण धातुनैव तत्प्रतिपादनात्। वस्तुतः परस्य नास्त्येव धात्वर्थघटकता। अत एव ब्राह्मणाय धनं ददातीत्यत्र न पौनरुक्त्यम्। धनं ददातीत्यत्र लक्षणयैव तद्बोधः। न च तत्र तद्बोध एव नास्तीति वाच्यम्। परस्य सामान्यतोऽप्रतीतौ कस्मै इति तद्विशेषाकाङ्क्षाया अनुपपत्तेः। इच्छायाः स्वस्वानुकूलत्वबोधनेन स्वीकारमन्तरेणापि दातुरिच्छातःप्रदत्तधने संप्रदानस्वत्वमुत्पद्यत एवेति सिद्धम्। न च दानसमकालं संप्रदानत्वेनाभिमतस्य यत्र ममेदं मा भवतु, अस्येदं भवतु इतीच्छाकाले चैत्राय गां ददातीति प्रयोगापत्तेः। गोपदार्थस्य गोद्वयस्योभयत्र "स्वत्वध्वंसे स्वत्वे चान्वययोग्यत्वादिति चेन्न। स्वत्वप्रकारकत्ववि-

गां दोग्धि पय इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तर-द्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति। कारकाधिकारीयेणाकथितंचेतिसूत्रेणापादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाभिधानात्। गवां पयो दोग्धीत्यादौ धातुप्रतिपाद्यान्वयिगवादिसंबन्धो न विवक्षितः, अपि तु क्षीराद्यन्वयी सः इति कर्मत्वाविवक्षया द्वितीयानवकाशः, किन्तु शैषिकी षष्ठ्येवेति। अत्र धातुप्रतिपाद्यत्वं तदर्थतावच्छेदककोटिप्रविष्टसाधारणम्। गां दोग्धीत्यादौ धात्वर्थतावच्छेदककोटिप्रविष्टे एव द्वितीयार्थान्वयात्। तथा हि क्षरणानुकूलव्यापारो दुहेरर्थः द्वितीयार्थश्च जनकत्वसंबन्धेन क्षरणान्वयी विभागः। विभागे चाऽऽधेयतासंबन्धेन प्रकृत्यर्थगवादेरन्वयः। एवं च धात्वर्थतावच्छेदकक्षरणरूपप्रधानकर्मक्षीरान्वित द्वितीयार्थवृत्त्यन्वय इति गोनिष्ठविभागानुकूलपयोनिष्ठक्षरणानुकूलव्यापारकर्त्ता मैत्र इतिः गां पयो दोग्धीतिवाक्याधीनो बोधः।

---

शिष्टेच्छायां स्वत्वध्वंसानुकूलत्वेन शाब्दबोधे भाने सामानाधिकरण्यसंबन्धेन स्वत्वेपि स्वत्वध्वंसस्य भानोपगमात्। प्रकृते गोनिष्ठस्वत्वध्वंससमानाधिकरणं यत्स्वत्वं तत्प्रकारकेच्छाविरहेणाऽदोषात्। प्रकृते स्वत्वस्य हिरण्यनिष्ठत्वात्। परस्वत्वानुकूलेच्छा इत्यत्र परशब्दः कर्तृभिन्नसंप्रदानपरः, न तु कर्तृभिन्नपर इति ध्येयम्।

स्वीकारविशेष इति। विशेषपदोपादानाद्दानप्रयोज्यस्वत्वजनकीभूतेच्छारूपप्रतिग्रहलाभाद्बलक्रयादितो धनस्वीकारस्थले प्रतिग्रहव्यवहारस्य नापत्तिः। बोधस्तु धनवृत्तिस्वत्वजनकेच्छावानित्याकारकः। रूपादिपरावृत्तीति। पूर्वरूपादित्यर्थः। आदिना रसगन्धस्पर्शपरिग्रहः। परावृत्तिर्ध्वंसः। तण्डुलं पचतीत्यत्र तण्डुलवृत्तिपूर्वरूपध्वंसजनकतेजःसंयोगानुकूलकृतिमानिति बोधः। अग्निः पचति तण्डुलमित्यादौ तण्डुलव्यावृत्तं यत्तादृशतेजःसंयोगाश्रयत्वं तद्वान्वह्निरिति बोधः। तादृशेति। गलबिलाधःसंयोगावच्छिन्नेत्यर्थः। फलेएवेति। एवकारेण संयोगव्यावृत्तिः। नक्तउक्त्या। आश्रयानवच्छिन्नधात्वर्थतावच्छेदकीभूतसंयोगाश्रयस्यैव कर्मत्वव्यवस्थापनेन।

क्षरणानुकूलव्यापारो दुहधात्वर्थः। क्षरणत्वं च द्रवत्वजन्यतावच्छेदक-(पयोनिष्ठ) क्रियावृत्तिर्जातिः, सा च स्पन्दनत्वमिति यावत्। तादृशक्रियाश्रयत्वेन पयसो मुख्यकर्मत्वम्। गवादिपदोत्तरद्वितीया अन्यदेव कर्मत्वं बोधयतीति।

न च विभागोऽपादानत्वमेवेति तद्विवक्षायां द्वितीयानवकाशेति वाच्यम्। धातुवृत्तिग्रहविशेष्यान्वयिनो विभागस्यैवाऽपादानत्वरूपत्वात्। वृक्षात्पर्णं पततीत्यादौ स्पन्दरूपविशेष्यांशे एव पञ्चम्यर्थविभागान्वयात्।

वस्तुतो विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुह्यर्थः। गोपदोत्तरद्वितीयार्थश्च विभागान्वयिनी वृत्तिरेव। न चैवं धात्वर्थतावच्छेदकफलशालित्वरूपं कर्मत्वमेवात्रापि प्रतीयते इति नाऽकथितं चेत्यस्य विषय इति वाच्यम्। धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वरूपत्वात्।

---

अन्यदेवेत्येवकारेण क्रियाजन्यफलशालित्वरूपमुख्यकर्मत्वस्य व्यावृत्तिः। तदेवाह। अपादानत्वादिभिन्नेति। अपादानत्वादिभिन्नं यद्दुहधातुप्रतिपाद्यक्षरणान्वयिविभागादिरूपधर्मान्तरं तदवच्छिन्नस्यापीत्यर्थः। तादृशविभागाश्रयस्य गोः कर्मत्वमिति भावः। धातुप्रतिपाद्यान्वयि। धातुप्रतिपाद्यक्षरणान्वयि। तेन "विभागेन" सह गवादिसंबन्धो न विवक्षित किन्तु सः धातुप्रतिपाद्यान्वयी विभागरूपो धर्मः क्षीराद्यन्वयी इति। अतः क्षीरस्यैव कर्मत्वम्, न तु गोरिति भावः। धातुप्रतिपाद्यत्वं क्षरणे संपादयति। तदर्थतावच्छेदकेति। धात्वर्थतावच्छेदकेत्यर्थः। धात्वर्थतावच्छेदककोटिप्रविष्टे एवेति। क्षरणे एवेत्यर्थः। एवकारेण क्षीरादिव्यावृत्तिः। द्वितीयार्थोऽन्वयादिति। द्वितीयार्थविभागान्वयादित्यर्थः। क्षरणानुकूलेति। क्षरणत्वं जातिरित्युक्तम्। यद्यपि क्षरणमन्तःप्रदेशविभागानुकूलो व्यापारविशेषो द्रवद्रव्यनिष्ठः प्रतीयते। तथापि अत्र क्षरणस्य तादृशव्यापारत्वेन न धात्वर्थघटकता किन्तु स्पन्दत्वव्याप्यजातिवैशेषेणैव लाघवादिति ध्येयम्। अस्मिन्पक्षे गोर्न कर्मत्वम्। धात्वर्थतावच्छेदकीभूतक्षरणानाश्रयत्वात्। अपितु तदन्वितविभागान्वयित्वरूपं गौणकर्मत्वमकथितंचेति सूत्रप्रतिपाद्यम्, तच्च धात्वर्थतावच्छेदकतावच्छेदकफलशालित्वरूपं बोध्यम्। ननु गामित्यत्र द्वितीयाया विभागार्थकत्वे पञ्चमी स्यादित्याशङ्कते। नचेति। विभागस्यैवेति। एवकारेण धात्वर्थतावच्छेदकीभूतफलान्वयिनो विभागस्य व्यावृत्तिः। प्रकृते च क्षरणफले एवं द्वितीयार्थविभागोऽन्वेतीति न पञ्चमी प्रसक्तिरिति भावः। स्पन्दरूपविशेष्यांशे एवेति। एवकारेणाधोदेशसंयोगव्यावृत्तिः। पञ्चम्यर्थविभागान्वयादिति। अयंभावः। वृक्षात्पर्णं पततीत्यत्र ध्रुवमपायेऽपादानमितिसूत्रेणाऽपादानसंज्ञा-

वृक्षस्य। ययोर्विभागस्तयोर्मध्ये क्रियारहितमपादनं स्यादिति सूत्रार्थः। अपादाने पञ्चमीति पञ्चमी। अत्र भेदप्रतियोगितावच्छेदत्वं — विभागश्च-द्वयं पञ्चम्यर्थः। क्रिया केवलं धात्वर्थः। आधेयतासंबन्धेन वृक्षस्य भेदे विभागे चान्वयः। आश्रयतया प्रतियोगितावच्छेदकत्वस्य, जनकतया विभागस्य क्रियायामन्वयः। वृक्षवृत्तिविभागानुकूलवृक्षवृत्तिभेदप्रतियोगितावच्छेदकक्रियाश्रयः पर्णमिति बोधः। अथवा विभागो जनकत्वं च पञ्चम्यर्थः, प्रकृत्यर्थस्यावधिमत्त्वसंबन्धेन विभागे, तस्य निरूपकत्वसंबन्धेन जनकत्वे, तस्य चाश्रयतया क्रियायामन्वयः। वृक्षावधिकविभागनिरूपितजनकतावाक्रयाश्रयः पर्णमितिबोध इति।

अन्तः प्रदेशावच्छिन्नविभागानुकूलव्यापार एव क्षरणम्। तथैव क्षरणस्य प्रतीतेः, तथा च विभागस्यापादानत्वेपि तस्य धातुत एव लाभान्न विभक्त्यर्थता, एवं चात्रापि द्वितीयार्थो वृत्तित्वमेवेत्याह। वस्तुतस्तु इति। विभागावच्छिन्नेति। विभागानुकूलेत्यर्थः। एवं। विभागस्य धात्वर्थघटकत्वे। धात्वर्थतावच्छेदकत्वस्येति। धात्वर्थतावच्छेदकफलशालित्वमित्यत्रेत्यादिः। साक्षाद्विशेषणत्वरूपत्वादिति। तच्च विभागानुकूलव्यापारस्यैवेति भावः। क्षरणानुकूलव्यापारमात्रमिति। मात्रपदेन विभागानुकूलत्वव्यवच्छेदः। अत्रेदं बोध्यम्। यदि लाघवात्क्षरणत्वं जातिस्तेन रूपेण क्षरणानुकूलव्यापारे दुहधातोः शक्तिस्तदा विभागानुकूलव्यापारावच्छिन्ने लक्षणैव। यदि च तन्न जातिस्तदा विभागानुकूलव्यापारावच्छिन्ने शक्तिः, स्पन्दत्वेन रूपेण क्षरणानुकूलव्यापारे लक्षणैव। अस्मिन्पक्षे च विभागबोधाय पञ्चम्यपेक्षा पञ्चम्यर्थविभागान्वये तु नात्र पक्षे मुख्यविशेष्यतया धातुजन्योपस्थितेरपेक्षेति ध्येयम्। एतेन विभागस्य विभक्त्यर्थत्वविवक्षणेन। ना नियम इति। यत्र विभागो धात्वर्थघटकस्तत्र द्वितीया, यत्र स विभक्त्यर्थस्तत्र पञ्चमीति नियम इत्यर्थः। एकरूपेण दुहधातोरर्थमाह। अथवेति। धात्वर्थतावच्छेदकघटक एवेति। विभागावच्छिन्नक्षरणानुकूलव्यापार एव धात्वर्थः। एवकारेण क्षरणानुकूलव्यापारस्य व्यावृत्तिः। वृक्षाद्विभजते इत्यत्रेवेति। वृक्षाद्विभजते इत्यत्रापादानताया अवधितारूपत्वात्। वृक्षावधिकत्वविशिष्टविभागाश्रयः पर्णमिति बोधः। पञ्चमीति। तथा च गोऽवधिकत्वविशिष्टविभागानुकूलक्षरणानुकूलव्यापारवानिति बोधः। द्वितीयेति। तथा च तदा गोवृत्तिविभागेत्यादिबोधः। ननु पयोनिष्ठक्षरणजन्यविभागरूपफलस्य गवीव पयस्यपि सत्वात्पयोनिष्ठक्षरणस्य गोनिष्ठविभागजनकत्वमिव पयोनिष्ठविभागजनकत्वाच्च पयः पयो दोग्धीति

यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थतया विवक्षितम्, क्षरणान्वयिविभागश्च विभक्त्यर्थतया तत्राऽपादानत्वबोधिका पञ्चमी। एतेन कदाचिद् गां दोग्धि पयः, कदाचिच्च गोभ्यो दोग्धि पय इत्यत्र नानियमः। अथवा गोभ्यो दोग्धि पय इत्यत्रापि विभागो धात्वर्थतावच्छेदककोटिप्रविष्ट एव, वृक्षाद्विभजते इत्यत्रेवावधित्वरूपाऽपादानत्वविवक्षायां पञ्चमी आश्रयत्वविवक्षायां च द्वितीया। अवधित्वं चाश्रयादन्यदेव संबन्धविशेषः। अत्र क्षरणान्वयिनः परसमवेतत्वस्य द्वितीयार्थत्वात्पयोनिष्ठक्षरणस्य पयोनिष्ठविभागजनकत्वेपि न पयः पयो दोग्धीति प्रयोगः। परत्वं च विभागान्वयितावच्छेदकावच्छिन्नापेक्षया बोध्यम्।

दुह्यते गौः क्षीरमित्यादौ क्षरणजन्यविभागाश्रयत्वं गवादिनिष्ठमप्रधानकर्मत्वमाख्यातार्थः। अप्रधाने दुहादीनामित्यनुशासनात्। क्षीरवृत्तित्वस्य धात्वर्थक्षरणे एवान्वयः। धात्वर्थक्षरणे च धात्वर्थव्यापारान्वयः। तथा च विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्याकारको बोधः अथवा विभागक्षरणव्यापारेषु विशकलितेषु धातोःशक्तित्रयं विशिष्टलाभोऽन्वयबलात्। कर्माख्यातस्थले चाकाङ्क्षावैचित्र्येण तेषां विशेष्यविशेषणभाववैपरीत्यात्। व्यापारजन्यक्षरणजन्यविभागपर्यन्तस्य धातुत एव लाभः। आश्रयत्वमेवाऽऽख्यातार्थः। एवं च क्षरणविभागयो र्न द्विधा भानम्। गौणकर्मसमभिव्याहृते दुह्यन्ते क्षीराणीत्यादौ आत्मनेपदेन केवलेन धातुसहितेन वा विभागावच्छिन्नक्षरणाश्रयत्वरूपप्रधानकर्मत्वस्य बोधनेपि एकदा उभयविधकर्मत्वबोधनस्याव्युत्पन्नतया दुह्यन्ते क्षीराणि गौरित्यादयो न प्रयोगाः।

---

प्रयोगापत्तिमुद्धरति। अत्रेति। क्षरणान्वयिनः। विभागस्य। द्वितीयार्थत्वादिति। तथा च परसमवेतविभागस्य द्वितीयार्थत्वादित्यर्थः। परत्वंचेति। विभागान्वयितावच्छेदकीभूतपयस्त्वावच्छिन्नापेक्षयेत्यर्थः। तथा च पयोनिष्ठक्षरणजन्यपयोभिन्नसमवेतविभागस्य गव्येव सत्वान्नोक्तापत्तिरिति भावः। तथा च दुह्यते गौः क्षीरमित्यत्र चैत्रवृत्तिव्यापारजन्यं यत्क्षीरवृत्तिक्षरणं तज्जन्यविभागाश्रयो गौरिति बोधः। उभयविधकर्मत्वस्य। गौणप्रधानकर्मत्वस्य। कर्तृसमवेतव्यापारजन्यक्षरणाश्रयत्वस्य चेत्यर्थः। अव्युत्पन्नतयेति। सकृदुच्चरित इति न्यायादिति भावः।

पौरवं गां याचते विप्रः इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः। प्रधानकर्मगवान्वितद्वितीयार्थो विषयत्वं धात्वर्थतावच्छेदकदानेऽन्वेति। सविषयकज्ञानादिरूपविषयोपहितइच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम्। अत एव घटो जिज्ञास्यते इत्यादौ घटादेः सन्नन्तकर्मता। अथैवं यद्वस्तुविषयकं दानमप्रसिद्धं तद्वस्तुरूपकर्मसमभिव्याहृतधातुघटितवचसः का गतिरिति चेद् या गतिर्गगनं दिदृक्षते इत्यादिकस्य भ्रान्तपुरुषीयगगनादिप्रकारकदर्शनेच्छाबोधकवाक्यस्य, गगनविषयकत्वप्रकारकदर्शनेच्छाबोधस्तत्रेति चेदिहापि गोविषयिताप्रकारतानिरूपितस्वत्वेच्छानिष्ठविषयताशालीबोधस्तद्वाक्यस्य विशेषादर्शिविषयता च समा। विवेचनीयंचेदमग्रे।

---

याचधात्वर्थमाह। स्वोद्देश्यकदानेच्छेति। पौरवो मदुद्देश्यकं दानं करोतु इतीच्छेत्यर्थः। परस्वत्वप्रकारकत्वविशिष्टस्वस्वत्वध्वंसानुकूलेच्छादानपदार्थः। स्वनिरूपितस्वत्वप्रकारकत्वविशिष्टा या परस्वत्वध्वंसानुकूलेच्छा तद्विषयिणीच्छेति यावत्। स्वशब्दो विप्रादिपरः। परश्च दातृत्वेन तदिष्टः। इच्छाविषयविषयत्वमेवेति। एवकारेणेच्छाविषयत्वस्य व्यवच्छेदः। प्रकृते च दानेच्छाविषयो दानं "तच्चेच्छारूपं" तद्विषयत्वमेव प्रधानकर्मत्वमिति भावः। अतएव। इच्छाविषयविषयस्य प्रधानकर्मत्वादेव। यत्र चैत्रस्य "चैत्रस्यापीदं भवतु इतीच्छा मैत्रस्य जायतामि"तीच्छा तत्र चैत्रो मैत्रं याचते इति प्रयोगापत्तिवारणाय। परस्वत्वप्रकारकत्वेति। मैत्रस्येदं न ममेतीच्छाजायतामित्याकारिका चैत्रस्वनिष्ठदानेस्येच्छा तत्र चैत्र आत्मानं याचते इति प्रयोगवारणाय स्वोद्देश्यकेति। स्वनिष्ठदानस्य स्वोद्देश्यकत्वाभावान्नापत्तिः। दानविशिष्टेच्छायाधात्वर्थतालाभाय तत्। वै०स्वविषयकत्व-स्वसामानाधिकरण्योभयसं० अयं स्वार्थं न याचते किन्तु परार्थमिति व्यवहारात्परोद्देश्यकदानेच्छाया अपि याचनत्वनिर्वाहः। यद्गवादिविषयकंदानमप्रसिद्धं तद्गवादिविषयकदानविषयिणीच्छा न याचधातुना बोधयितुं शक्यते इत्याशंकते अथेति। एवं। इच्छाविषयविषयस्य प्रधानकर्मत्वे। दानमप्रसिद्धमिति। इच्छाविषयाऽप्रसिद्धमित्यर्थः। तद्वस्तुकर्मसमभिव्याहृतेति। तद्वस्तुकर्मवाचकपदसमभिव्याहृतेत्यर्थः। वचसः। गां याचते इति वचसः। दर्शनेच्छाबोध इति। दर्शनविशेष्यकेच्छाबोध इत्यर्थ गगनविषयकदर्शनस्याऽप्रसिद्ध्या गगनविषयकदर्शनेच्छाया असंभवेपि गगनविषयकं दर्शनं भवतु इति गगनविषयकत्वप्रकारकदर्शनविशेष्य-

पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः। तस्या दानेऽन्वयः। पौरवस्य तादृशदानाश्रयत्वमेवाऽप्रधानकर्मत्वम्। न चैवमिच्छाविशेषरूपदानाश्रयत्वं कर्तृत्वमेवेति वाच्यम्। धातुजन्यप्रतिपत्तिविशेष्यीभूतदानाश्रयत्वस्यैव तत्कर्तृत्वरूपत्वात्। अत्र च दानस्य तादृशप्रतिपत्तौ इच्छारूपधात्वर्थे विशेषणत्वात्। चैत्रेण पौरवो गां याच्यते इत्यादावप्युक्तक्रमेण चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रय इत्यन्वयबोधः। यद्यपि निरुक्तयाञ्चामिद्वैवोत दुह्याचरुधिप्रच्छिभिक्षिचिञामित्यत्रार्थपरभिक्ष्युपादानेनैव चरितार्थतया याचेरुपादानमनर्थकम्।

तथापि याचमानः शिवं सुरानित्यादौ याचतेर्न निरुक्तभिक्षार्थकतेति तदुपादानम्। तत्र हि व्यापारजन्यत्वप्रकारकेच्छा धात्वर्थः। इच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयिताया अन्वयः। व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयार्थस्यान्वयः। तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारककल्याणेच्छाश्रय इत्यन्वयबोधः। गां व्रजं रुणद्धीत्यादौ देशान्तरसञ्चारविरोधिव्यापारो धात्वर्थः। सञ्चारविरोधित्वं सञ्चारानुत्पादप्रयोजकत्वम्। अनुत्पादे प्रधानकर्मगोवृत्तित्वान्वयः। देशविशेषणभेदे व्रजमिति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः। रुध्यते गां व्रजइत्यादौ अन्वयबोधः स्वयमूहनीयः।

---

केच्छायाः सम्भवात्, यथा गगनं दिदृक्षते इत्यादौ गगनविषयकत्वप्रकारकदर्शनविशेष्यकेच्छावानिति बोधः। तथा तां गां याचते इत्यत्रापि तद्गोविषयकत्वप्रकारकस्वोद्देश्यकदानेच्छाश्रयो विप्र इत्यन्वयबोधः। स्वत्वेच्छा–दानम्। यथा भ्रान्तानां गगनं दिदृक्षते इति प्रयोगस्तथा प्रकृतेपीत्याह। तद्वाक्यस्येति। अप्रधानकर्मत्वमिति। न च साक्षाद्धात्वर्थतावच्छेदकीभूतदानाश्रयत्वान्मुख्यकर्मत्वमेव युक्तमिति वाच्यम्। सविषयकधात्वर्थस्य विषयत्वस्यैव मुख्यकर्मतारूपत्वात्। अत्र च। पौरवं गां याचते विप्र इत्यादौ। दानस्य विशेषणत्वादित्यनेनान्वयः। तादृशप्रतिपत्तौ। धातुजन्यबोधे। पौरववृत्तिगोविषयकदानेच्छाश्रयो विप्र इति बोधे। दानाश्रय इति। पौरव इति शेषः। याचेरुपादानमनर्थकमिति। अत्र याचेरर्थपरत्वमावश्यकम्, अन्यथा नृपमर्थं प्रार्थयते इति न स्यात्। एवं च भिक्षेरुपादानमनर्थकमित्येव वक्तुमुचितम्। नापि विनिगमनाविरहः। प्रथमोक्तयाचेर्ग्रहकाले भिक्षेरनुपस्थितत्वेन वैयर्थ्य-

गुरुं धर्मं पृच्छतीत्यादौ जिज्ञासाबोधकव्यापारो धात्वर्थः। बोधे गुरुवृत्तित्वस्य--जिज्ञासायां धर्मविषयकत्वस्याऽन्वयः। शिष्यं धर्मं ब्रूते इत्यत्र ज्ञानानुकूलशब्दप्रयोगो धात्वर्थः। ज्ञाने धर्मविषयकत्वस्य शिष्यवृत्तित्वस्य चान्वय इति। तन्न चारुतरम्। तथासति यत्र जिज्ञासा-विषयकचैत्रज्ञानेच्छया प्रश्नस्तादृशशब्दाच्च सामग्रीबलेन मैत्रस्यापि पृच्छकजिज्ञासाज्ञानं तत्र मैत्रं पृच्छतीति प्रयोगस्य, एवं यत्र चैत्रज्ञाने-च्छया ब्रूते दैवशाच्च मैत्रस्यापिज्ञानं तत्र मैत्रं ब्रूते इति प्रयोगस्य चापत्तेः। साक्षाद्धात्वर्थविशेषणज्ञानरूपफलाश्रयतया तत्र गुर्वादीनां-प्रधानकर्मतया अप्रधाने दुहादीनामित्यनुशासनविरोधेन पृच्छ्यते गुरु धर्मम् स पृष्टस्तेन कस्त्वंभो। शिष्य उच्यते धर्ममित्यादिस्थले च लकारादिना तत्कर्मत्वाभिधानानुपपत्तेश्च। परन्तु जिज्ञासाज्ञानोद्देश्यक प्रवृत्त्यधीनशब्दः पृच्छतेरर्थः। ज्ञाने गुरुवृत्तित्वस्यान्वयः। शब्दे च धर्मविषयकत्वस्याऽन्वयः। शब्दस्य च विषयता व्यापारानुबन्धिनी। ज्ञानस्य परंपरया शब्दरूपधात्वर्थविशेषणत्वात्। तदाश्रयीभूतगुरोर्गौण कर्मता। धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता। ब्रूञश्च ज्ञानोद्देश्य-कप्रवृत्त्यधीनशब्दोऽर्थः। ज्ञाने शिष्यवृत्तित्वस्य, शब्दे च धर्मविषयकत्व-स्यान्वयः।

---

बुद्धेरसंभवात्। भिन्ने ग्रहकाले चार्थपरस्य याचेरुपस्थितत्वेन भिक्षेरानर्थक्यस्य वक्तुमशक्यत्वादिति चेन्न। सकलप्रकरणपर्यालोचनं विना न याचनार्थक सकलधातूनां भवत्यनुपादानग्रहः, तदग्रहेच नार्थपरत्वग्रहः। तदग्रहे च न वैयर्थ्यशङ्कापीति तस्यां सकलपर्यालोचनस्यापेक्षितत्वे याचेरपिवैयर्थ्यस्य शङ्कितुमशक्यत्वात्, प्रथमोपात्तस्य प्रथमं सार्थकत्वे प्रायशो जिज्ञासोदयात्त-स्यार्थक्याय याचेरुपादानमनर्थकमित्याशङ्काया अप्युचितत्वादिति। कल्याणे च्छेति। कल्याणविशेष्यकेच्छेत्यर्थः। सा च कल्याणं गुरुवृत्तिव्यापारजन्यं भवतु इत्याकारिका। देशविशेषणभेदे। देशान्तरशब्दस्य अन्यो देश इति व्युत्पत्तिलभ्ये। प्रतियोगित्वान्वय इति। तथा च व्रजवृत्तिप्रतियोगितानि-रूपकभेदाश्रयाधिकरणको यो गोवृत्तिसञ्चारोत्पत्त्यभावस्तत्प्रयोजकव्यापारानुकू-लकृतिमानितिबोधः। स्वयमूहनीय इति। चैत्रसमवेतकृतिजन्यव्यापार प्रयोज्यगोवृत्त्यभावप्रतियोगिसञ्चारोत्पत्त्यधिकरणवृत्तिभेदप्रतियोगी व्रज इति

अजां ग्रामं नयतीत्यादौ ग्रामं भारं वहतीत्यादौ चोत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापाररूपं प्रापणं धातोरर्थः। तत्र च क्रियारूपफले अजाभारादिवृत्तित्वान्वयः। संयोगादिरूपफले च ग्रामादिवृत्तित्वस्यान्वयः। तथा च ग्रामवृत्तिसंयोगजनकाजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोधः। अजां ग्रामं नीयते—उह्यते भारोग्राम चैत्रेणत्यादौ उत्तरदेशसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थः। तत्र च धात्वर्थस्य तादृशव्यापारस्य जन्यतासंबन्धेन, तस्य चाश्रयतासंबन्धेन अजाभारादिरूपप्रधानकर्मणि अन्वयः। ग्रामादिवृत्तित्वान्वयस्तु संयोगे एव। एवं च चैत्रवृत्तिकृतिजन्योयः संयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवानजादिरित्यन्वयबोधः। न च कारकविभक्त्यर्थस्य धात्वर्थे एवान्वयनियमात्प्रत्ययोपस्थाप्यसंयोगे कथं ग्रामादिवृत्तित्वान्वय इति वाच्यम्। भूतले घट इत्यादौघटादिपदार्थेप्यधिकरणसप्तम्यन्वयात्तादृशनियमाऽसिद्धेः। अस्तु वा धात्वर्थतावच्छेदकतया भासमाने संयोगे एव तदन्वयः। फलव्यापारयोः पृथक् शक्तिमते चाश्रयत्वमेवात्मनेपदार्थः। संयोगावच्छिन्नरूपधात्वर्थ एव व्यापाररूपधात्वर्थविशेष्यतयाऽऽश्रयत्वविशेषणतया चान्वेति। तदेकदेशे संयोगे एव ग्रामादिवृत्तित्वान्वयः। चैत्रीयकृतिजन्यव्यापारजन्यग्रामावृत्तिसंयोगानुकूलक्रियाश्रयोऽजादिरित्याकारको बोधः। ज्ञानानुकूलशब्दश्च द्रव्यं निरूपयतीत्यादौ धातोरर्थः। तादृशविशिष्टैकार्थस्य एकदेशे ज्ञानांशे आधेयत्वान्वयबोधे च न द्वितीयायाः साकाङ्क्षता स्वीक्रियते अपितु विषयतया अन्वयबोधे एवेति शियं द्रव्यं निरूपयतीत्यादिनं प्रयोगः। यत्तु धात्वर्थो ज्ञानमेव, तदनुकूलव्यापारश्च णिजर्थः। इति तदसत्। धातोश्चुराद्यन्तर्गततया स्वार्थे एव णिचो विधानम्। अन्यथा निरूपयतीत्यस्य ज्ञापयतीत्यादि समशीलतया शिष्यं ज्ञापयतीत्यादिवच्छिष्यं निरूपयतीति प्रयोगस्य दुर्वारत्वात्।

---

बोधः। धर्मविषयकत्वस्यान्वय इति। तथा च धर्मविषयकजिज्ञासाविषयकगुरुवृत्तिबोधानुकूलव्यापारवानितिबोधः। अन्वय इति। तथा च धर्मविषयकशिष्यवृत्तिज्ञानानुकूलशब्दप्रयोगवान् गुरुरिति बोधः। तथा सति। जिज्ञासाबोधकव्यापारस्य प्रच्छधात्वर्थत्वे सति। जिज्ञासाविषयकचैत्रज्ञानेच्छया। चैत्रो मदीयजिज्ञासाविषयकज्ञानवान् भवतु इतीच्छया। एवं। ज्ञानानुकूलशब्दप्रयोगस्य च धात्वर्थत्वे। गुर्वादीनामिति। गुरोर्जिज्ञासाबोधाश्रयतया—शिष्यस्य

अजां ग्रामं यापयति शिष्यं शास्त्रं ज्ञापयति ब्राह्मणमन्नं भोजयति यजमानं मन्त्रं पाठयति घटं जनयति नाशयति इत्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाजादिपदोत्तरद्वितीयायाः मुख्यभाक्तसाधारणं कर्तृत्वमेवार्थः। गतिबुद्धीत्यादिसूत्रेण कर्तुः कर्मसंज्ञाविधानात्। गतिज्ञानोत्पत्त्यादिनिरूपितं कर्तृत्वञ्चाश्रयत्वमेव। गलाधःसंयोगानुकूलक्रियानुकूलव्यापाररूपभोजनकण्ठताल्वाद्यभिघातरूपपाठनिरूपितं च तदनुकूलकृतिमत्त्वम्, नाशनिरूपितं च प्रतियोगित्वम्। तस्य च निरूपकतासंबन्धेन धात्वर्थेऽन्वयः। नव्यमते च यत्राश्रयत्वं कर्तृत्वं तत्राधेयत्वं द्वितीयार्थः। यत्रानुकूलकृतिमत्त्वं तत्र कृतिजन्यत्वम्, यत्र प्रतियोगित्वं, तेषां चाश्रयतासंबन्धेनैव धात्वर्थेऽन्वयः। गत्यर्थादिभ्योऽन्यत्र च णिच्प्रत्ययप्रकृतिधात्वर्थकर्तृवाचकपदान्न द्वितीया, तादृशकर्तुः कर्मत्वातिदेशाविषयत्वात्। तेन पाचयत्योदनं सहायेनेत्यादय एव प्रयोगाः न तु पाचयत्योदनं सहायमित्यादयः।

---

ज्ञानाश्रयतया चेत्यर्थः। तत्कर्मत्वाभिधानानुपपत्तेरिति। प्रधानकर्मत्वाभिधानानुपपत्तेरित्यर्थः। पृच्छतेरर्थ इति। एवं च मैत्रं पृच्छतीति नापत्तिः। मैत्रं प्रतिजिज्ञासाज्ञानोद्देश्यकप्रवृत्तेरभावात्। व्यापारानुबन्धिनी। शब्दानुकूलकृत्यादिरूपव्यापारानुबन्धिनी याचितमणिमण्डनन्यायेन। परंपरया। स्वोद्देश्यकप्रवृत्तिद्वारा।

तदाश्रयीभूतेति। ज्ञानाश्रयीभूतेत्यर्थः। धात्वर्थविषयतयेति। शब्दविषयतयेत्यर्थः। तथा च गुरुवृत्तिजिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयकशब्दानुकूलकृतिमान् शिष्य इति बोधः। व्रजश्चेति। तथा च शिष्यवृत्तिज्ञानोद्देश्यकधर्मविषयकशब्दानुकूलकृतिमान् गुरुरितिबोधः। संयोगावच्छिन्नेति। उत्तरदेशसंयोगानुकूलेत्यर्थः। कारकविभक्त्यर्थस्य धात्वर्थ एवान्वय इति नियममनुसृत्याह। अस्तु वेति। संयोगे एवेति। एवकारेण कर्माख्यातार्थसंयोगव्यावृत्तिः। विषयतयेति। द्वितीयार्थो विषयित्वमिति भावः। तथाच द्रव्यनिरूपितविषयितावज्ज्ञानानुकूलशब्दप्रयोक्तेति बोधः। समशीलतया। ज्ञानानुकूलव्यापारानुकूलव्यापाररूपतया।

मुख्यभाक्तसाधारणं कर्तृत्वमिति। मुख्यं कर्तृत्वं कृतिरूपं द्वितीयार्थ इति भावः। धात्वर्थानुकूलकृतिमत्त्वं मुख्यकर्तृत्वम्। धात्वर्थाश्रयत्वं गौणकर्तृत्वमिति विवेकः। कर्मसंज्ञाविधानादिति। अयं भावः। णिजन्तस्य

अनाद्यन्ता धातव इत्यनेन धातुसंज्ञा विधीयते। क्रियाजन्यफलशालितया णिच्प्रत्ययप्रकृतिधातुकर्तुः कर्मत्वम्। तच्च कर्तुरीप्सिततमं कर्मेति सूत्रेणैव प्राप्तम्। कर्तुः क्रियाजन्यफलाश्रयतया यदीप्सिततमं "यदत्यन्ताभिलाषविषयः" तत्कारकं कर्मसंज्ञं स्यादित्यर्थः।

अतो गतिबुद्धीतिसूत्रं नियमार्थम्। नियमश्च गत्याद्यर्थकधातूनामेवाऽणौ कर्तुः कर्मत्वमित्याकारकः। तत्फलन्तु पाचयत्योदनं सहायेनेत्यत्र द्वितीयाविरहः।

नव्यास्तु गतिबुद्धीतिसूत्रं विधायकमेव। अन्यथा णिज्विधायकहेतुमति चेति सूत्रे हेतुपदेन कर्तृप्रयोजकस्यैव विवक्षिततया कर्तृसंज्ञां विना णिचोऽप्राप्ततया उपजीव्यत्वात्परत्वाच्च कर्तृसंज्ञाया बलवत्त्वात् "शत्रूनगमयत्स्वर्गमित्यादौ शत्रादिपदोत्तरतृतीयापत्तेः। तदुक्तम्।

परत्वादन्तरङ्गत्वादुपजीव्यतया तथा।
प्रयोज्यस्यास्तु कर्मत्वं गत्यादेर्विधितोचिता॥

तथा च गत्यादिसूत्रं कर्तृसंज्ञापवादकमिति भावः। सूत्रार्थस्तु गतिर्गमनम्। बुद्धिर्ज्ञानम्। प्रत्यवसानं भक्षणम्। एतदर्थकधातूनां, शब्दकर्म येषां तेषां अकर्मकाणां च सर्वेषामण्यन्तावस्थानां यः कर्ता स ण्यन्ते कर्मसंज्ञः स्यादिति। नचैवं शत्रुपदस्य कर्मसंज्ञया कर्तृसंज्ञाबाधेन स्वर्गादेः कर्मेप्सिततया कर्त्तुरीप्सितत्वाभावात्कर्मसंज्ञा न स्यादिति वाच्यम्। कर्तुरीप्सिततमं कर्मेति सूत्रे कर्तृपदस्य धातूपात्तव्यापाराश्रयपरत्वात्। कर्तृसंज्ञाविरहेपि तस्य शत्रुपदे सत्वात्। गतिबुद्धीतिसूत्रस्य विधायकत्वे पाचयत्योदनं सहायेनेत्यत्र कर्त्तुरीप्सिततमेतिसूत्रेण सहायस्य कर्मत्वापत्तिरिति तु न शंक्यम्। कर्तृसंज्ञया कर्मसंज्ञाबाधात्। न हि कर्तुरीप्सिततमं कर्मेतिसूत्रं गतिबुद्धीति सूत्रस्येव कर्तृसंज्ञापवादकमिति वदन्ति।

कर्तृत्वमुदाहरति। गतीति। गतिनिरूपितं कर्तृत्वं यथा अजां ग्रामं यापयतीत्यत्राऽजायां गमनाश्रयत्वरूपम्। ज्ञाननिरूपितं तत् यथा शिष्यं शास्त्रं ज्ञापयतीत्यत्र शिष्ये ज्ञानाश्रयत्वरूपम्। एवं घटं जनयतीत्यत्र घट उत्पत्त्याश्रयत्वरूपम्। ब्राह्मणमन्नं भोजयतीत्यत्र ब्राह्मणे या गलबिलाधः संयोगानुकूला क्रिया ग्रासनिष्ठा तदनुकूलभोजनरूपव्यापारानुकूलकृतिमत्वरूपम्। यजमानं मन्त्रं पाठयतीत्यत्र यजमाने कण्ठताल्वाद्यभिघातजन्यो यः पाठस्तदनु-

केचित्तु पाकादिकर्तुः पाकादिकर्मत्वविरहेपि ण्यन्तसमुदायस्यापि धातुत्वेन तत्कर्मतया सहायादेः, पाचयत्योदनं सहायमित्यादयः प्रयोगा अपि साधवः। अत एवाऽजिग्रहत्तं जनको धनुस्तदित्यादयो भट्टिप्रयोगाः। गतिबुद्धीत्यादिसूत्रं च नियमपरतया गत्यर्थकधातुयोगे कर्तृप्रत्ययाऽसाधुत्वज्ञापकम्। तेन पाचयत्योदनं सहायेनेतिवत् अजया ग्रामं यापयतीत्यादयो न प्रयोगा इत्याहुः।

---

कूलकृतिमत्त्वरूपम्। घटं नाशयतीत्यत्र घटे नाशनिरूपितप्रतियोगित्वरूपम्। तस्य च। निरुक्तकर्तृत्वस्य च। निरूपकतासंबन्धेनेति। तथा च निरूपकतासंबन्धेनाऽजादिनिष्ठकर्तृताविशिष्टो यो ग्रामवृत्तिसंयोगानुकूलो व्यापारस्तदनुकूलव्यापारानुकूलकृतिमानिति बोधः। एवं शिष्यनिष्ठज्ञानाश्रयत्वरूपकर्तृताविशिष्टं यज्ज्ञानं तदनुकूलव्यापारवानिति बोधः। एवं ब्राह्मणनिष्ठकर्तृताविशिष्टभोजनानुकूलव्यापारानुकूलकृतिमानिति बोधः। एवं यजमाननिष्ठकर्तृताविशिष्टपाठं, एवं घटनिष्ठोत्पत्त्याश्रयत्वरूपकर्तृताविशिष्टोत्पत्तिं, एवं घटनिष्ठनाशप्रतियोगित्वरूपकर्तृताविशिष्टनाशमादाय तदनुकूलव्यापारवानिति बोधः। ईदृशरीत्या मुख्यभाक्तसाधारणकर्तृत्वं द्वितीयार्थो बोध्यः।

ननु अजां ग्रामं न यापयतीत्यादौ निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताकाजादिनिष्ठकर्तृत्वाभावो ग्रामवृत्तिसंयोगानुकूलव्यापारे बोधनीयः, स च न संभवति निरूपकतासंबन्धस्य वृत्त्यनियामकत्वादित्यत आह। नव्यमते। इति। यत्र। अजां ग्रामं यापयतीत्यत्र। तथा च ग्रामवृत्तिसंयोगानुकूलाजावृत्तिक्रिया (व्यापार) निर्वाहकव्यापारानुकूलकृतिमानिति बोधः। यत्र। ब्राह्मणमन्नं भोजयतीत्यत्र। कृतिजन्यत्वं द्वितीयार्थ इति पूर्वेणान्वयः। यत्तु द्वितीयार्थः कृतिरेव, तस्या जन्यतासंबन्धेन धात्वर्थेऽन्वयः। तन्न। नञ्समभिव्याहारे पूर्वोक्तदोषतादवस्थ्यात्। जन्यतासंबन्धस्य वृत्त्यनियामकत्वात्। तथा च ब्राह्मणसमवेतकृतिजन्यान्नवृत्तिगलाधःसंयोगानुकूलक्रियानिर्वाहकव्यापारानुकूलकृतिमानिति बोधः। यत्र। नाशयतीत्यत्र। प्रतियोगित्वं। कर्तृत्वमिति शेषः। अनुयोगित्वं। द्वितीयार्थ इति पूर्वेणान्वयः। तथा च घटनिष्ठप्रतियोगितानिरूपितानुयोगिताश्रयनाशानुकूलव्यापारवानिति बोधः। तेषां। आधेयत्व-कृतिजन्यत्वानुयोगित्वानां। धात्वर्थे। ज्ञाने भोजने नाशे च। आश्रयतासंबन्धेनैवेति। एवकारेण निरूपकतासंबन्धस्य व्यावृत्तिः।

एषामयमाशयः। हेतुमति चेत्यनुशासनाद् णिजर्थो हेतुकर्तृत्वम्। तत्र स्वतन्त्रकर्तृप्रेरणा, अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा। कर्तृत्वं च क्वचित्प्रयत्नः क्वचिदाश्रयत्वादिकं, यादृशधातूत्तराख्यातेन यादृशकर्तृत्वं बोध्यते, तदुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते। अतएव पाचयतीत्यादौ पाकादिकृतिनिर्वाहकः ज्ञापयतीत्यादौ ज्ञानाश्रयत्वनिर्वाहकः नाशयतीत्यादौ नाशप्रतियोगित्वनिर्वाहको व्यापारः प्रतीयते। निर्वाहकत्वं च स्वरूपसंबन्धविशेषः, नतु जनकत्वम्, अतो नाशयतीत्यादौ नानुपपत्तिः। एवं च ण्यन्तधातुप्रतिपाद्यतावच्छेदकं फलं कर्तृत्वमेव, निर्वाह्यस्यैव फलत्वात्। तदाश्रयतया स्वतन्त्रस्य कर्तुः कर्मता, तादृशफलविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षायां पाचयत्योदनं सहायमित्यादयः प्रयोगाः। यदा तु पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितं तदा पाचयत्योदनं सहायेनेत्यादयः।

---

तेन। णिच्प्रत्ययप्रकृतिभूतगत्याद्यर्थकधातूनां कर्तुरेव कर्मत्वनियमेन। एवकारव्यवच्छेद्यमाह। नात्वति। णिच्प्रत्ययप्रकृतिभूतगत्यर्थकधातूनां कर्मत्वमेवेतिनियमः। पाचयत्योदनं सहायेनेतिवदजया ग्रामं यापयति इति न प्रयोग इत्याशयेनाह। केचित्त्विति। पाकादिकर्त्तुः। सहायादेः। तत्कर्मतया। ण्यन्तसमुदायकर्मतया। अतएव। णिच्प्रत्ययप्रकृतिभूतधातुकर्तुः कर्मत्वस्य साधुत्वादेव। भाट्टप्रयोगा इति। अन्यथा तमित्यत्र तेनेति स्याद् ग्रहधातोर्गत्याद्यनन्तर्गतत्वादिति भावः। ननु सर्वत्रैव यदि णिच्प्रत्ययप्रकृतिभूतधातुकर्तुः कर्मत्वं स्यात्तदा गतिबुद्धीतिसूत्रं व्यर्थं स्यात् कर्त्तुरीप्सिततमं कर्मेतिसूत्रेणैव गतार्थत्वादित्यत आह। सूत्रं चेति। नियमपरतयेति। णिच्प्रत्ययप्रकृतिभूतगत्यर्थकधातूनां कर्मत्वमेवेति नियमपरतयेत्यर्थः। तेन। नियमेन। तथा च णिच्प्रत्ययप्रकृतिभूतानां गत्यर्थकधातुभिन्नधातूनां कर्त्तुःकर्तृत्वंकर्मत्वमपीति भावः। हेतुकर्तृत्वं। प्रयोजककर्तृत्वं अन्यनिष्ठेति। प्रयोज्यनिष्ठेत्यर्थः। अतएव। आख्यातप्रतिपाद्यकर्तृत्वनिर्वाहकव्यापारबोधकत्वादेव। निर्वाहकत्वं यदि जनकत्वं तदा नाशस्य प्रतियोगितानिर्वाहकत्वानुपपत्तिरत आह। निर्वाहकत्वं चेति। एवं च। प्रयोज्यनिष्ठकर्तृत्वनिर्वाहकव्यापारस्य णिजर्थत्वे च। निर्वाह्यस्यैव। प्रयोज्यनिष्ठकर्तृत्वस्यैव। अस्वतन्त्रस्य। प्रयोज्यस्य। यदा सहायस्य व्यापारे ऽन्वयः, तदा पाचयत्योदनं सहायमिति प्रयोगः। बोधस्तु सहायवृत्तिर्यः पाकानुकूलव्यापारस्तदनुकूलव्यापारवानित्या-

अथ यत्र चैत्रमैत्रोभयकर्तृक एक एव पाकस्तत्र चैत्रमात्रं प्रयोजयति यज्ञदत्ते मैत्रेणान्नं पाचयतीति प्रयोगापत्तिरिति तत्रापि णिजर्थविशेषण धात्वर्थकर्तृत्वेएव तृतीयान्तार्थमैत्रादिवृत्तित्वस्यान्वयोवाच्यः। एवं च मैत्रं पाचयतीत्यादिवाक्यजन्यबोधावैलक्षण्याद् द्वितीयातृतीययोस्तात्पर्यभेदेन व्यवस्थाया न संगतिरितिचेन्न। अगत्या तत्र पाकादिविशेषणकृतेः पारतन्त्र्येण व्यापारविशेषणीभूतणिजर्थकृतौ अभेदान्वयमुपगम्योक्तातिप्रसङ्गस्य वारणीयत्वात्। पदार्थैकदेशे कृतौ पाकादेरिव कृतेरप्यन्वयोव्युत्पत्तिवैचित्र्यात्। वस्तुतः कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः। विशिष्टलाभोऽन्वयबलात्। केचित्तु अनुकूलव्यापार एव णिजर्थः। तदन्वयिनी गमनभोजनक्रियैव धात्वर्थतावच्छेदकं फलं तत्संबन्धिनस्तादृशक्रियाकर्तुर्ण्यन्तकर्मता। तादृशक्रियासंबन्धश्चाश्रयत्वकृतिमत्वान्यतरो ग्राह्यः। अतो गमनादिसंबन्धिकालादौ नातिप्रसङ्ग इत्याहुः।

---

कारकः। यदा तु सहायस्य पाके विशेषणत्वं सहायकर्तृको यः पाकस्तदनुकूलव्यापारानुकूलव्यापारवानितिबोधस्तदा पाचयत्योदनं सहायेनेति प्रयोग इत्याह। तादृशफलविशेषणतयेति। पाककर्तृत्वरूपफलविशेषणतयेत्यर्थः। अस्वतन्त्रकर्तृवृत्तित्वविवक्षायामिति। अस्वतन्त्रकर्तृवृत्तित्वस्य तादृशफलविशेषणतया विवक्षायामित्यर्थः। सहायेनेति। पाकविशेषणीभूतकर्तृत्वस्य फलत्वाभावान्न द्वितीयेति भावः। पाकादिविशेषणस्य तृतीयाविवक्षाया माशंकते—अथेति। अस्वतन्त्रकर्तुः पाकादिविशेषणतया विवक्षितत्वे इत्यर्थः। प्रयोगापत्तिरिति। निरूपकतया मैत्रवृत्तिकर्तृत्वस्य पाके विशेषणत्वादिति भावः। मैत्रकर्तृको यः पाकस्तदनुकूला चैत्रसमवेता या कृति स्तन्निर्वाहकव्यापारस्य यज्ञदत्ते सत्वादिति यावत्। इतीति। तद्वारणायेति शेषः। तत्रापि। मैत्रेणान्नं पाचयतीत्यत्रापि। णिजर्थविशेषणधात्वर्थकर्तृत्वे एवेति। अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपणिजर्थे विशेषणीभूताऽन्यनिष्ठकर्तृत्वे एवेत्यर्थः। पाकानुकूलकर्तृत्वे एवेति भावः। एवकारेण पाकादिव्यावृत्तिः। अन्वयो वाच्य इति। तथा च मैत्रवृत्तिपाकानुकूला या कृतिस्तन्निर्वाहकव्यापारस्य प्रकृते बाधितत्वान्नापत्तिरिति भावः। एवं च। णिजर्थकृतौ एव तृतीयान्तार्थमैत्रवृत्तित्वस्यान्वये च। तात्पर्यभेदेन। विवक्षाभेदेन। तृतीयान्तार्थसहायकर्तृकत्वस्य पाके द्वितीयान्तार्थस्य सहाय

अत्र च तादृशकर्मतावाचकपदात्कदाचिद्द्वितीया कदाचित्तृतीया इत्यत्र नियामकाभावः। तादृशपदोत्तरयोस्तयोस्तुल्यार्थकतया विवक्षाभेदरूपनियामकाभावादिति तु चिन्तनीयम्।

---

वृत्तित्वस्य कृतौ इति विवक्षाभेदेन। व्यवस्थायाः। उक्तव्यवस्थायाः। न संगतिरिति। मैत्रवृत्तिपाकानुकूला या कृतिस्तन्निर्वाहकव्यापारस्यैव प्रतीत्या समानार्थकत्वाद् द्वितीयातृतीययोरव्यवस्थाप्रसंग इत्यर्थः। तृतीयान्तार्थमैत्रकर्तृकत्वस्य पाके एवान्वयः। किन्तु णिजर्थकृतौ मैत्रकृतेरभेदान्वयमुपगम्या पत्तेर्वारणादिति समाधत्ते। अगत्येति। णिजर्थकृतौ इति। णिजर्थश्चाऽन्यनिष्ठकर्तृतानिर्वाहको व्यापारः। तद्विशेषणीभूतकृतौ इत्यर्थः। अन्यनिष्ठकृतौ इति यावत्। उक्तातिप्रसंगस्य। मैत्रेणान्नं पचतीति प्रयोगापत्तेः। वारणीयत्वादिति। मैत्रकर्तृको यः पाकस्तदनुकूला मैत्रसमवेतकृतिरेव न तु चैत्रसमवेतकृतिस्तयोर्भेदात्, मैत्रसमवेतकृतेश्च यज्ञदत्तव्यापारनिर्वाह्यत्वाभावादिति भावः। पदार्थैकदेशे। कर्तृत्वनिर्वाहकव्यापाररूपणिजर्थघटके। धर्मिपारतन्त्र्येणेति। पाकरूपधर्मिपारतन्त्र्येणेत्यर्थः। व्युत्पत्तिवैचित्र्यादिति। एकदेशान्वयस्वीकारात्। अन्यथा पाकादेरपि कृतावन्वयो न स्यादिति भावः। धर्मिपारतन्त्र्यणैकदेशान्वयास्वीकारेत्वाह। वस्तुत। इति। अन्वयबलादिति। आकाङ्क्षाबलादित्यर्थः। तथा च न पाकादेरेकदेशान्वय इति भावः।

अनुकूलव्यापार एवेति। एवकारेणाऽन्यनिष्ठकर्तृतानिर्वाहकेत्यस्य व्यवच्छेदः। तत्संबन्धिनः। गमनादिरूपक्रियासंबन्धिनः। तादृशेति। उत्तरदेशसंयोगानुकूलेत्यर्थः। तथा च अजां ग्रामं यापयतीत्यादौ अजायाः धात्वर्थव्यापारजन्यगमनाश्रयत्वेपि धात्वर्थतावच्छेदकफलशालित्वाभावे न कर्तुरीप्सिततमं कर्मेति सूत्रप्राप्त्यभावेन गतिबुद्धीत्यस्य संज्ञाविधायकत्वमेव। अपवादं च तृतीयाविधायकसूत्रस्य। भासते इति। तथा च चैत्रवृत्तिव्यापारनिर्वाह्या या ग्रामवृत्तिसंयोगानुकूलक्रिया तदाश्रयीभूताऽजा इति बोधः। व्यापार एवेति। एवकारेण धात्वर्थक्रियाया व्यवच्छेदः। स्वकर्तृत्वेति। स्वनिरूपितकर्तृत्वेत्यर्थः। स्वं क्रिया। अतः। व्यापारमात्रस्य णिजर्थत्वात्। कर्तृत्वे। तस्य। ण्यन्तोत्तराख्यातस्य। तच्च। कर्तृत्वं च। तथा च चैत्रवृत्तिव्यापारविशिष्टा या ग्रामवृत्तिसंयोगानुकूलक्रिया तदाश्रयीभूताऽजा इति बोधः। वै० स्वनिर्वाह्यकर्तृतानिरूपकत्वसं०। ण्यन्तोत्तरेति। एवकारेण

अजा ग्रामं याप्यते चैत्रेण इत्यादौ चैत्रकर्तृकव्यापारनिर्वाह्यं यद् ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वं तदाश्रयोऽजा इतिबोधः। तत्र संयोगावच्छिन्नक्रिया धातुलभ्या। संयोगे ग्राममित्यादिद्वितीयान्तार्थग्रामादिवृत्तित्वान्वयबलाद्ग्रामादिवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते तादृश्या णिजर्थकर्तृत्वेऽन्वयः। कर्माख्यातादिसमभिव्याहारनियन्त्रितव्युत्पत्तिबलाच्च तादृशक्रियान्वितकर्तृत्वं तृतीयान्तार्थचैत्रादिकर्तृत्वविशेषितव्यापाररूपणिजर्थे निर्वाह्यत्वसंबन्धेन विशेषितम्। अजादिरूपकर्मीभूतकर्तृविशेषणीभवदाख्याताश्रयत्वे विशेषणतया भासते। ये तु गतिबुद्धीत्यादिसूत्रस्य संज्ञाविधायकत्वं वर्णयन्ति तेषामयमाशयः। व्यापार एव णिजर्थः। तत्र धात्वर्थक्रियायाः स्वकर्तृत्वनिर्वाहकत्वं संसर्गः। अतो न कर्तुः कर्मत्वं सूत्रान्तरप्राप्तम्।

---

ण्यन्तानुत्तरयक्समभिव्याहारस्य व्यावृत्तिः। एवं। ण्यन्तोत्तराख्यातस्य कर्तृत्वार्थकत्वे। तेन। तिङादिना। ण्यन्तसमुदायोत्तरमेवेति। एवकारेण केवलधातोर्व्यवच्छेदः। तेन। तिङा। तदर्थनिरूपितेति। धात्वर्थनिरूतेत्यर्थः। ण्यर्थविशेषितधात्वर्थनिरूपितकर्तृत्वमेवेति। स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन ण्यर्थव्यापारविशिष्टधात्वर्थनिरूपितकर्तृत्वमेवेत्यर्थः। तादृशापवादविषयतेति। कर्तरि शबित्यपवादविषयतेत्यर्थः। व्यापारविशेषितेति। स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापारविशिष्टेत्यर्थः। एवं च विनिगमनाविरहेण धात्वर्थक्रियानिरूपितकर्तृत्वबोधनात् शपः प्राप्त्या यकोऽसाधुत्वमिति भावः। यादृशविशिष्टार्थः। फलानुकूलव्यापाररूपोर्थः। तादृशविशिष्टार्थान्वितेति। फलानुकूलव्यापारान्वितेत्यर्थः। कर्तृत्वाभिधानमेवेति। एवकारेण व्यापारजन्यफलव्यावृत्तिः। प्रकृतेपीति। याप्यते गम्यते इत्यादावपीत्यर्थः। यापयतीत्यत्र स्वनिरूपितकर्तृतानिर्वाहकसंबन्धेन क्रियाविशिष्टव्यापारो धात्वर्थः। याप्यते इत्यत्र स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापारविशिष्टक्रियाधात्वर्थो बोध्यः। गमनादिकर्तुः। अजादेः। तस्यैव। गमनादिकर्तुरेव। एवकारेण ग्रामादेर्व्यावृत्तिः। इत्यनुशासनादिति। ण्यन्तावस्थायां कर्तृभूते कर्मणि कर्मभूते कर्तरि वा लादयः स्युरित्यनुशासनार्थः। अतः। अजाया विशेष्यत्वेन प्रथमान्तस्यापेक्षितत्वात्। न प्रयोगा इति। किन्तु अजा ग्रामं याप्यते इत्यादय एव। पूर्वत्र दृवेति। स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेनेत्यर्थः।

याप्यते ग्राममजा इत्यादौ स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन अजादौ विशेषणतया भासते। तादृशव्यापारे तृतीयान्तार्थस्य चैत्रादिकर्तृकत्वस्य धात्वर्थैकदेशे संयोगादिफले च द्वितीयान्तार्थस्य ग्रामवृत्तित्वस्य विशेषणतया भानम्, एयन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थः। तत्र च तस्य वृत्तिः क्लृप्तैव। तच्चोक्तस्य धात्वर्थस्य विशेष्यतया प्रथमान्तपदार्थस्य च विशेषणतया भासते। न च यक्समभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्याऽन्वयबोधोपगमे गम्यते चैत्र इत्यतोऽपि गमनकर्त्ता चैत्र इत्यन्वयबोधः स्यादिति वाच्यम्। एयन्तोत्तरयक्समभिव्याहृताख्यातस्यैव कर्तृत्वान्वयबोधनियामकत्वात्। अथैवमजा याप्यते इत्यादौ कर्तृत्वस्याख्यातबोध्यत्वे कर्त्तरि शबित्यपवादविषयतया यकोऽसाधुतापत्तिः। न च यादृशधातूत्तरं यत्सार्वधातुकं विहितं तादृशधात्वर्थानिरूपितकर्तृत्वस्य तेन विवक्षायामेव कर्त्तरिशबित्यादेःशब्दादिविधायकत्वात्, प्रकृते एयन्तसमुदायस्योत्तरमेवाख्यातं तेन तदर्थनिरूपितकर्तृत्वं च न बोध्यते अपितु ण्यर्थविशेषितधात्वर्थान्वितकर्तृत्वमेवेति न तादृशापवादविषयतेति वाच्यम्। कर्माख्यातस्थले विशेष्यविशेषणवैपरीत्येन व्यापारविशेषितक्रियाया अपि एयन्तधात्वर्थत्वात्।

मैवम्। लकारसामान्यवृत्त्या यत्र कर्तृत्वं प्रतीयते तत्रैव कर्त्तरिशबित्यस्य विधायकता, अत्र कर्मत्वसमशीले कर्तृत्वे आत्मनेपदत्वेन शक्तिः। वस्तुतः फलव्यापारयोः पृथग्धात्वर्थतामते गच्छतीत्यादाविव गम्यते इत्यादावपि लकारेणाश्रयत्वरूपकर्तृत्वाभिधाने यगनुपपन्न इति परस्मैपदसमभिव्याहृतधातुना यादृशविशिष्टोऽर्थः प्रत्याय्यते तादृशविशिष्टार्थान्वितकर्तृत्वाभिधानमेव शब्विषयः। एवं च प्रकृतेऽपि नानुपपत्तिरिति ध्येयम्।

---

तद्विशेषणेति। धात्वर्थविशेषणेत्यर्थः। तथा च चैत्रकर्तृकव्यापारनिर्वाह्यसहायवृत्तिकर्तृतानिरूपकपाकात्मकव्यापारजन्यविक्लित्याश्रयस्तण्डुल इति बोधः।

प्रयोगवारणायेति। चैत्रवृत्तिसंयोगानुकूलव्यापारस्य चैत्रे सत्वात्। चैत्रकर्तृकगमनजन्यसंयोगस्य ग्रामे इव चैत्रेपि सत्वादिति भावः। इदमुपलक्षणम्। चैत्रेण गम्यते चैत्र इति प्रयोगवारणायेत्यपि बोध्यम्।

ग्रामो याप्यते अर्थो बोध्यते इत्यादौ भावनाविशेष्यतया ग्रामादेर्भानेपि गमनादिकर्त्तुः कर्मत्वविवक्षायां तस्यैवाऽऽख्यातार्थविशेष्यतया बोधो व्युत्पन्नः। ण्यन्ते कर्तुश्च कर्मण इत्यनुशासनादतोऽजां ग्रामो याप्यते शिष्यमर्थोबोध्यते इत्यादयो न प्रयोगाः। ग्रामो याप्यते अर्थो बोध्यते इत्यादौ फलं विषयत्वादिरूपं च मुख्यभाक्तसाधारणं कर्मत्वमेवाख्यातार्थः। फलव्यापारयोः पृथग् धात्वर्थतामते आश्रयत्वमेवाख्यातार्थः। धात्वर्थव्यापारविशेष्यतया तादृशाश्रयत्वविशेषणतया च धात्वर्थफलस्य भानेपि ण्यर्थव्यापारस्य जन्यतासंबन्धेनैव धात्वर्थक्रियाज्ञानादिविशेषणत्वं पूर्ववदेव।

अजां ग्रामो याप्यते इत्यादिकस्तु न प्रयोगः। द्वितीयया कर्मत्वबोधने धात्वर्थव्यापारविशेष्यतया ण्यर्थबोधसामग्र्याः प्रयोजकत्वात्। यगादिसमभिव्याहृतस्थले च धात्वर्थविशेषणतयैव ण्यर्थस्य बोधात्। ण्यन्तधातोः सकर्मकत्वे तदुत्तरभावाख्यातस्य भावे चाकर्मकेभ्य इत्यनुशासने वाऽसाधुत्वाच्च न तादृशप्रयोगः। ग्रामं याप्यते इति भावाख्यातप्रयोगस्तु इष्ट एव। ण्यन्तकर्मासमभिव्याहारादेकदा कर्तृत्वकर्मत्वबोधकताया आख्यातस्याव्युत्पन्नतया अजा ग्रामो याप्यते इत्यादयो न प्रयोगाः। एवं तण्डुलः सहायेन पाच्यते चैत्रेणेत्यादौ धात्वर्थे सहायादिकर्तृत्वस्य तद्विशेषणण्यर्थव्यापारे च चैत्रादिकर्तृत्वस्य तृतीयान्तार्थस्य बोधः। शेषंपूर्ववदितिदिक्।

---

तस्य। परसमवेतत्वस्य। धात्वर्थे। क्रियायाम्। व्यापारे इति यावत्। ननु परत्वं भेदाश्रयत्वम्, भेदस्य केवलान्वयितया नोक्तापत्तिवारणमित्यत आह। परत्वे चेति। भेदेनेत्यर्थः। एकदेशेपि। परसमवेतत्वघटकेपीत्यर्थः। आकाङ्क्षावैचित्र्यादिति। पदार्थेनेत्यत्र विभक्त्यर्थातिरिक्तपदार्थेनेति विवक्षणादित्यर्थः। प्रकृत्यर्थस्य। ग्रामादेः। एवं च। परसमवेतत्वस्य क्रियाविशेषणत्वे च। आपत्तिं वारयति। स्वनिष्ठेति। चैत्रनिष्ठेत्यर्थः। एवमुत्तरत्रापि। बाधादिति। तस्याः स्वस्मिन्नेव समवेतत्वादिति भावः। चैत्रान्यसमवेतस्य गमनस्य चैत्रेऽसत्वादिति यावत्। एवं चैत्रसमवेतकृतिजन्यस्य चैत्रान्यसमवेतव्यापारस्याऽप्रसिद्धत्वेन तज्जन्यसंयोगस्य चैत्रेऽसंभवाच्चैत्रश्चैत्रं गच्छतीति न प्रयोगः। स्वभिन्नसमवेतत्वेपीति।

ग्रामं गच्छतीतिवत्स्वं गच्छतीतिप्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थ इष्यते। तस्य च धात्वर्थेऽन्वयः। परत्वे चैकदेशेऽपि आकाङ्क्षावैचित्र्यात्प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः। एवं च ग्रामं गच्छति चैत्र इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इत्यन्वयबोधः। स्वनिष्ठसंयोगजनकक्रियायां स्वभिन्नसमवेतत्वस्य बाधात्स्वमात्मानं गच्छतीति न प्रयोगः।

यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरसमवेतक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेपि तादृशक्रियाश्रयतायाः स्वस्मिन्बाधात् मल्लः स्वं गच्छतीति न प्रयोगः। न च स्वनिष्ठसंयोगजनकस्वसमवेतक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यतया तद्भानेपि अबाधितं स्वनिष्ठसंयोगजनकत्वं विषयीकृत्य शाब्दबोधसंभवात्तदर्थमात्रतात्पर्येण स्वं गच्छसीतिप्रयोगो दुर्वारएवेति वाच्यम्। परसमवेतत्वाविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यनभ्युपगमेन तादृशबोधे तद्भासकसामग्र्या अपेक्षणीयत्वात्।

---

स्वभिन्नसमवेतत्वेनेत्यर्थः। तादृशक्रियाश्रयतायाः। मल्लान्तरसमवेतक्रियायाः। ननु यथा हर्यादिशब्दानां नानार्थकत्वेपि तात्पर्यवशात्कश्चिद् विवक्षित एवार्थोभासते तथा द्वितीयायाः परसमवेतत्वरूपार्थस्याऽभानेपि आधेयत्वस्य भाने बाधकाभावाच्चैत्रः स्वं गच्छतीति प्रयोगापत्तिस्तदवस्थैवेत्याशंकते। न चेति। तद्भानेपि। परसमवेतत्वाभानेपि। तदर्थमात्रतात्पर्येण। स्वनिष्ठसंयोगजनकत्वमात्रतात्पर्येण। तादृशबोधे। द्वितीयया फलस्य तदन्विताधेयत्वस्य वा बोधे। तद्भासकसामग्र्याः। परसमवेतत्वभासकसामग्र्याः। तदुपस्थितिभ्रमप्रमासाधारणयोग्यताज्ञानादेरित्यर्थः। तथा च परसमवेतत्वेऽयोग्यत्वग्रहे द्वितीयाधीनफलविषयकबोधोत्पादिकायाः परसमवेतत्वबोधकयोग्यताज्ञानादिघटितसामग्र्या अभावान्न तादृशबोधसंभव इति भावः। दुर्वारतयेति। चैत्रे चैत्रघटोभयत्वेन चैत्रभेदसत्वादिति भावः। तद्वारणायेति शेषः। द्वितीयाप्रकृत्यर्थस्य। ग्रामादेः। प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैवेति ग्रामत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैवेत्यर्थः। एवकारेण द्वित्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्य व्यावृत्तिः। अन्वयो वाच्य इति। भेदे इत्यादिः। एवं च भेदे स्वत्वावच्छिन्न

अथ स्वस्यापि द्वित्वावच्छिन्नभेदवत्त्वात्स्वं गच्छतीति प्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव भेदेऽन्वयो बोध्यः। तथा च चैत्रो द्रव्यं गच्छति मल्लो मल्लं गच्छतीत्यादिवाक्यस्याऽप्रमाणतापत्तिः। चैत्रमल्लादिनिष्ठक्रियायां प्रकृत्यर्थतावच्छेदकीभूतद्रव्यत्वमल्लत्वाद्यवच्छिन्नभिन्नाऽसमवेतत्वात्। तत्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधोदयेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेनान्वयोपगमाऽसंभवात्। उक्तयुक्त्या संबन्धघटकोपस्थितेरपि शाब्दबोधेऽपेक्षितत्वात्।

---

प्रतियोगिताकत्वसंबन्धेन स्वस्यान्वयविरहान्नापत्तिः। तथा च। प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वसंबन्धेनाऽन्वयविवक्षणे च। ननु चैत्रे द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदाऽसत्वेपि एवं मल्ले मल्लत्वावच्छिन्नप्रतियोगिताकभेदविरहेपि तत्तद्व्यक्तित्वावच्छिन्नभेदस्य सत्वान्नोक्ताऽप्रामाण्यमत आह। तत्तद्व्यक्तित्वाच्छिन्नानुपस्थितावपीति। ननु संबन्धस्याविशेषणत्वेन तस्य तद्घटकस्य चोपस्थितिर्नापेक्षणीयेति तद्व्यक्तित्वानुपस्थितिकालेपि तदवच्छिन्नस्य संसर्गतासंभवत्येवेत्यत्र आह। उक्तयुक्त्येति। तत्तद्धर्मावच्छिन्नतत्तत्संबन्धावच्छिन्नप्रकारतानिरूपिततत्तद्धर्मावच्छिन्नविशेष्यताकत्वविशिष्टबोधपरत्वेन तात्पर्यज्ञानस्य हेतुतया तत्र संबन्धस्यापि विशेषणत्वेन तदर्थसंबन्धस्य संबन्धघटकस्य चोपस्थितेरपेक्षणीयत्वादित्यर्थः।

ननु इदं वाक्यमेतद्विषयताविशिष्टशाब्दपरमिति तात्पर्यज्ञानमेव कारणम्। वै० स्वनिरूपितसंसर्गतानिरूपिततद्धर्मावच्छिन्नविषयताकत्वसंबन्धेन। एवं च संसर्गस्यानुपस्थितस्यापि भानान्न तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्योपस्थित्यपेक्षा। तात्पर्यज्ञानस्य सर्वत्र शाब्दबोधे चाऽहेतुत्वपक्षे न तत्तद्व्यक्तित्वानुपस्थितिकाले शाब्दाऽसंभव इत्यत आह। एकधर्मावच्छिन्नेति। घटवति घटो नास्तीत्यादिप्रतीतेरप्रामाण्यं सर्वानुमतम्, तदर्थं विशेषणतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गावगाहित्वमेवोक्तप्रतीतेःस्वीकार्यम्, तच्चोक्तप्रतीतिकारणादेवेति प्रतियोगिविशेषिताभावबुद्धेर्विशेषणतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गत्वे एव भानत्वादन्यस्याऽप्रमाणत्वान्मानाभावादित्यर्थः।

ननु द्रव्यत्वाद्युपलक्षितस्यैव भेदे विशेषणतया भानमस्तु, तथा च तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया अपि संसर्गत्वं संभवत्येवेत्यत आह।

एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च, प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात्। अन्वयितानवच्छेदकावच्छिन्नप्रतियोगितायाः संबन्धत्वाऽसंभवाच्च। इति चेत्तर्हि क्रियाभेदप्रतियोगितावच्छेदकत्वमेव द्वितीयार्थोऽस्तु। भेदे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वय इति न काचिदनुपपत्तिः। न चैवमपि विहगो भूमिं प्रयातीतिवद् विहगो विहगं गच्छतीति प्रयोगो दुर्वारः। विहगनिष्ठभूमिसंयोगजनकत्तक्रियाया विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया विहगनिष्ठभेदप्रतियोगिताच्छेदकविहगवृत्तिसंयोगजनकक्रियाश्रयत्वस्याबाधितत्वादिति वाच्यम्। विहगो विहगं गच्छतीत्यादौ विहगादिप्रकृत्यर्थवृत्तित्वविशिष्टसंयोगस्य क्रियायां जनकत्व-स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेनान्वयोपगमात्।

---

प्रतियोगिविशेषितेति। अन्वयितानवच्छेदकेति। तथा च द्रव्यं गच्छतीत्यादौ अन्वयितानवच्छेदकं तत्तद्व्यक्तित्वं तदवच्छिन्नप्रतियोगिताया न संसर्गत्वमिति भावः। ननु नञुपस्थाप्याभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमेऽपि द्वितीयार्थभेदबुद्धेरुपलक्षितवैशिष्ट्यावगाहित्वमेवोपेयमतो द्रव्यं गच्छतीत्यादौ तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया अपि संसर्गत्वसंभव इति चेन्न। तथासति स्वं गच्छतीत्यस्यापि प्रामाण्यापत्तेः। स्वस्मिन्नपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसत्त्वादतो द्वितीयार्थभेदबुद्धेरपि विशिष्टवैशिष्ट्यावगाहित्वं बोध्यम्। तथा च चैत्रो द्रव्यं गच्छति-मल्लो मल्लं गच्छतीत्यस्य चाऽप्रमाणतापत्तिः। चैत्रमल्लादिनिष्ठक्रियाया द्रव्यमल्लभिन्नाऽसमवेतत्वादत आह। तर्हीति। क्रियान्वयिभेदेति। क्रियान्वयिप्रतियोगिकभेदेत्यर्थः। भेदश्च स्वनिष्ठसंयोगजनकक्रियावान्नेत्याकारको ग्राह्यः। तथा च कर्मीभूतग्रामादिवृत्तिर्यो भेदस्तत्प्रतियोगितावच्छेदकत्वमेवेत्यर्थः। एवकारेण पदसमवेतत्वव्यावृत्तिः। एवं च कर्मीभूतग्रामादिवृत्तिभेदप्रतियोगितावच्छेदकक्रियाजन्यफलशालित्वमिति फलितम्। ग्रामं गच्छतीत्यत्र कर्मीभूतग्रामवृत्तिभेदप्रतियोगितावच्छेदकक्रियाजन्यफलशालित्वाद् ग्रामस्य कर्मत्वम्। न काचिदनुपपत्तिरिति। चैत्रो द्रव्यं गच्छतीत्यत्र कर्मीभूतद्रव्यवृत्तिभेदप्रतियोगितावच्छेदक ( चैत्रवृत्ति ) क्रियाजन्यफलशालित्वाद् द्रव्यस्य कर्मत्वमुपपन्नम्। मल्लो मल्लं गच्छतीत्यत्र कर्मीभूतमल्लान्तरवृत्तिभेदप्रतियोगि-

विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वेन तज्जनकतासंबन्धेन-तत्संयोगवत्त्वेपि विहगवृत्तित्वविशिष्टतत्संयोगाश्रयतद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावान्नोक्तोभयसंबन्धेन विशिष्टसंयोगवत्त्वमित्यनतिप्रसंगात्। एवं सति परसमवेतत्वं संबन्धघटकमेव नतु द्वितायार्थ इति चेत् का क्षतिः। विहगो विहगेन गम्यते इत्यादावपि जन्यत्व-स्वावच्छिन्नभेद सामानाधिकरण्योभयसबन्धेन क्रियायाः संयोगेऽन्वयइष्यते तत्तक्रियावच्छिन्नभेदवत्ति भूम्यादावेव तादृशभेदसामानाधिकरण्यसंबन्धेन-त्तत्क्रियाविशिष्टसंयोगवत्त्वोपगमात्। तत्र तत्क्रियाश्रयविहगेतद्बाधेन-नातिप्रसंग इति ध्येयम्।

---

तावच्छेदकीभूत"मल्लान्तरवृत्ति"क्रियाजन्यफलशालित्वान्मल्लस्य कर्मत्वम्। चैत्रश्चैत्रं गच्छतीत्यत्र कर्मीभूतचैत्रस्य क्रियाश्रयत्वाच्चैत्रवृत्तिभेदप्रतियोगितावच्छेदकं कर्मान्तरं तज्जन्यफलशालित्वाभावान्नापत्तिः। उभयसंबन्धेनाऽन्वयोपगमादिति। तथा च कर्मीभूतग्रामादिवृत्तिसंयोगविशिष्टव्यापारानुकूलकृतिमान् इति बोधः। वै० स्वजनकत्व-स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसबन्धेन। विहगो विहगं (स्वं) गच्छतीत्यस्य नापत्तिरित्याह। विहगनिष्ठक्रियाया इति। तद्विहगनिष्ठक्रियाया इत्यर्थः। तद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावादिति। विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वेपि विहगान्तरस्य तद्विहगवृत्तित्वविशिष्टसंयोगानाश्रयत्वादिति भावः। एवं सति। स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य संसर्गत्वे सति। संबन्धघटकमेवेति। एवकारेण द्वितीयार्थत्वव्यवच्छेदः। भेदप्रतियोगितावच्छेदकत्वस्य परसमवेतत्वरूपत्वादिति भावः। इष्यते इति। विहगकर्तृकव्यापारविशिष्टसंयोगाश्रय इति बोधः। वै० स्वजन्यत्व-स्वावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्योभयसं०। तत्तक्रियावच्छिन्नभेदवति। तत्तत्क्रियावच्छिन्नप्रतियोगिताकभेदवति। भूम्यादावेव। एवकारेण विहगव्यावृत्तिः। तादृशेति। तत्तत्क्रियावच्छिन्नप्रतियोगिताकेत्यर्थः। तत्र। विहगो विहगेन गम्यते इत्यत्र। तत्क्रियाश्रयविहगे। संयोगजनकक्रियाश्रयविहगे। तद्बाधेन। तत्तत्क्रियावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यसंबन्धेन तत्तत्क्रियाविशिष्टसंयोगादिमत्त्वबाधेन।

तिङर्थसंयोगे स्वजन्यत्व-स्वाश्रयप्रतियोगिकत्वोभयसंबन्धेन धात्वर्थव्यापारस्यान्वयेन चैत्रकर्तृकव्यापाराश्रयप्रतियोगिकत्वविशिष्टसंयोगस्य चैत्रेऽ-

ज्ञानादिरूपस्य विषयकत्वस्याभिधायकधातुसमभिव्याहृतद्वितीयायाः प्राचीनमते निरूपकतासंबन्धेन धात्वर्थान्वयि विषयत्वमर्थः। तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनाऽन्वयः। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया घटं जानाति न पटं मित्याद्यावनुपपत्तेस्तत्र विषयित्वार्थकत्वमेव नवीना उपवर्णयन्ति। तत्र च प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन तस्य च धात्वर्थे आश्रयतासंबन्धेनान्वयः। घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयित्वमेव। विषयित्वादौ च द्वितीयाया लक्षणैव न तु शक्तिरिति सांप्रदायिकाः। वस्तुतस्तु विषयितात्वस्य संयोगत्वाद्यपेक्षया आधेयतात्वाद्यपेक्षया चागुरुतया किंधर्मावच्छिन्ने शक्तिः कल्प्यते इत्यत्र विनिगमकं दुर्लभम्। एकस्मिन्प्रयोगे भूयस्त्वमप्यशक्यनिर्णयमिति तत्रापि शक्तिः सिद्ध्यतीत्यवधेयम्।

---

सत्वाच्चैत्रेण गम्यते चैत्र इति न प्रयोगः। एकस्मिन्नेकसंयोगप्रतियोगित्वानुयोगित्वासंभवात्। स्वप्रतियोगित्वविशिष्टसंयोगस्य स्वस्मिन्नसत्वादिति भावः। चैत्रश्चैत्रं गच्छतीत्यपि न प्रयोगः। तत्रापि द्वितीयार्थसंयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसंबन्धेनैव साकाङ्क्षतया द्वितीयान्तलभ्यस्य चैत्रीयत्वविशिष्टसंयोगस्य जनकत्व-स्वाश्रयवृत्तित्वोभयसंबन्धेन क्रियायामन्वयेन चैत्रप्रतियोगिकसंयोगसमानाधिकरणव्यापारस्य चैत्रेऽसत्वादिति प्राहुः। तत्र। विषयतायां। तथा च घटं जानातीत्यत्र घटवृत्तिविषयतानिरूपकज्ञानवानिति बोधः। अनुपपत्तेरिति। निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताकपटवृत्तिविषयत्वाभाववत् अथ च निरूपकत्वसंबन्धेन घटवृत्तिविषयतावद् यद्ज्ञानं तदाश्रय इति बोधस्यानुपपत्तेरित्यर्थः। तत्र च। विषयितायां च। प्रकृत्यर्थस्य। घटादेः। तस्यच। विषयित्वस्य च। धात्वर्थे। ज्ञाने। तथा च घटनिरूपितविषयितावद्ज्ञानाश्रय इति बोधः। तत्रापि। विषयित्वेपि। बोध्यते इति। तथा च चैत्रवृत्तिज्ञानीयविषयतावान्घट इति बोधः। लौकिकविषयत्वमिति। तथा च घटं पश्यतीत्यत्र घटनिरूपितलौकिकचाक्षुषविषयिताशालिज्ञानवानिति बोधः। लौकिकविषयत्वमिति। तथा च घटो दृश्यते इत्यत्र चाक्षुषप्रत्यक्षनिरूपितलौकिकविषयताश्रयो घट इति बोधः। लौकिकत्वनिवेशस्य फलमाह। उपनीतेति। ज्ञानलक्षणप्रत्यासत्तिरुपनयः।

चैत्रेण ज्ञायते घट इत्यादौ कर्माख्यातस्थले आख्यातेन घटादौ धात्वर्थनिरूपितविषयत्वं बोध्यते। चाक्षुषत्वाद्यवच्छिन्नवाचक दृश्यादि-समभिव्याहृतद्वितीयाया लौकिकविषयित्वं तादृशकर्माख्यातस्य लौकिक-विषयत्वमर्थः। उपनीतसौरभादिविषयकसुरभिचन्दनमित्याकारकचाक्षु-षादिदशायां सौरभं पश्यतीति सौरभं दृश्यते इत्याद्यप्रयोगात्।

अथैवं पुष्पं जिघ्रतीत्यादिप्रयोगानुपपत्तिः। घ्राणजप्रत्यक्षस्य पुष्पाद्यंशे लौकिकत्वविरहात्। तादृशधातुयोगे विषयित्वादिसामान्यस्य कर्मप्रत्ययार्थत्वे गन्धसाक्षात्कारे उपनयमर्यादयाऽऽकाशादिभाने आकाशं जिघ्रतीतिप्रयोगप्रसंगेन तत्रापि लौकिकविषयिताया एव कर्मप्रत्ययार्थ-तयोपगन्तव्यत्वादिति चेन्न। घ्राधातोर्हि गन्धलौकिकप्रत्यक्षत्वं शक्य-तावच्छेदकं घ्रागन्धोपादाने इत्यनुशासनात्। तत्समभिव्याहृतद्वितीया-याश्चाधेयत्वमेवार्थः। तस्य च व्युत्पत्तिवैचित्र्येण गन्धादिरूपधात्वर्थैक-देशेनाऽन्वयः।

---

सा च चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिविषयत्वरूपा। तादृशप्रत्यासत्ति-जन्यज्ञानविषयः उपनीतः। एवं। लौकिकत्वनिवेशे। प्रयोगानुपपत्तिरिति। पुष्पनिरूपितलौकिकविषयिताया घ्राणेन्द्रियजन्यप्रत्यक्षेऽसत्त्वादित्यर्थः। तत्र हेतुमाह। घ्राणजप्रत्यक्षस्येति। घ्राणेन्द्रियजन्यप्रत्यक्षविषयिताया इत्यर्थः। लौकिकालौकिकसाधारणविषयितानिवेशे त्वाह। तादृशेति। आकाशादिभाने। अत्राकाशे गन्ध इति प्रत्यक्षे। तत्रापि। पुष्पं जिघ्रतीत्यत्रापि। उपगन्तव्य-त्वादिति। तथा च पुष्पं जिघ्रतीतिप्रयोगानुपपत्तिरिति भावः। गन्धप्रत्यक्ष-त्वमिति। गन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षत्वमित्यर्थः। तत्सम-भिव्याहृतेति। घ्राधातुसमभिव्याहृतेत्यर्थः। तस्य च। आधेयत्वस्य च। व्युत्पत्तिवैचित्र्येणेति। घ्राधात्वर्थगन्धातिरिक्तपदार्थेनेत्यर्थादित्यर्थः। एवं। द्वितीयाया आधेयतार्थकत्वे। तादृशेति। सविषयेत्यर्थः। कर्मप्रत्ययस्यैवेति। एवकारेण विषयावच्छिन्नसविषयकवस्त्वभिधायकधातुसमभिव्याहृतकर्मप्रत्ययस्य व्यवच्छेदः। तदर्थकत्वनियमादिति। विषयित्वार्थकत्वनियमादित्यर्थः। अस्य च। घ्राधातोस्तु। घ्रागन्धोपादान इत्यनुशासनबलेनेति शेषः। तादृशनियमस्य। सविषयकार्थबोधकधातुसमभिव्याहृतकर्मप्रत्ययस्य विषयितार्थकत्वनियमस्य। अबाधितत्वादिति। प्राप्तेरभावादित्यर्थः। आमोदपदार्थाधेयत्वस्य। आमोद-

एवं च पुष्पं जिघ्रतीत्यादितः पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावा नित्याकारक एव बोधः। न तु पुष्पनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इत्याकारक इति नानुपपत्तिः। न चैवं मविषयार्थबोधकधातुसमभिव्याहृतकर्मप्रत्ययस्य विषयितार्थकत्वनियमभंगप्रसंग इति वाच्यम्। विषयानवच्छिन्नतादृशवस्त्वभिधायकधातुसमभिव्याहृतकर्मप्रत्ययस्यैव तदर्थकत्वनियमात्। अस्य च गन्धात्मकविषयावच्छिन्नप्रत्यक्षवाचकतया तादृशनियमस्यावाधितत्वात्। न च घ्राधातुसमभिव्याहृतद्वितीयाया गन्धान्विताधेयत्वार्थकत्वे आमोदमुपजिघ्रतीत्यादेरनुपपत्तिः। गन्धविशेषरूपामोदपदार्थाधेयत्वस्य गन्धे बाधादिति वाच्यम्। विषयावच्छिन्नप्रत्यक्षार्थकघ्राधातुसमभिव्याहृतद्वितीयाया एवाधेयत्वार्थकत्वनियमात्, तत्र विषयानवच्छिन्नस्यैव प्रत्यक्षविशेषस्य लक्षणया घ्राधात्वर्थतोपगमेन विषयिताया तदर्थत्वात्।

---

वृत्तिस्त्वस्य। द्वितीयाया एवेति। एवकारेण विषयानवच्छिन्नतादृशद्वितीयाया व्यवच्छेदः। तत्र। आमोदमुपजिघ्रति इत्यत्र तु इत्यर्थः। विषयानवच्छिन्नस्यैवेति। गन्धात्मकविषयानवच्छिन्नस्यैवेत्यर्थः। प्रत्यक्षविशेषस्य। लौकिकविषयताशालिप्रत्यक्षविशेषस्येत्यर्थः। विषयिताया एवेति। एवकारेणाधेयताव्यावृत्तिः। तदर्थत्वात्। द्वितीयार्थत्वात्। तथाचाऽऽमोदनिरूपितलौकिकविषयिताश्रयज्ञानवानिति बोधः। समवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नप्रकारतैवेति। एवकारेण विषयिताया व्यावृत्तिः। तादृशप्रकारता च पुष्पादिनिष्ठा। तस्याश्च। तादृशप्रकारतायाश्च। तथा च समवायसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नपुष्पनिष्ठप्रकारितानिरूपितगन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इति बोधः। तेन। आधेयतायां समवायसंबन्धावच्छिन्नत्वनिवेशेन। प्रत्ययस्य। एतत्कालवृत्तिः पुष्पवृत्तिर्गन्धइत्याकारकस्य। तादृशज्ञानीयगन्धादिविषयितायां। घ्राधात्वर्थप्रत्यक्षनिष्ठगन्धनिरूपितलौकिकविषयितायां। कालादिप्रकारतानिरूपितत्वविरहादिति। समवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नकालादिनिष्ठप्रकारतानिरूपितत्वविरहादित्यर्थः। कालनिरूपितगन्धनिष्ठाधेयतायाः कालिकसंबन्धावच्छिन्नत्वादिति भावः। अतएव। वस्तुतस्तु कल्पादरादेव। उपाधिनिष्ठगन्धग्रहतात्पर्येणैव। मृत्तिका पुष्पादिनिष्ठगन्धग्रहणतात्पर्येणैव। आनने गन्धः वायौ गन्ध इति मृत्तिकापुष्परूपो-

वस्तुतस्तु पुष्पं जिघ्रतीत्यादौ समवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नप्रकारतैव द्वितीयार्थः। तस्याश्च गन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयितायां निरूपितत्वसंबन्धेनाऽन्वयः। तेन इदानींतनपुष्पे गन्ध इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकारकत्वेपि तादृशप्रत्यक्षदशायां न कालं जिघ्रतीत्यादिप्रयोगः। तादृशज्ञानीयगन्धादिविषयितायां कालादिप्रकारतानिरूपितत्वविरहात्। अतएव "तदाननं मृत्सुरभिक्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ" आघ्रातवान् गन्धवहं सुगन्धमित्यादौ च उपाधिनिष्ठगन्धग्रहतात्पर्येणैव जिघ्रतेः प्रयोगात्।

तादृशगन्धे चाऽऽननगन्धवहादिवृत्तित्वस्य बाधेऽपि न क्षतिः। तादृशगन्धस्याननाद्यवृत्तित्वेपि आनने गन्ध इत्याकारकबोधीयगन्धविषयिताया आननादिप्रकारतानिरूपितत्वेन वाक्यार्थाबाधात्। वाय्वानीतचम्पकगन्धस्य यत्र वाय्वादिवृत्तित्वेनैव ग्रहः, चम्पकं जिघ्रतीति प्रयोगो नेष्यते एव।

यत्तु आधेयतामात्रं द्वितीयार्थः, न तु समवायावच्छिन्नत्वविशेषितमाधेयत्वम्। तथा च मुखादिसंसृष्टमृत्तिकागन्धे परंपरासंबन्धेन मुखादिवृत्तित्वस्य सत्वान्न तादृशस्थलेऽनुपपत्तिरिति। तदसत्। तथासति कालं जिघ्रतीति प्रयोगस्य दुर्वारत्वात्।

---

पाधिवृत्तिगन्धविषयकभ्रमात्मकप्रतीतेर्जायमानत्वेन आननवाय्वादिनिष्ठा या समवायसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नप्रकारता तन्निरूपितत्वस्य गन्धनिरूपितलौकिकविषयितायां सत्वान्न काचिदनुपपत्तिरिति भावः। द्वितीयाया आधेयत्वार्थकत्वे पूर्वकल्पे" घ्राधातोर्गन्धविषयकलौकिकप्रत्यक्षार्थकत्वे च मृत्तिकासमवेतगन्धस्य गन्धमात्रस्य च क्रमेण आनने वायौ च समवायेन वृत्तित्वविरहात्, आननवृत्तिमृत्तिकासमवेतगन्धविषयकलौकिकप्रत्यक्षबोधने, एवं वायुवृत्तिपुष्पादिसमवेतगन्धविषयकलौकिकप्रत्यक्षबोधने चोक्तवाक्यद्वयस्य नाप्रामाण्यमित्याह। न क्षतिरिति। नाप्रामाण्यमित्यर्थः। अप्रमाण्यविरहे हेतुमाह। तादृशगन्धस्येति। मृत्तिकापुष्पादिसमवेतगन्धस्येत्यर्थः। गन्धविषयितायाः। गन्धनिरूपितलौकिकविषयितायाः। आननादिप्रकारतानिरूपितत्वेनेति। भ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नप्रकारतानिरूपित-

पुष्पमाघ्रायते इत्यादौ च निरुक्तप्रकारत्वमाख्यातार्थः। आश्रयतासंबन्धेन पुष्पाद्यन्विते तस्मिन् धात्वर्थप्रत्यक्षस्य निरूपितत्वसंबन्धेन तद्विशेषणतापन्नगन्धविषयतायाश्च तादृशसंबन्धेनाऽन्वयः। एकधर्मिविशेषणतयोपस्थितस्य स्वातन्त्र्येणान्यविशेषणतयाऽन्वयबुद्धेरेवाऽव्युत्पन्नत्वात्। अत्र च प्रत्यक्षपारतन्त्र्येणैव गन्धविषयिताया आख्यातार्थेऽन्वयेन व्युत्पत्तिविरोधविरहात्।

अस्तु वा गन्धः लौकिकविषयिता प्रत्यक्षं च विशकलितमेव धात्वर्थः। कर्त्राख्यातादिसमभिव्याहारे गन्धविषयितायाः प्रत्यक्षविशेषणतया कर्माख्यातसमभिव्याहारस्थले च प्रत्यक्षविशेष्यतयेति न कश्चिद्दोषः। जिघ्रत्यर्थगन्धविषयितानिरूपितनिरुक्तप्रकारितानिरूपकत्वमेव पुष्पादिनिष्ठं जिघ्रातिकर्मत्वमिति दिक्।

---

त्वेनेत्यर्थः। चम्पकगन्धस्य। चम्पकावयवसमवेतगन्धस्य। वायुवृत्तित्वेनैव-ग्रहः। वायौ गन्ध इत्याकारकः। एवकारेण चम्पके गन्ध इत्यस्य व्यावृत्तिः। नेष्यते एवेति। चंपके तादृशप्रकारताविरहादिति भावः। वायुं जिघ्रतीत्येव प्रयोगः इष्टः। परंपरासंबन्धेन। स्वसमवायिसंयुक्तत्वसंबन्धेन। स्वं गन्धः। तादृशस्थले। तदाननमृत्सुरभि" इत्यादिस्थले। दुर्वारत्वादिति। कालिकसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नकालनिष्ठप्रकारतानिरूपितत्वस्य गन्धनिरूपितलौकिकविषयितायां सत्त्वादिति भावः। कर्माख्यातस्थले विशेषमाह। निरुक्तप्रकारत्वं। समवायसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नप्रकारत्वम्। तस्मिन्। निरुक्तप्रकारत्वे। तद्विशेषणतापन्नगन्धविषयतायाश्चेति। धात्वर्थगन्धनिष्ठलौकिकविषयताशालिप्रत्यक्षविशेषणीभूता या गन्धनिष्ठविषयता तस्याश्चेत्यर्थः। तादृशसंबन्धेन। निरूपितत्वसंबन्धेन। अन्वय इति। तथा च प्रत्यक्षनिरूपिता या गन्धनिष्ठविषयता तन्निरूपितसमवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नप्रकारताश्रयं पुष्पमिति बोधः। ननु प्रत्यक्षविशेषणीभूतविषयताया निरूपितत्वसंबन्धेन प्रकारताविशेषणत्वे एकत्र विशेषणत्वेनोपस्थितस्येत्यादिनियमविरोध इत्यत आह। एकधर्मीति। एकत्र विशेषणतापन्नस्यान्यत्र स्वातन्त्र्येण विशेषणत्वायोगादिति नियमः। प्रकृते च न स्वातन्त्र्येण विशेषणमित्याह। अत्र चेति। पुष्पमाघ्रायते इत्यत्र चेत्यर्थः। आख्यातार्थे। प्रकारत्वे। कर्त्राख्यातादिसमभिव्याहारे। पुष्पं जिघ्रतीत्यत्र।

अथ दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयितार्थकत्वे सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयिताशालिचाक्षुषाद्यप्रसिद्ध्या आकाशं न पश्यतीत्यादौ चाकाशादिनिरूपितलौकिकविषयिताया अप्रसिद्ध्या तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाप्रसिद्धिः। न च सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयित्वाभावः चाक्षुषादौ प्रतीयते इति वाच्यम्। एवमपि आकाशादिनिरूपितलौकिकविषयित्वाऽप्रसिद्ध्या आकाशं न पश्यतीत्यादावप्रतीकारात्। न च लौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावः प्रतीयते इति वाच्यम्। वृत्त्यनियामकसंबन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशाभावाप्रसिद्धेः।

---

गन्धविषयितायाः। गन्धनिरूपितविषयितायाः। प्रत्यक्षविशेषणतया। अन्वय इत्यग्रिमेणान्वयः। पुष्पवृत्तिगन्धनिरूपितविषयिताशालिप्रत्यक्षाश्रय इति बोधादिति भावः। कर्माख्यातसमभिव्याहारस्थले च। पुष्पमाघ्रायते इत्यत्रच अन्वय इति स्ववृत्तिप्रत्यक्षीयगन्धनिरूपितविषयितानिरूपिताधेयतासंबन्धावच्छिन्नप्रकारताश्रयः पुष्पमिति बोधादिति भावः।

चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिपदसमभिव्याहृतद्वितीयाया लौकिकविषयित्वमर्थ इत्युक्तं तत्राशङ्कते। अथेति। चाक्षुषाद्यप्रसिद्ध्या। अस्य तादृशविषयताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाप्रसिद्धिरित्यनेनान्वयः। सौरभनिरूपितलौकिकविषयितायाः घ्राणजप्रत्यक्षे प्रसिद्धाया अभावश्चाक्षुषादौ प्रतीयतामित्याशंकते। नचेति। चाक्षुषादौ प्रतीयते इति। तथा च सौरभनिरूपितलौकिकविषयित्वाभाववच्चाक्षुषमिति बोधः। एवमपि। सौरभं न पश्यतीत्यत्र चाक्षुषे सौरभनिरूपितलौकिकविषयित्वाभावोपपादनेन वाक्यार्थबोधसमर्थनेपि। प्रतीयते इति। तथा च निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभाववल्लौकिकविषयिताशालिचाक्षुषप्रत्यक्षाश्रय इति बोधः। तादात्म्यस्य वृत्त्यनियामकस्यापि भेदप्रतियोगितावच्छेदकत्वादाह। संसर्गाभावेति। एतेन। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वेन। तत्र। आकाशं न पश्यतीत्यादौ। प्रतीयते इति। तथा च निरूपकतासंबन्धावच्छिन्नप्रतियोगिताकचाक्षुषादिवृत्तिलौकिकविषयित्वाभाववानाकाश इति

एतेन निरूपकतासंबन्धेन चाक्षुषादिनिष्ठलौकिकविषयितायाअभावस्तत्राकाशादौ प्रतीयते इति निरस्तम्। अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यतायाः सर्वानुभवसिद्धाया भङ्गप्रसङ्गाच्च। चाक्षुषादिनिष्ठविषयितात्वावच्छिन्नस्य पदाद्वाक्याच्चानुपस्थितत्वेन तदभावस्याकाशादौ भानाऽसंभवाच्च। भावान्वयबोधे च लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानात्। अभावान्वयबोधे चाक्षुषप्रकारेण तस्या भानमयुक्तम्।

अस्तु वा वृत्त्यनियामकोऽपि संबन्धोऽभावप्रतियोगितावच्छेदकस्तथापि निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकस्य विषयिताविशेषनिष्ठाकाशाद्यभावस्य भानोपगमो न संभवति। तथा सति आकाशं पश्यति चैत्र इत्याकारकवाक्यजन्यबोधदशायां आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधप्रसंगात्। आकाशं पश्यति मैत्र इति भ्रमदशायां आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधस्य दुरपन्हवतया लौकिकविषयितात्वसामानाधिकरण्येनैव तदभावबोधकं तद्वाक्यमुपगन्तव्यम्। तादृशबोधश्च लौकिकविषयितात्वसामानाधिकरण्यमात्रेणैवाकाशादिनिरूपितत्वाभावावगाहिदर्शितयोग्यताज्ञानाप्रतिबध्य एव।

---

बोधः। दोषान्तरमाह। भङ्गप्रसङ्गाच्चेति। आकाशस्य प्रथमान्तत्वाभावादिति भावः। अनुपस्थितत्वेनेति। दृश्धातोश्चाक्षुषे शक्तिः। लौकिकविषयत्वं द्वितीयार्थः। विशिष्टोपस्थापकाभावादिति भावः। तदभावस्य। चाक्षुषादिवृत्तिविषयित्वाभावस्य। दोषान्तरमाह। भावान्वयबोधे इति। आकाशं पश्यतीत्यत्र आकाशनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इति लौकिकविषयिताप्रकारकबोधे इत्यर्थः। अभावान्वयबोधे च। चाक्षुषप्रत्यक्षनिष्ठलौकिकविषयित्वाभाववानाकाश इति बोधे च। तस्याः। लौकिकविषयितायाः। न भानमस्ति किन्तु चाक्षुषविशेष्यतया भानात्प्रतियोग्यभावान्वयो चेत्यादिनियमविरोध इति भावः। विषयिताविशेषः। लौकिकविषयिता। तथा सति। आकाशं न पश्यति चैत्र इत्यत्र लौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावभाने सति। शाब्दबोधप्रसङ्गादिति। सामानाधिकरण्येन तदभावनिश्चयस्य सामानाधिकरण्येन तद्वत्ताबुद्ध्यविरोधित्वादिति भावः। अविरोधित्वमुपपादयति। आकाशं

न च चैत्रीयचाक्षुषादिवृत्तिलौकिकविषयितात्वावच्छेदेनैव तादृशाभावो दर्शितवाक्येन प्रत्याय्यते इति चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितायां आकाशीयत्वाद्यवगाहिचैत्र आकाशं पश्यतीति वाक्यजन्यबोधः प्रतिबध्नात्येव तादृशवाक्यजन्यधियमिति वाच्यम्। तादृशविषयितात्वेन विषयितायाः अनुपस्थितेस्तदवच्छेदेनाभावप्रत्यायनासंभवात्। चैत्र आकाशं पश्यतीतिवाक्यजन्यबोधे चैत्रांशे दर्शनाश्रयत्वं विशेषणम्, दर्शनांशे लौकिकविषयिताविशेषणमिति रीत्यैव पदार्थानां भानात्, चैत्रीयचाक्षुषादिनिष्ठलौकिकविषतात्वं नाकाशादिधर्मितावच्छेदकं किन्तु शुद्धलौकिकविषयितात्वमेवेति तस्य शुद्धलौकिकविषयितात्वावच्छेदेनाकाशाद्यभावावगाहिज्ञानं प्रत्येव प्रतिबन्धकतया निरुक्तधर्मावच्छेदेनाकाशाद्यभावावगाहिज्ञानस्य तदप्रतिबध्यत्वाच्च।

एतेन तत्राऽऽकाशादिपदस्याकाशादिनिरूपितत्वार्थकतां स्वीकृत्य द्वितीयायाः खण्डशो निरुपितत्व-लौकिकविषयितात्वोभयार्थकतां वा स्वीकृत्य लौकिविषयितायां आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकतदभावबोधोपगमेपि न निस्तारः। घट आकाशं न पश्यतीत्यादौ नितरामेवागतिः।

---

पश्यति मैत्र इत्यादीति। दुरपन्हवतयेति। आवश्यकतयेत्यर्थः। तदुपपत्त्यर्थमिति शेषः। लौकिकविषयतात्वसामानाधिकरण्येनैवेति। एवकारेणाऽवच्छेदावच्छेदेन लौकिकविषयतात्वस्य व्यावृत्तिः। तदभावबोधकं। निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावबोधकम्। तद्वाक्यं। आकाशं न पश्यति चैत्र इति वाक्यं। उपगन्तव्यमिति। आकाशं न पश्यति चैत्र इत्यादिवाक्यजन्यबोधस्य लौकिकविषयितात्वावच्छेदेन निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावविषयकत्वं न संभवति लौकिकविषयितात्वसामानाधिकरण्येनाकाशप्रकारकज्ञानस्य प्रतिबन्धकस्य सत्वात्। अवच्छेदावच्छेदेन तदभाववत्ताबुद्धिं प्रति सामानाधिकरण्येन तद्वत्तानिश्चयस्य प्रतिबन्धकत्वादिति भावः। आकाशं न पश्यति चैत्र इति वाक्यजन्यबोधस्य (लौकिकविषयितात्वसामानाधिकरण्येनाकाशाभावप्रकारकस्य) तु न तद्वत्ता निश्चयप्रतिबध्यत्वमित्याह। तादृशबोधश्चेति। आकाशं न पश्यतीतिवाक्यजन्यलौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभाव-

प्रकारकबोधश्चेत्यर्थः। दर्शितयोग्यताज्ञानाप्रतिबध्य एवेति। दर्शितयोग्यताज्ञानं। आकाशं पश्यति मैत्र इत्याकारकं। तदप्रतिबध्य एवेत्यर्थः। सामानाधिकरण्येन तदभाववत्ताबुद्धौ अवच्छेदावच्छेदेनैव तद्वत्तानिश्चयस्य प्रतिबन्धकत्वादिति भावः। तथा चाऽऽकाशं पश्यति चैत्र इत्याकारकबोधदशायामपि आकाशं न पश्यति चैत्र इति वाक्यजन्यबोधप्रसंगो दुर्वार एवेति भावः। लौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावस्य भानाऽसंभवादाकाशं न पश्यतीत्यादावप्रतीकार एवेति ध्येयम्।

आकाशं पश्यति चैत्रः इति भ्रमदशायां आकाशं न पश्यति चैत्र इति वाक्याच्छाब्दप्रसङ्गो नास्तीत्याशंकते। न चेति। चैत्रीयचाक्षुषलौकिकविषयितात्वावच्छेदेनैवेति। एवकारेण लौकिकविषयितात्वस्य व्यावृत्तिः। तादृशाभावः। निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावः। दर्शितवाक्येन। आकाशं न पश्यति चैत्र इति वाक्येन। प्रत्याय्यते इति। तथा च निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभाववती या चैत्रीयचाक्षुषवृत्तिलौकिकविषयिता तच्छालिप्रत्यक्षाश्रयश्चैत्र इति बोधः। वाक्यजन्यबोधः। निरूपितत्वसंबन्धेनाकाशवती या चैत्रीयचाक्षुषवृत्तिलौकिकविषयिता तच्छालिप्रत्यक्षाश्रय इत्याकारकः। प्रतिबध्नात्येवेति। चैत्रीयचाक्षुषनिष्ठलौकिकविषयितात्वावच्छेदेनाकाशाभावबुद्धौ चैत्रीयचाक्षुषनिष्ठलौकिकविषयितात्वसामानाधिकरण्येन तादृशविषयितात्वावच्छेदेन वाऽऽकाशावगाहिनिश्चयस्य प्रतिबन्धकत्वादिति भावः। तादृशवाक्यजन्यधियमिति। आकाशं न पश्यति चैत्र इति वाक्यजन्यां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावप्रकारकचैत्रीयचाक्षुषवृत्तिलौकिकविषयिताधर्मिकांधियमित्यर्थः। आशंकां निरस्यति। तादृशविषयितात्वेन। चैत्रीयचाक्षुषवृत्तिलौकिकविषयितात्वेन। विषयितायाः। लौकिकविषयितायाः। तदवच्छेदेन। चैत्रीयचाक्षुषवृत्तिलौकिकविषयितात्वावच्छेदेन। अभावप्रत्यायनाऽसंभवादिति। निरूपितत्वसंबन्धेनाकाशप्रत्यायनाऽसंभवादित्यर्थः। एवं च सति लौकिकविषयितात्वसामानाधिकरण्येनैवाकाशाभावान्वये आकाशं पश्यति चैत्र इति भ्रमदशायां आकाशं न पश्यति चैत्र इति वाक्याच्छाब्दबोधप्रसंगो दुर्वार इति भावः। चैत्रीयचाक्षुषवृत्तिलौकिकविषयितात्वावच्छेदेनाऽऽकाशाभावप्रत्यायनेपि न प्रतिबध्यप्रतिबन्धकभावोपपत्तिरित्याह। चैत्र आकाशं पश्यतीति। तस्य। आकाशं पश्यति चैत्र इतिवाक्यजन्यबोधस्य।

यत्तु नञर्थस्य द्विधा भानोपगमेन आकाशाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववान् घट इत्याकारकस्तत्रान्वयबोध इति। तदपि न। तथा सति चैत्रो घटं न पश्यति मैत्र आकाशं न पश्यतीत्यादि वाक्यजन्यशाब्दबोधादविलक्षणबोधस्य सर्वानुभवसिद्धस्य तादृशवाक्याद्नुपपत्तेः। नहि तत्रापि तादृश एव शाब्दबोधः। तथा सति चैत्रो यदा घटादिकं न पश्यति अपि तु पटादिकमेव तदा घटाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावस्य तत्र बाधाच्चैत्रो घटं न पश्यतीति प्रयोगानुपपत्तेः। यदा च भावमात्रं पश्यति तदा भावानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावसत्वाद् भावं न पश्यति चैत्र इति प्रयोगापत्तेश्च।

---

निरुक्तधर्मावच्छेदेन। चैत्रीयचाक्षुषवृत्तिलौकिकविषयितात्वावच्छेदेन। तदप्रतिबध्यत्वाच्चेति। आकाशं पश्यति चैत्र इति ज्ञानाप्रतिबध्यत्वाच्चेत्यर्थः। सामान्यवत्तानिश्चयस्य सामान्यघटितविशेषाभाववत्ताबुद्ध्यप्रतिबन्धकत्वादिति भावः। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वपक्षेपि लौकिकविषयितायामाकाशाभावोपपादयतां मतमुपन्यस्य निरस्यति। एतेनेति। चैत्र आकाशं पश्यतीतिवाक्यजन्यबोधदशायां आकाशं न पश्यति चैत्र इति वाक्याच्छाब्दबोधप्रसङ्गेनेत्यर्थः। तत्र। आकाशं न पश्यति चैत्र इत्यत्र। न निस्तार इति। लौकिकविषयितात्वावच्छेदेनाकाशनिरूपितत्वाभावः आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताको बोधयितुमशक्यः, विरोधिन आकाशं पश्यति चैत्र इति निश्चयस्य सत्वात्, विषयितात्वसामानाधिकरण्येनाकाशनिरूपितत्वाभावबोधने तु उक्तप्रतिबध्यप्रतिबन्धकभावानुपपत्तिरूपो दोष इति भावः। नितरामेवागतिरिति। आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशनिरूपितत्वाभाववल्लौकिकविषयितावच्चाक्षुषाश्रयत्वस्य घटे बाधादिति भावः। तत्र। घट आकाशं न पश्यतीत्यत्र। तथासति। नञर्थस्य द्विधा भानोपगमे सति। तादृशवाक्यात्। घट आकाशं न पश्यतीति वाक्यात्। अनुभवसिद्ध इति। बाधकाभावादिति शेषः। तत्रापि। चैत्र आकाशं न पश्यतीत्यादावपि। तादृशएवशाब्दबोधइति। घटादिनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववांश्चैत्र इति बोध इत्यर्थः। एवकारेण घटादिनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वा-

एवमाकाशं न पश्यति घट इत्यादौ आकाशाद्यनिरूपितलौकिक-विषयिताशालिचाक्षुषाश्रयत्वाभावस्य वाक्यार्थत्वे यदाऽऽकाशाद्यति-रिक्तपदार्थविषयकचाक्षुषाश्रयत्वभ्रमो घटादौ तदाऽऽकाशाद्यनिरूपित-लौकिकविषयिताशालिचाक्षुषाश्रयत्वनिश्चयरूपप्रतिबन्धकसत्त्वेन तादृश-वाक्यजन्यशाब्दबोधानुपपत्तिः। यथा चैत्रो घटं पश्यतीत्यादिनिश्चय-दशायां पटं न पश्यति चैत्र इत्यादिवाक्यजन्यशाब्दबोधोत्पादोऽनुभव-सिद्धः, तथैवोक्तभ्रमदशायामाकाशं न पश्यति घट इत्यादिवाक्यजन्य-शाब्दबोधोत्पादोपीति न तत्रेष्टापत्तिः संभवति।

यद्वाऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेनाकाशादिविषयकत्व-घटादिवृत्तित्वोभयाभाव एवाऽऽकाशं न पश्यतीतिवाक्यात्प्रतीयते। उपनीताकाशादिविषयकचाक्षुषे आकाशादिविषयकत्वचैत्रादिवृत्तित्वो-भयसत्त्वेन चैत्र आकाशं न पश्यतीत्यादिप्रयोगानुपपत्तिः, घटादौ तादृशचाक्षुषाद्याश्रयत्वभ्रमदशायां घट आकाशं न पश्यतीति वाक्या-च्छाब्दबोधानुपपत्तिश्चेत्यलौकिकविषयिताशून्यत्वेन चाक्षुषादिकं विशेषितम्। आकाशादिविषयकचाक्षुषाद्युपनीतभानस्यापितरांशे लौकिकत्वात्तादृशानुपपत्तितादवस्थ्यमतो लौकिकत्वविशेषणमुपेक्षितम्। अत्रालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छिन्नस्य घटं न पश्यतीत्यादौ शक्त्या धात्वर्थत्वासंभवेपि प्रकृते तस्यैव लक्षणया धात्वर्थत्वमुपेयते, विषयितासामान्यमेव तत्र द्वितीयार्थः। निरूपकत्वमपि लक्षणया तदर्थः। आश्रयत्वं द्वित्वं निरूपकत्वं चाख्यातार्थः। आश्रयत्वे व्युत्पत्ति-वैचित्र्यात्प्रथमान्तपदार्थघटादेस्तस्य च निरूपकत्वे विशेषणतयाऽन्वयः। तादृशनिरूपकत्वद्वितीयान्तार्थाकाशादिविषयकत्वयोश्च प्रकारतया द्वित्वा-न्वयः। द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंबन्धेन तादृशोभयस्य नञर्था-भावे तस्य चान्वयितावच्छेदकानिरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः। तादृशधात्वर्थश्च प्रकृते मुख्यविशेष्यतयैव भासते।

---

भाववांश्चैत्र इत्यस्य व्यावृत्तिः। तत्र। चैत्रे। नञर्थस्य द्विधाभाने दोषा-न्तरमाह। यदाचेति। भावानिरूपितेति। भावनिरूपितत्वाभाववदित्यर्थः। दोषान्तरमप्याह। एवमिति। तादृशवाक्यजन्येति। घट आकाशं न पश्यतीति वाक्यजन्येत्यर्थः। शाब्दबोधानुपपत्तिरिति। आकाशविषयक-

अथवा स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकता-संबन्धेन धात्वर्थस्य तादृशोभयाभावेऽन्वयः। तस्य चाख्यातार्थनिरूपकत्वे, तस्य च प्रथमान्तपदार्थे घटादौ, घटादेः प्रतियोगितावच्छेदकघटकतया तादृशाभावनिरूपकत्वात्। एवं चान्वयबोधस्य प्रथमान्तपदार्थमुख्यविशेष्यकत्वनियमस्यापि न क्षतिरिति। तदपि न सम्यक्। घटादिविषयकचाक्षुषादेः कालिकादिसंबन्धेन पटादिवृत्तितया पटो घटं न पश्यतीति प्रयोगानुपपत्तेः। आकाशादिविषयकत्वावच्छिन्ने चाक्षुषे कालिकादिसंबन्धेन घटादिवृत्तित्वनिश्चयदशायां घट आकाशं न पश्यतीति प्रयोगानुपपत्तेश्च। समवायेन घटादिवृत्तित्वाकाशादिविषयकत्वोभयाभावस्यैव स्वीकरणीयतया अभाव आकाशं न पश्यतीत्यादौ अभावसमवेतत्वाप्रसिद्ध्या वाक्यार्थोऽप्रसिद्धेर्दुर्वारत्वात्। चैत्रादेरतीतचाक्षुषस्य घटादिविषयकत्वेऽपि समयविशेषे चैत्रो घटं न पश्यतीति प्रयोगाद्वर्तमानतादृशचाक्षुषत्वाद्यवच्छेदेनोभयाभावभानस्य प्रतियोगिकोटौ वर्त्तमानत्वमन्तर्भाव्यत्रितयावच्छिन्नाभावभानस्य वा स्वीकरणीयतया यदा किञ्चिदंशे लौकिके घटादिचाक्षुषं तस्य वर्तते तदा चैत्रो घटं न पश्यतीति प्रयोगापत्तेर्दुर्वारत्वाच्च।

चाक्षुषाश्रयत्वभ्रमाभावादिष्टापत्तिर्नसंभवतीति भावः। उक्तभ्रमदशायामपीति। पटविषयकचाक्षुषाश्रयो घट इति भ्रमदशायाम्। शाब्दबोधोत्पादोपीति। अनुभवसिद्ध इति पूर्वेणान्वयः। पटं पश्यति घटः आकाशं न पश्यति घट इत्यादिवाक्यजन्यबोधयोर्विरोधाभावादिति भावः। तत्र। आकाशं न पश्यति घट इति वाक्यजन्यशाब्दबोधानुपपत्तौ। उपनीताकाशादिविषयकचाक्षुषे। इह वियति बलाका इति चाक्षुषे। तादृशचाक्षुषेति। उपनीताकाशादिविषयकचाक्षुषेत्यर्थः। इतरांशे। बलाकांशे। तादृशानुपपत्तितादवस्थ्यमिति। चैत्र आकाशं न पश्यतीति प्रयोगानुपपत्तितादवस्थ्यमित्यर्थः। लौकिकत्वादिति। तथा चेहाकाशे बलाका, इति चाक्षुषे उभयस्यैव सत्वादुक्तचाक्षुषत्वावच्छेदेनोक्तोभयाभावबोधो न संभवतीत्यतो लौकिकविषयिताशून्यत्वनिवेशः। एवं च तादृशसमूहालंबनचाक्षुषे लौकिकविषयिताशून्यत्वविरहान्नानुपपत्तिः। तस्यैव। अलौकिकविषयित्वशून्यचाक्षुषस्यैव। तत्र। घट आकाशं न पश्यतीत्यत्र। तदर्थः। द्वितीयार्थः। तस्य च। आश्रयत्वस्य च। तादृशनिरूपकत्वेति। घटनिष्ठा-

वर्तमानाऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन चैत्रवृत्तित्व-घटविषयकत्वोभयाभावसत्त्वात्। समानेन्द्रियजन्योपनीतभानादौ लौकि-किकप्रत्यक्षसामग्र्या विरोधित्वस्य निष्प्रामाणिकतया लौकिकविषयितानि-यामकोपनायकज्ञानादिसमवहिततल्लौकिकसन्निकर्षाद्, घटादिनिरूपित-लौकिकालौकिकोभयविषयिताशालिवर्तमानचाक्षुषादेरप्युत्पत्त्या तादृश-चाक्षुषादिदशायामुक्तप्रयोगापत्तेः। आकाशादिनिरूपिताऽलौकिकविष-यिताशालिवर्त्तमानचाक्षुषाद्यंशे घटादिवृत्तित्वस्याकाशीयत्वादिना लौकि-कविषयितायाश्च भ्रमदशायां घट आकाशं न पश्यतीत्यादिवाक्याच्छा-ब्दबोधापत्तेर्दुर्वारत्वाच्च।

---

श्रयतानिरूपकत्वेत्यर्थः। अत्र निरूपकत्वं घटवृत्तित्वरूपमेव। तस्य च। अभावस्य च। निरुक्तधर्मावच्छेदेन। अलौकिकविषयिताशून्यचाक्षुषत्वा-वच्छेदेन। धात्वर्थे। चाक्षुषप्रत्यक्षे। तथा च घटनिष्ठाश्रयतानिरूपकत्वाऽऽ-काशविषयकत्वोभयाभाववदलौकिकविषयिताशून्यचाक्षुषमिति बोधः। प्रथ-मान्तार्थमुख्यविशेष्यकबोधानुरोधेनाह। अथवेति। स्वनिष्ठेति। स्वं धात्वर्थः अलौकिकविषयिताशून्यप्रत्यक्षं तन्निष्ठो योऽन्योन्याभावः घटवृत्तित्वाऽऽकाश-विषयकत्वोभयाभाववान्नेति भेदस्याऽसत्त्वादभावान्तरीयप्रतियोगितानवच्छेद-कत्वादुभयाभावस्य व्यापकत्वं बोध्यम्। तस्य। उक्तोभयाभावस्य। तस्य। निरूपकत्वस्य। घटादौ। अन्वय इति पूर्वेण संबन्धः। तथा चालौकिक-विषयिताशून्यचाक्षुषप्रत्यक्षव्यापकघटवृत्तित्वाकाशविषयकत्वोभयाभावनिरूपको घट इति बोधः। प्रतियोगितावच्छेदकघटकतयेति। निरुक्तोभयाभाव-प्रतियोगितावच्छेदकघटकतयेत्यर्थः। तादृशाभावनिरूपकत्वादिति। निरुक्तो-भयाभावप्रतियोगितानिरूपितवृत्तितात्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसंब-न्धावच्छिन्नावच्छेदकतावत्वादित्यर्थः। एतादृशावच्छेदकतावत्वमेव प्रकृते निरूपकत्वम्। इति प्रयोगानुपपत्तेरिति। अलौकिकविषयिताशून्यचाक्षुषे पटवृत्तित्वघटविषयकत्वोभयस्यैव सत्वादिति भावः। समयविशेषे। यदा घटप्रत्यक्षं नास्ति तदा। वर्तमानतादृशचाक्षुषत्वावच्छेदेनेति। वर्तमान-लौकिकविषयिताशून्यचाक्षुत्वावच्छेदेनेत्यर्थः। त्रित्वावच्छिन्नाभावस्य वेति। वर्तमानत्वचैत्रवृत्तित्वपटविषयकत्वैतत्त्रित्वावच्छिन्नाभावस्य वेत्यर्थः। यदा किंचिदंशे। आकाशांशे। तस्य। चैत्रस्य। चैत्रो घटं न पश्यतीत्यत्र

घटादिनिरूपितालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन घटादि-विषयत्वघटितोभयाभावभानोपगमेऽप्यनिस्तारात् । एतेनाऽऽख्यातार्थ-वर्तमानत्वाद्यवच्छिन्नसमवायावच्छिन्नाश्रयत्वत्वाद्यवच्छिन्ने आकाशादि-विषयकप्रतियोगिकत्व लौकिकान्यविषयिताशून्यचाक्षुषप्रतियोगिकत्व घटाद्यनुयोगिकत्वैतत्त्रितयत्वावच्छिन्नाभावो भासते । अतः अभावः आकाशं न पश्यतीत्यादौ नानुपपत्तिः । तत्र विषयितावत्प्रतियोगिकत्वं द्वितीयार्थः । निरुक्तचाक्षुषप्रतियोगिकत्वं त्रित्वं च धातोरर्थः । घटाद्य-नुयोगिकत्वं च प्रथमान्तार्थः इत्यपि निरस्तम्, इति चेत्, अगत्या घट आकाशं न पश्यति इत्यादिवाक्यानामप्रामाण्यमुपगन्तव्यमिति ।

इति द्वितीयाप्रथमखण्डः ॥

---

अलौकिकविषयिताशून्यचाक्षुषे चैत्रवृत्तित्वघटविषयकत्वोभयाभावभाने दोषान्तरमाह । समानेन्द्रियजन्योपनीतभानादाविति । सुरभिचन्दन-मित्यादावित्यर्थः । उपनायकज्ञानादिसमवहितेति । ज्ञानलक्षणासमवहि-तेत्यर्थः । चाक्षुषादेरप्युत्पत्त्या । सुरभिचन्दनम् सुरभिर्घट इति प्रत्यक्षो-त्पत्त्या । उक्तप्रयोगापत्तेरिति । चैत्रो घटं न पश्यतीति प्रयोगापत्तेरित्यर्थः । घट आकाशं न पश्यतीत्यत्र घटवृत्तित्वाऽऽकाशविषयकत्वोभयाभावभाने दोषान्तरमाह । आकाशादीति । भ्रमदशायामिति । आकाशनिरूपिताऽऽ-लौकिकविषयिताशालिवर्तमानचाक्षुषे प्रत्यक्षे घटवृत्तित्वस्य आकाशनिरूपित-लौकिकविषयिताशालित्वस्य भ्रमदशायामित्यर्थः । आश्रयत्वत्वाद्य-वच्छिन्ने । प्रत्यक्षाश्रयत्वे । अतः । प्रत्यक्षाश्रयत्वे एव उक्तत्रितयाभाव-भानात् । प्रत्यक्षे समवायेनाभाववृत्तित्वाभावस्याऽविवक्षणादिति यावत् । तथा च वर्तमानत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाश्रयत्वं आकाशविषयक-प्रतियोगिकत्व-लौकिकान्यविषयिताशून्यचाक्षुषप्रत्यक्षप्रतियोगिकत्व घटाद्यनुयो-गिकत्वैतत्त्रितयाभाववदिति घट आकाशं न पश्यतीति वाक्याद्बोधः । तत्र । घट आकाशं न पश्यतीत्यत्र । विषयितावदिति । विषयिताश्रयेत्यर्थः । निरस्तमिति । वर्तमानत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाश्रयत्वे लौकिका-न्यविषयिताशून्यचाक्षुषप्रत्यक्षप्रतियोगिकत्वविरहप्रयुक्तोक्तत्रितयाभावसत्वाच्चै-त्रस्य प्रत्यक्षदशायामपि चैत्रोघटं न पश्यतीति प्रयोगापत्तिर्दुर्वारैवेत्यर्थः ।

इति द्वितीया प्रथमखण्डः ।

## पातञ्जलयोगदर्शन :-

व्यासभाष्य, तत्ववैशारदी तथा योगवार्तिक सहित-सम्पादक श्रीनारायण मिश्र, प्राध्यापक, संस्कृत विभाग, फैक्लटी आफ आर्टस्, काशी हिन्दू विश्वविद्यालय, वाराणसी।

पातंजलयोगसूत्र का सर्वतंत्रस्वतंत्र श्री वाचस्पतिमिश्र विरचित तत्ववैशारदा तथा विज्ञानभिक्षुकृत योगवातक सहित व्यासभाष्य कई वर्षो से अनुपलब्ध था।

विद्वान् प्रो० ने बड़ी कुशलता से इस ग्रन्थ का सम्पादन करके इसे प्रस्तुतं किया है इसबार व्यासभाष्य, तत्ववैशारदीय के साथ-साथ विज्ञानभिक्षु कृत योगवार्तिक को छाप कर न केवल पुस्तक की महत्ता को बढ़ा दिया है परन्तु विद्यार्थियों तथा विद्वानों को योगवार्तिक न मिलने के कारण जिन कठिनाईयों का अभाव था उसे भी पूरा कर दिया गया है हमें पूर्ण विश्वास है कि पाठकगण इस प्रस्तुत ग्रन्थ से पूरा लाभ उठायेंगे।

पुस्तकालय संस्करण २०.००
विद्यार्थी संस्करण १६.००

भारतीय विद्या प्रकाशन
पो० बा० १०८, कचौड़ी गली
वाराणसी-२२१००१ (भारत)